| अध्यायः | | | पृष्ठम् |
|---|---|---|---|
| | लोमशेन वैतरण्याः नद्याः प्रभाववर्णनम् | ... | ,, |
| | पाण्डवैः वैतरणीजलेन पितृसन्तर्पणम् | ... | ५८२ |
| | विश्वकर्मणा यज्ञे काश्यपाय भूदानम् | ... | ५८३ |
| | भूम्या स्वीयदानानङ्गीकारः | ... | ,, |
| | काश्यपेन भूमेः प्रसादनम् | ... | ,, |
| | लोमशेन युधिष्ठिरं प्रति भूम्यारोहणस्य फलकीर्तनम् | ... | ५८४ |
| ९१ | अकृतव्रणेन युधिष्ठिरं प्रति परशुरामचरितवर्णनम् | ... | ५८५ |
| | ऋचीकेन गाधिसुतायाः सत्यवत्याः परिणयनम् | ... | ५८७ |
| | भृगुणा स्नुषायै वरप्रदानम् | ... | ५८८ |
| | भृगुणा सत्यवत्यै तन्मात्रे च पुत्रोत्पत्त्यै वृक्षभेदेनालिङ्गनोपदेशः | ... | ,, |
| | भृगुणा वृक्षविपर्ययेणालिङ्गितवत्योः सत्यवतीतन्मात्रोः व्यत्यस्तपुत्रोत्पत्तिनिरूपणम् | ... | ,, |
| | जमदग्न्युत्पत्तिः | ... | ५८९ |
| ९२ | रेणुकया चित्ररथे व्यभिचरणम् | ... | ५९० |
| | जमदग्निना रेणुकायां व्यभिचारदर्शनम् | ... | ५९१ |
| | जमदग्निना पुत्रेषु शापदानम् | ... | ,, |
| | जमदग्निनियोगात् रामेण परशुना कण्ठच्छेदनम् | ... | ५९२ |
| | जमदग्निना रामं प्रति मात्रादिपुनरुज्जीवनवरप्रदानम् | ... | ,, |
| | जमदग्न्याश्रमे कार्तवीर्येण गोवत्सापहरणपूर्वकं तदाश्रमपीडनम् | ... | ,, |
| | परशुरामेण कार्तवीर्यार्जुनहननम् | ... | ५९३ |
| | कार्तवीर्यार्जुनदायादैः जमदग्निहननम् | ... | ,, |
| ९३ | परशुरामेण पितृवधामर्षात् सर्वक्षत्रियहननप्रतिज्ञा | ... | ५९४ |
| | परशुरामेण सर्वक्षत्रियहननपूर्वकं तद्रुधिरैरेव पितृसन्तर्पणम् | | ५९५ |
| | परशुरामपूजापुरस्सरं युधिष्ठिरेण महेन्द्रशैलात् दक्षिणदिगागमनम् | ... | ५९६ |
| ९४ | युधिष्ठिरेण पुण्यतीर्थगमनम् | ... | ,, |

| अध्यायः | | पृष्ठम् |
|---|---|---|
| | युधिष्ठिरेण प्रभासतीर्थगमनम् ... | ६०० |
| | युधिष्ठिरेण सहानुजैः पत्न्या च प्रभासतीर्थे तपश्चरणम् ... | ,, |
| | वृष्णिभिः पाण्डवानां दुर्दशानुशोचनम् ... | ,, |
| ९५ | बलरामेण भीष्मादिगर्हणपूर्वकं पाण्डवान् प्रति शोचनम् | ५०२ |
| ९६ | सात्यकिना दुर्योधनादिहननपूर्वकं पाण्डवानां वनवास-समापनादर्वागेवाभिमन्यो राज्येऽभिषेचनोक्तिः ... | ६०७ |
| | भगवता युधिष्ठिरस्य धर्माभिरुचिकथनम् ... | ६१२ |
| | युधिष्ठिरेण युद्धकालं प्रतीक्ष्य भगवदादिसाहाय्यवरणम् | ६१३ |
| | युधिष्ठिरेण भगवत्प्रमुखानां विसर्जनपूर्वकं पुनस्तीर्थान्त-रगमनम् ... | ६१४ |
| ९७ | गयकृतयागवर्णनम् ... | ,, |
| | च्यवनेन शर्यातियाजनकथनम् ... | ६१७ |
| ९८ | सुकन्योपाख्यानम् ... | ६१८ |
| |ससैन्येन शर्यातिना च्यवनाश्रमगमनम् ... | ६१८ |
| | सुकन्यया तपश्चरति च्यवने वल्मीकदर्शनम् ... | ६२० |
| | च्यवनेन शर्यातिं प्रति सुकन्याया वरणम् ... | ६२१ |
| | शर्यातिना च्यवनाय सुकन्याप्रतिपादनम् ... | ,, |
| ९९ | अश्विभ्यां सुकन्यायां सल्लापः ... | ६२२ |
| | अश्विभ्यां सुकन्यां प्रति च्यवनस्य रूपसम्पन्नयुवत्वकरणा-भ्यनुज्ञानपूर्वकमन्यतरस्मिन् पतित्वयाचनकथनम् | ६२४ |
| | अश्विनोर्नियोगात् रूपार्थिनः च्यवनस्य जलप्रवेशः ... | ६२५ |
| | अम्भसः उत्तीर्णेषु च्यवनाश्विषु त्रिषु रूपादिसम्पन्नेषु सुकन्यया च्यवनस्यैव पतित्वेन वरणम् ... | ,, |
| | च्यवनेनाश्विनोः वरप्रदानम् ... | ,, |
| १०० | शर्यातिना च्यवनाश्रमाभिगमनम् ... | ६२६ |
| | च्यवनेन शर्यातेर्याजनम् ... | ,, |
| | च्यवनेनाश्विभ्यां सोमरसदानोद्यमे कृते तद्धननायेन्द्रेण वज्रोद्यमनम् ... | ६२८ |
| | च्यवनविसृष्टया कृत्यया इन्द्रं प्रत्यभिसरणम् ... | ६२९ |

| अध्यायः | | | पुटम् |
|---|---|---|---|
| | इन्द्रेण च्यवनस्य प्रसादोत्पादनम् | ... | ६३० |
| | च्यवनेन मदस्य स्त्र्यादिषु विभजनम् | ... | ,, |
| | लोमशेन पुनस्तीर्थमहिमानुवर्णनम् | ... | ६३१ |
| १०१ | लोमशेन मान्धातृचरित्रवर्णनम् | ... | ६३२ |
| | लोमशेन मान्धातृपदप्रवृत्तिनिमित्तकथनम् | ... | ६३६ |
| १०२ | लोमशेन सोमकचरित्रवर्णनम् | ... | ६३९ |
| | सोमकेन जन्तुनामकपुत्रोत्पादनम् | ... | ,, |
| | जन्तुनामकपुत्रेण पिपीलिकादंशनेन रोदनम् | ... | ६४० |
| | सोमकेन ऋत्विजं प्रति बहुपुत्रोत्पादनोपायप्रश्नः | ... | ,, |
| | ऋत्विजा सोमकं प्रति बहुपुत्रोत्पत्त्युपायकथनम् | ... | ६४१ |
| | सोमकेन जन्तुनामकपुत्रवपाहोमेन पुत्रशतोत्पत्तिः | ... | ६४२ |
| | सोमकेन नरके पच्यमानस्य ऋत्विजः स्वीयसुकृतफलप्रदानम् | ... | ६४३ |
| १०३ | लोमशेन ऋत्विगाश्रमे अम्बरीषादीनां यज्ञफलकथनम् | ... | ६४५ |
| १०४ | लोमशेन सरस्वतीनदीमहिमानुवर्णनम् | ... | ६४८ |
| १०५ | श्येनकपोतोपाख्यानम् | ... | ६५१ |
| | श्येनेन कपोताद्रक्षणाय शिबिं प्रति शरणागतिः | ... | ,, |
| | श्येनेन शिबिं प्रति आहाराय कपोतविसर्जनप्रार्थनम् | ... | ६५३ |
| | श्येनप्रार्थितेन शिबिना स्वशरीरोत्कृत्तमांसस्य कपोतसाम्याय तुलायामारोपणम् | ... | ६५५ |
| | शिबिना कपोतस्य गौरवेण तुलायां स्वयमारोहणम् | ... | ,, |
| | श्येनकपोताकृतिभ्यामिन्द्राग्निभ्यां शिबिप्रशंसनपूर्वकं स्वलोकगमनम् | ... | ,, |
| १०६ | लोमशेन श्वेतकेतोराश्रमेऽष्टावक्रोपाख्यानकथनम् | ... | ६५६ |
| १०७ | जनकयज्ञशालां विविक्षोरष्टावक्रस्य द्वारपालेन निरोधः | ... | ६६२ |
| | अष्टावक्रद्वारपालयोस्संवादः | ... | ६६३ |
| | अष्टावक्रेण प्रश्नोत्तरकथनपूर्वकं राजानुमत्या सभाप्रवेशः | ... | ६६७ |
| १०८ | अष्टावक्रेण वादे वन्दिनः पराजयः | ... | ६६९ |

| अध्यायः | | पृष्ठम् |
|---|---|---|
| १०९ | अष्टावक्रेण ब्राह्मणेषु जलादुत्तीर्णेषु सत्सु स्वपितृमातुलाभ्यां सह स्वाश्रमगमनम् ... | ६७५ |
| ११० | यवक्रीतोपाख्यानम् ... | ६७९ |
| | यवक्रीतेन विनैवोपदेशं वेदाधिगमायेन्द्रं प्रति तपश्चरणम् | ६८१ |
| | इन्द्रेण गुरोर्मुखाद्वेदोपदेशमसहमानेन यवक्रीतेनेन्द्रं प्रति पुनः दुश्चरतपश्चरणम् ... | ६८२ |
| | भरद्वाजेन यवक्रीतं प्रति रैभ्यपीडाप्रतिषेधाय वालध्युपाख्यानकथनम् ... | ६८५ |
| १११ | यवक्रीतेन रैभ्यस्नुषायां सम्भोगः ... | ६८८ |
| | रैभ्येण यवक्रीतहननाय जटाभ्यां कृत्यारक्षसोस्सर्जनम् ... | ६८९ |
| | कृत्यया द्रावितेन यवक्रीतेन स्वपितुरग्निहोत्रगृहप्रवेशः ... | ,, |
| | राक्षसेन यवक्रीतस्य हननम् ... | ,, |
| ११२ | भरद्वाजेन पुत्रवधेन विलापः ... | ६९१ |
| | भरद्वाजेन रैभ्यस्य तज्ज्येष्ठपुत्रेण हननरूपशापदानम् ... | ६९२ |
| ११३ | बृहद्युम्नसत्रं प्रत्यर्वावसुपरावस्वोर्गमनम् ... | ६९३ |
| | परावसुना मृगभ्रमेण कृष्णाजिनसंवीतस्य स्वपितू रैभ्यस्य हननम् ... | ,, |
| | बृहद्युम्नचोदनयाऽर्वावसुना तपःप्रसादितेभ्यः देवेभ्यो वरविशेषग्रहणम् ... | ६९५ |
| | यवक्रीतेन विनोपदेशं वेदाधिगमः रैभ्यादीनामुज्जीवनं च | ६९६ |
| ११४ | युधिष्ठिरेण कैलासादिगिरिप्रवेशः ... | ६९७ |
| ११५ | भीमेन दुर्गमे पथि गमनाक्षमाणां द्रौपद्यादीनां वहनाङ्गीकारः | ७०० |
| | युधिष्ठिरादिभिः गन्धमादनं प्रति गमनम् ... | ७०३ |
| ११६ | युधिष्ठिरेणार्जुनदर्शनाय गन्धमादनप्रवेशनिश्चयः ... | ७०४ |
| ११७ | गन्धमादनं प्रस्थितेषु पाण्डवेषु मध्येमार्गं महावृष्टेरुद्भवः | ७०८ |
| | पादपाद्यन्तरितैः पाण्डवैः वृष्ट्युपरमे पुनः प्रस्थानम् ... | ७१० |
| ११८ | पथि मूर्छितायाः द्रौपद्याः पाण्डवैः सलिलसेचनादिना श्रमापनोदनम् ... | ७११ |

| अध्यायः | | पृष्ठम् |
|---|---|---|
| | युधिष्ठिरेण पथि श्रान्तां द्रौपदीं प्रति चिन्तनम् ... | ७१२ |
| | धौम्यादिकरस्पर्शेन द्रौपद्याः श्रमापगमः ... | ७१३ |
| | भीमसेनेन युधिष्ठिरं प्रति स्वेन वा घटोत्कचेन वा द्रौपदीवहनोक्तिः ... | ७१४ |
| ११९ | भीमेन घटोत्कचस्मरणम् ... | ,, |
| | भीमस्मरणसन्निहितेन घटोत्कचेन द्रौपद्या वहनम् ... | ७१५ |
| | घटोत्कचानुचरैः पाण्डवानां वहनम् ... | ७१६ |
| | पाण्डवैर्नरनारायणाश्रममेत्य सुखेन वासः ... | ७२० |
| १२० | द्रौपद्या सौगन्धिकपुष्पदर्शनम् ... | ७२१ |
| | भीमसेनेन द्रौपदीनियोगात् सौगन्धिकपुष्पाहरणाय गमनम् | ७२३ |
| | भीमस्य हनूमता सह संवादः ... | ७३१ |
| १२१ | हनूमता भीमं प्रति स्ववालोद्धरणेन गमनचोदना ... | ७३५ |
| | हनूमत्पुच्छचालनेऽप्यसमर्थेन भीमेन हनूमन्तं प्रति तत्प्रभवादिप्रश्नः ... | ७३६ |
| | हनूमता स्वप्रभवादिकथनपूर्वकं श्रीरामकथनारम्भः ... | ,, |
| १२२ | हनूमता भीमं प्रति समग्ररामकथाकथनम् ... | ७३७ |
| १२३ | भीमेन हनूमन्तं प्रति पृथुरूपप्रदर्शनप्रार्थनम् ... | ७४० |
| | हनूमता भीमं प्रति विश्वरूपप्रदर्शनस्य कालवैरूप्यप्रदर्शनम् | ७४१ |
| | हनूमता कृतादियुगधर्मप्रतिपादनम् ... | ,, |
| १२४ | भीमेन समुद्रतरणकालिकपृथुरूपप्रदर्शनं सनिर्बन्धं प्रार्थितेन हनूमता निजरूपप्रदर्शनम् ... | ७४६ |
| १२६ | सौगन्धिकसरो विविक्षुं भीमं प्रति क्रोधवशनामभीराक्षसैस्तच्चिकीर्षितप्रश्नः ... | ७५६ |
| १२७ | राक्षसैः भीमं प्रति सौगन्धिकाहरणे भयोत्पादनम् ... | ७५८ |
| | भीमेन राक्षसान् प्रति धैर्येण कथनपूर्वकं सरोऽवगाहनम् | ७६० |
| | भीमेन गदया राक्षसानां हननम् ... | ७६१ |
| | भीमेन सौगन्धिकपुष्पाहरणम् ... | ७६२ |
| | राक्षसैः कुबेरं प्रति भीमवृत्तकथनम् ... | ,, |

| अध्यायः | | पुटम् |
|---|---|---|
| | कुबेरेण भीमकृतस्य पुष्पाहरणस्याभ्यनुज्ञानम् ... | ७६२ |
| | युधिष्ठिरेण द्रौपदीं प्रति भीमाभिगतदेशप्रश्नः ... | ७६३ |
| | युधिष्ठिरेण घटोत्कचसाहाय्येन भीमाभिगतदेशगमनम् ... | ७६५ |
| १२९ | युधिष्ठिरेणाकाशवाणीश्रवणात् सपरिवारं नरनारायणाश्रमगमनम् ... | ७६८ |
| १३० | जटासुरेण भीमासन्निधाने युधिष्ठिरादीनामपहरणम् ... | ७७१ |
| | भीमेन जटासुरस्य मारणम् ... | ७७५ |

॥ आरण्यपर्वणि प्रथमसम्पुटविषयानुक्रमणिका समाप्ता ॥

॥ श्रीः ॥

# ॥ महाभारतम् ॥

## ॥ आरण्यपर्व ॥

(आरण्यकपर्व)

### ॥ प्रथमोऽध्यायः ॥

द्यूतजितानां पाण्डवानां द्रौपद्या सह वनं प्रति प्रस्थानम् ॥१॥ तदनु पौरैर्दुर्योधनगर्हणपूर्वकं पाण्डवैस्सहारण्यवासेच्छया तदनुगमनम् ॥ २ ॥ युधिष्ठिरेण प्रार्थनया तेषां पुरं प्रति निवर्तनपूर्वकं सायं गङ्गातीरगवटमेत्य तत्रानुगतब्राह्मणैस्सह सुखेन रात्रियापनम् ॥ ३ ॥

जनमेजयः—

एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैस्सहामात्यैर् निकृत्या द्विजसत्तम ॥ १

श्राविताः परुषा वाचस् सृजद्भिर्वैरमुत्तमम् ।
किमकुर्वत कौरव्या मम पूर्वपितामहाः ॥ २

कथमैश्वर्यभूयिष्ठास् सहसा दुःखमेयुषः ।
वने विजह्रिरे पार्थाश् शक्रप्रतिमतेजसः ॥ ३

के चैनानन्ववर्तन्त प्राप्तान व्यसनमुत्तमम् ।
किमाहाराः किमाचाराः क्व च वासो महात्मनाम् ॥ ४
कथं द्वादश वर्षाणि वने तेषां महात्मनाम् ।
व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामनिवर्तिनाम् ॥ ५
कथं च राजपुत्री सा प्रवरा सर्वयोषिताम् ।
पतिव्रता महाभागा सततं सत्यवादिनी ॥ ६
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत ॥ ६॥
एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन ॥ ७
श्रोतुमिच्छामि चरितं भूरिद्रविणतेजसाम् ।
कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ॥ ८

वैशम्पायनः—
एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैस्सहामात्यैर् निर्ययुर्गजसाह्वयात् ॥ ९
वर्धमानपुरद्वाराद् अभिनिष्क्रम्य ते तदा ।
उदङ्मुखाश्शस्त्रभृतः प्रययुस्सह कृष्णया ॥ १०
इन्द्रसेनादयश्चैतान भृत्याः परिचतुर्दश ।
रथैरनुययुश्शीघ्रैस् स्त्रिय आदाय सर्वशः ॥ ११
ततस्ते पुरुषव्याघ्रा रथानास्थाय भारत ।
ददृशुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥ १२

व्रजतस्तान् विदित्वा तु पौराश्शोकसमन्विताः ।
गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान् ॥ १२

ऊचुर्वै समयं कृत्वा समागम्य परस्परम् ॥ १३॥

पौराः—

नेदमस्ति कुलं कृत्स्नं न वयं न च नो गृहाः ।
यत्र दुर्योधनः पापस् सौबलेयेन पालितः ॥ १४॥

कर्णदुश्शासनाद्यैश्च राज्यमेतच्चिकीर्षति ॥ १५

[1]न तत् कुलं न चाचारो न धर्मोऽर्थः कुतस्सुखम् ।
यत्र पापसहायोऽयं पापो राज्यं बुभूषते ॥ १६

दुर्योधनो गुरुद्वेषी त्यक्तधर्मः प्रियानृतः ।
अर्थलुब्धोऽतिमानी च नीचः प्रकृतिनिर्घृणः ॥ १७

नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः ।
साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः ॥ १८

सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः ।
ह्रीमन्तः कीर्तिमन्तश्च धर्माचारपरायणाः ॥ १९

वैशम्पायनः—

एवमुक्त्वाऽनुजग्मुस्तान् पाण्डवांस्ते समेत्य च ।
ऊचुः प्राञ्जलयस्सर्वे तान् कुन्तीमाद्रिनन्दनान् ॥ २०

---

1. क—नास्तीदमर्धम्

पौराः—

क गमिष्यथ भद्रं वस् त्यक्त्वाऽस्मान् दुःखभागिनः ।
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ २१

अधर्मेण जिताञ्श्रुत्वा युष्मांस्त्यक्तघृणैः परैः ।
उद्विग्नास्स्मो भृशं सर्वे नास्मान् हातुमिहार्हथ ॥ २२

भक्तानुरक्तास्सुहृदस् सदा प्रियहिते रताः ।
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ २३

श्रूयतां चाभिधास्यामो गुणदोषान् नराधिपाः ।
शुभाशुभाधिवासेन संसर्गं कुरुते यथा ॥ २४

वस्त्रमम्भस्तिलान् भूमिं गन्धो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ २५

मोहजालस्य योनिर्हि मूढैरेव समागमः ।
अहन्यहनि धर्मस्य योनिस्साधुसमागमः ॥ २६

तस्मात् प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ।
सद्भिश्च सह संसर्गः कार्यश्शमपरायणैः ॥ २७

येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च ।
ते सेव्यास्तैस्समास्या हि शास्त्रेभ्योऽपि विशिष्यते ॥ २८

निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु ।
पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ॥ २९

असतां दर्शनात् स्पर्शात् सम्भाषणसहासनात् ।
धर्माचाराः प्रहीयन्ते न च सिद्ध्यन्ति मानवाः ॥　　३०

बुद्धिश्च हीयते पुंसां नीचैस्सह समागमात् ।
मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥　　३१

ये गुणाः कीर्तिता लोके धर्मकामार्थसम्भवाः ।
लोकाचाराच्च सम्भूता वेदोक्ताश्शिष्टसम्मताः ॥　　३२

ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः ।
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोभिकाङ्क्षिणः ॥　　३३

युधिष्ठिरः—

धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः ।
असतोऽपि गुणानाहुर् ब्राह्मणप्रमुखाः प्रजाः ॥　　३४

तदहं भ्रातृसहितस् सर्वान् विज्ञापयामि वः ।
नान्यथा तद्धि कर्तव्यम् अस्मत्स्नेहानुकम्पया ॥　　३५

भीष्मः पितामहो राजा जननी विदुरश्च मे ।
सुहृज्जनश्च वा यो मे नगरे नागसाह्वये ॥　　३६

ते ह्यस्मद्धितकामार्थं पालनीयाः प्रयत्नतः ।
युष्माभिस्सहितैस्सर्वैश् शोकसन्तापविह्वलैः ॥　　३७

निवर्तध्वं गता दूरं ममागमनकाङ्क्षिणः ।
स्वजनो न्यासभूतो मे कार्या स्नेहान्विता मतिः ॥　　३८

एताद्धि मम कार्याणां परमं हृदि संस्थितम् ।
सुकृता तेन मे तुष्टिस् सत्कारश्च भविष्यति ॥ ३९

वैशम्पायनः—

तथाऽनुमन्त्रितास्तेन ता वै राजन् प्रजास्तथा ।
चक्रुरार्तस्वरं सर्वा हा राजन्निति दुःखिताः ॥ ४०

गुणान् पार्थस्य संस्मृत्य दुःखार्ताः परमातुराः ।
अकामास्संन्यवर्तन्त समागम्याथ पाण्डवैः ॥ ४१

विनिवृत्तेषु पौरेषु रथानास्थाय पाण्डवाः ।
प्रजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥ ४२

ततो दिवसशेषेण वटं गत्वा तु पाण्डवाः ।
ऊषुस्तां रजनीं वीरास् संस्पृश्य सलिलं शुचि ॥ ४३

उदकेनैव तां रात्रिम् ऊषुस्ते दुःखकर्शिताः ।
अनुजग्मुश्च तत्रैतान् स्नेहात् केचिद्द्विजातयः ॥ ४४

साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः ।
स तैः परिवृतो राजा [1]शुशुभे ब्रह्मवादिभिः ॥ ४५

तेषां प्रादुष्कृताग्नीनां मुहूर्ते रम्यदारुणे ।
ब्रह्मघोषपुरस्कारस् सञ्जल्पस्समजायत ॥ ४६

राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वराः ।

---

1. अ-क-घ—शुश्रूपुर्

आश्वासयन्तो विप्रेन्द्राः क्षपां सर्वां व्यनोदयन् ॥ ४७

राजा तु भ्रातृभिस्सार्धं तथा सर्वैस्सुहृद्गणैः ।
अशेत तां निशां राजन् दुःखशोकसमाहितः ॥ ४८

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि प्रथमोऽध्यायः ॥ १ ॥

॥ २९ ॥ आरण्यकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये ४८ श्लोकाः ]

---

## ॥ द्वितीयोऽध्यायः ॥

---

युधिष्ठिरेण वने स्वानुयायिनो ब्राह्मणान् प्रति स्वस्य हृतसर्वस्वतया तद्भरणस्य दुष्करत्वकथनपूर्वकं प्रतिनिवर्तनप्रार्थना ॥ १ ॥ ब्राह्मणैः स्वयमेवात्मभरणपूर्वकं स्वसहवासमालेऽर्थिते युधिष्ठिरेण स्वस्य तद्भरणाशक्तिचिन्तनेन विषादाधिगमः ॥ २॥ शौनकेन युधिष्ठिरं प्रति ब्राह्मणभरणाय तपसा सिद्धिसम्पादनचोदना ॥ ३ ॥

---

वैशम्पायनः—

प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम् ।
वनं यियासतां विप्रास् तस्थुर्भिक्षाभुजोऽग्रतः ॥ १

तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १॥

युधिष्ठिरः—

वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं यास्याम दुःखिताः ॥ २॥

वनं च दोषबहुलं बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥ ३॥

ब्राह्मणानां तु सङ्क्लेशो दैवतान्यपि सादयेत् ।
किं पुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ॥ ४॥

ब्राह्मणाः—

गतिर्या भवतां राजंस् तां वयं गन्तुमुद्यताः ।
नार्हथास्मान् परित्यक्तुं भक्तान् सद्धर्मदर्शिनः ॥ ५॥

स्नेहकर्माणि भक्तेषु दैवतान्यपि कुर्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ ६॥

युधिष्ठिरः—

ममापि परमा भक्तिर् ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस् त्वयं सादयतीव माम् ॥ ७॥

आहरेयुर्हि ये सर्वे फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर् भ्रातरो मे विमोहिताः ॥ ८॥

द्रौपद्या विप्रकर्षेण राज्यापहरणेन च ।
दुःखान्वितानिमान् क्लेशैर् नाहं योक्तुमिहोत्सहे ॥ ९॥

ब्राह्मणाः—

अस्मत्पोषणजा चिन्ता मा भूत् ते हृदि पार्थिव ।
स्वयमाहृत्य वन्यानि ह्यनुयास्यामहे वयम् ॥ १०॥

अनुध्यानेन जप्येन विधास्यामःशिवं तव ।

कथाभिश्चानुकूलाभिस् सह रंस्यामहे वने ॥　　　११॥

युधिष्ठिरः—

एवमेतन्न संदेहो रमेयं ब्राह्मणैस्सह ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥　　　१२॥

कथं द्रक्ष्यामि वस्सर्वान् स्वयमाहृतभोजनान् ।
मद्भक्तान क्लिश्यतोऽनर्हान् धिक् पापान् धृतराष्ट्रजान् ॥१३॥

वैशम्पायनः—

इत्युक्त्वा नृपतिश्शोचन् निषसाद महीतले ॥　　　१४

तमध्यात्मरतो विद्वाञ्शौनको नाम वै द्विजः ।
योगे साङ्ख्ये च कुशलो राजानमिदमब्रवीत् ॥　　　१५

शौनकः—

शोकस्थानसहस्राणि [1]भयस्थानशतानि च ।
दिवसे दिवसे मूढम् आविशन्ति न पण्डितम् ॥　　　१६

न हि ज्ञानविरुद्धेषु बहुपायेषु कर्मसु ।
श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥　　　१७

अष्टाङ्गां बुद्धिमाहुर्या सर्वाश्रेयोभिघातिनीम् ।
श्रुतिस्मृतिसमायुक्तां सा राजंस् त्वय्यवस्थिता ॥　　　१८

अर्थकृच्छ्रेषु दुःखेषु व्यापत्सु स्वजनेष्वपि ।
शारीरे मानसे चैव न सीदन्त्यसुखे बुधाः ॥　　　१९

1. अ-क—हर्ष

श्रूयतां चाभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरा गीताश्श्लोका महात्मना ॥ २०

मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ॥ २१

व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
एतच्चतुर्भिश्शारीरं कारणैस्सम्प्रवर्तते ॥ २२

तदाशुप्रतिकाराच्च सततं चाविचिन्तनात् ।
आधिव्याधिप्रशमनं क्रियायोगबलेन च ॥ २३

मतिमन्तो व्यथोपेताश् शमं प्रायेण कुर्वते ॥ २३॥
मानसाख्यं प्रियाख्यानात् सम्भोगोपनयैर्नृणाम् ।
मानसेनैव दुःखेन शरीरमुपतप्यते ॥ २४॥
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ।
मानसं शमयेत्तस्माज् ज्ञानेनाग्निमिवाम्बुना ॥ २५॥
प्रशान्ते मानसे दुःखे शारीरमुपशाम्यति ॥ २६

मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तुर् दुःखयोगमुपैति च ॥ २७

स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथाऽऽयासः स्नेहात् सर्वं प्रवर्तते ॥ २८

स्नेहात् कारुण्यरागौ च प्रजास्वीर्ष्यादयस्तथा ।

अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुस्स्मृतः ॥ २९

कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् ।
[1]धर्मार्थिनं तथाऽल्पोऽपि रागदोषो विनाशयेत् ॥ ३०

विप्रयोगे न तु त्यागी दोषदर्शी समागमात् ।
विरागं भजते जन्तुर् निर्वैरो निष्परिग्रहः ॥ ३१

तस्मात् स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसञ्चयात् ।
स्वशरीरसमुत्थं तु ज्ञानेन परिवर्जयेत् ॥ ३२

ज्ञानान्वितेषु मुख्येषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३३

रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा सञ्जायते तस्य ततस्तृष्णा प्रवर्तते ॥ ३४

तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ३५

या दुस्त्यजा दुर्मतिभिर् या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस् तां तृष्णां त्यजतस्सुखम् ॥ ३६

अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति सम्भूता अयोरज इवानलः ॥ ३७

यथाऽयः स्वसमुत्थेन वह्निना नाशमृच्छति ।

---

1. ख—इदमर्धं नास्ति

तथाऽकृतात्मा लोभेन सहजेन विनश्यति ॥ ३८

राजतस्सलिलादग्नेश् चोरतस्स्वजनादपि ।
[1]अर्थिभ्यः कालतस्तस्मान्नित्यमर्थवतां भयम् ॥ ३९

भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ३९॥

यथा ह्यामिषमाकाशे पक्षिभिश्श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस् तथा सर्वेण वित्तवान् ॥ ४०॥

अर्थ एव हि केषांचिद् अनर्थो भविता नृणाम् ।
अर्थे श्रेयसि चासक्तो न श्रेयो विन्दते नरः ॥ ४१॥

तस्मादर्थागमास्सर्वे मनोमोहविवर्धनाः ॥ ४२

कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ ४३

अर्थस्योपार्जने दुःखम् [2]आर्जितानां तु रक्षणे ।
नाशे दुःखं व्यये दुःखं घ्नन्ति चैवार्थकारणात् ॥ ४४

अर्था दुःखं परित्यक्तुं पालिताश्चापि ते सुखाः ।
दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत् ॥ ४५

असन्तोषपरा मूढास् सन्तोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायास् सन्तोषः परमं सुखम् ॥ ४६

तस्मात् संतोषमेवेह धनं पश्यन्ति पण्डिताः ॥ ४६॥

---

1. क-ख—नास्तीदमर्धम् । 2. क-ख—पालने च क्षये तथा

अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृद्ध्येदेषु न पण्डितः ॥ ४७॥

त्यजेत सञ्चयांस्तस्मात् तज्जं क्लेशं [1]सहैतुकम् ।
न हि सञ्चयवान् कश्चिद् दृश्यते निरुपद्रवः ॥ ४८॥

अतश्च धर्मिभिस्स[2]द्भिर् न चेहार्थः प्रशस्यते ।
प्रक्षालनाद्धि पङ्कस्य [3]दूरादस्पर्शनं वरम् ॥ ४९॥

युधिष्ठिरैवमर्थेषु न स्पृहां कर्तुमर्हसि ।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ॥ ५०॥

युधिष्ठिरः—

नास्मत्पोषणलिप्सार्थम् इयमर्थेप्सुता मम ।
भरणार्थं तु विप्राणां ब्रह्मन् काङ्क्षे न लोभतः ॥ ५१॥

कथं ह्यस्मद्विधो विप्र वर्तमानो गृहाश्रमे ।
भरणं पालनं चापि न कुर्यादनुयायिनाम् ॥ ५२॥

संविभागो हि भूतानां सर्वेषामेव शिष्यते ।
[4]तथैव याचमानेभ्यः प्रदेयं गृहमेधिना ॥ ५३॥

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ५४॥

---

1. क—सहेत कः; ख-घ—सहेतुकः 2. क-ख—भिः पुम्भिरनीहार्थः
3. अ-क-घ—श्रेयोह्यस्पर्शनं नृणाम् 4. घ—तथैवापचमानेभ्यः

देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ५५॥

चक्षुर्दद्यान्मनो दद्याद् वाचं दद्याच्च सूनृताम् ।
प्रत्युद्गम्याभिगमनं कुर्यान्न्यायेन चार्चनाम् ॥ ५६॥

अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः ।
पुत्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः ॥ ५७॥

आत्मार्थं न पचेदन्नं न वृथा घातयेत् पशुम् ।
न चैकस्स्वयमश्नीयाद् विधिवर्जं न निर्वपेत् ॥ ५८॥

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामेदं सायं प्रातर्विधीयते ॥ ५९॥

विघसाशी भवेत् तस्मान्नित्यं चामृतभोजनः ।
विघसं भृत्यशेषं तु यज्ञशेषं तथाऽमृतम् ॥ ६०॥

एतां यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ॥ ६१॥

शौनकः—

अहो बत महत् कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुर् असाधुस्तेन तुष्यति ॥ ६२॥

शिश्नोदरकृते चाज्ञो विघसं कुरुते बहु ।
मोहरागसमाक्रान्त इन्द्रियार्थवशानुगः ॥ ६३॥

ह्रियते बुध्यमानोऽपि मनो हारिभिरिन्द्रियैः ।
विमूढसंज्ञो दुष्टाश्वैर् उद्भ्रान्त इव सारथिः ॥ ६४॥

षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा ।
तदा प्रादुर्भवत्येषां पूर्वसङ्कल्पजं मनः ॥ ६५॥

मनो यस्येन्द्रियग्रामविषयं प्रति चोदितम् ।
तस्यौत्सुक्यं सम्भवति प्रवृत्तिश्चोपजायते ॥ ६६॥

ततस्सङ्कल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात् पतङ्गवत् ॥ ६७॥

ततो दारैर्विहारैश्च मोहितश्च विशाम्पते ।
महामोहमुखे मग्नो नात्मानमवबुध्यते ॥ ६८॥

एवं पतति संसारे तासु तास्विह योनिषु ।
अविद्याकर्मतृष्णाभिर् भ्राम्यमाणोऽथ चक्रवत् ॥ ६९॥

ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्तते ।
जले भुवि तथाऽऽकाशे जायमानः पुनः पुनः ॥ ७०॥

अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु ॥ ७१
ये धर्मे श्रेयसि रता विमोक्षरतयो नराः ॥ ७१॥

तदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्मात् सर्वानिमान् धर्मान् नाभिमानात् समाचरेत् ॥ ७२॥

इज्याध्ययनदानानि तपस्सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधस्स्मृतः ॥ ७३॥

अत्र पूर्वश्चतुर्भागः पितृयाणपथे हितः ।
कर्तव्यमिति यत् कार्यं नाभिमानात् समाचरेत् ॥ ७४॥

उत्तरं देवयानं तु सद्भिराचरितं तथा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ७५॥

सम्यक्सङ्कल्पयोगाच्च सम्यक्चोन्द्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक् च गुरुसेवनात् ॥ ७६॥

सम्यगाहारयोगाच्च सम्यक् चाध्ययनागमात् ।
सम्यक् कर्मोपसंन्यासात् सम्यक् चित्तनिरोधनात् ॥ ७७॥

एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ।
[1]रागद्वेषविनिर्मुक्ता ऐश्वर्यवशमागताः ॥ ७८॥

रुद्रास्साध्यास्तथाऽऽदित्या वसवोऽथाश्विनावपि ।
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ॥ ७९॥

तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥ ८०॥

पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥ ८१॥

---

1. ख—इदमर्धं नास्ति

सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहम् ।
तस्मात् तपस्समास्थाय कुरुष्वात्ममनोरथम् ॥　　　८२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
॥ २९ ॥ आरण्यकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ८२॥ श्लोकाः ]

## ॥ तृतीयोऽध्यायः ॥

युधिष्ठिरेण ब्राह्मणभरणाय धौम्यचोदनया सूर्यस्तुतिः ॥ १ ॥ स्तोत्रैः प्रसन्नेन सूर्येण युधिष्ठिरायाक्षयपात्रदानम् ॥ २ ॥

वैशम्पायनः—
शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः ।
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् ॥　　　१

युधिष्ठिरः—
प्रस्थितानन्[1]यातान् नो ब्राह्मणान् वेदपारगान् ।
न चास्मि पालने शक्तो बहुदुःखसमन्वितः ॥　　　२

परित्यक्तुं न शक्नोमि दानशक्तिश्च नास्ति मे ।
कथमत्र मया कार्यं भगवंस्तद्ब्रवीहि मे ॥　　　३

वैशम्पायनः—
मुहूर्तं मनसा ध्यात्वा धर्मेणान्वीक्ष्य तां गतिम् ।

1. अ-क-घ-यातारो

युधिष्ठिरमुवाचेदं धौम्यो धर्मभृतां वरः ॥ ४

धौम्यः—

पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम् ॥ ४॥

ततोऽनुकम्पया तेषां सविता स्वपिता इव ।
गत्वोत्तरायणं तेजो लोकानुद्धृत्य रश्मिभिः ॥ ५॥

दक्षिणायनमावृत्तो महीं वर्षति वारिभिः ॥ ६

क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीपतिः ।
रवेस्तेजस्समुद्धृत्य जनयामास वारिणा ॥ ७

निषिक्तश्चन्द्रतेजोभिस् सूयते जगतो रविः ।
ओषध्यष्षड्रसा मेध्यास् तदन्नं प्राणिनां भुवि ॥ ८

एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् ।
नाथोऽयं सर्वभूतानां तस्मात्तं शरणं व्रज ॥ ९

राजानो हि महात्मानो योनिकर्मविशोधिताः ।
उद्धरन्ति प्रजास्सर्वास् तप आस्थाय पुष्कलम् ॥ १०

भौमेन कार्तवीर्येण वैन्येन नहुषेण च ।
तपोयोगसमाधिस्थैर् उद्धृता ह्यापदः प्रजाः ॥ ११

तथा त्वमपि कौन्तेय कर्मणा च विशोधितः ।
तप आस्थाय धर्मेण द्विजातीन् भर कौरव ॥ १२

वैशम्पायनः—

एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः ।
[1]धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ॥ १३

पुष्पोपहारैर्बलिभिर् अर्चयित्वा दिवाकरम् ।
योगमास्थाय धर्मात्मा वायुभक्षो जितेन्द्रियः ॥ १४

गाङ्गेयं वार्युपस्पृश्य प्राणायामेन तस्थिवान् ॥ १४॥

ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ।
दीप्यमानस्स्ववपुषा ज्वलन्निव हुताशनः ॥ १५॥

आदित्यः—

यत्तेऽभिलषितं राजन् सर्वमेतदवाप्स्यसि ।
अहमन्नं प्रदास्यामि नव वर्षाणि त्रीणि च ॥ १६॥

फलमूलामिषं शाकं संस्कृतं यन्महानसे ।
गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ॥ १७॥

यावद्वाञ्छति पाञ्चाली पात्रेणानेन सुव्रता ।
चतुर्विधं तदन्नाद्यम् अक्षय्यं ते भविष्यति ॥ १८॥

धनं च विविधं तुभ्यम् इत्युक्त्वान्तरधीयत ॥ १९

वैशम्पायनः—

लब्ध्वा वरं तु कौन्तेयो जलादुत्तीर्य धर्मवित् ।
जग्राह पादौ धौम्यस्य भ्रातॄंश्चास्वजताच्युतः ॥ २०

---

1. क—नास्तीदमर्धम्

द्रौपद्या सह सङ्गम्य पश्यमानोऽपचात् प्रभुः ।
महानसे तदाऽन्नं तु साधयामास पाण्डवः ॥ २१

संस्कृतं प्रसवं याति वन्यमन्नं चतुर्विधम् ।
अक्षय्यं वर्धते चान्नं तेनाभोजयत द्विजान् ॥ २२

भुक्तवत्स्वथ विप्रेषु भोजयित्वाऽनुजानपि ।
शेषं विघससंज्ञं तु पश्चाद्भुङ्क्ते युधिष्ठिरः ॥ २३

युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ॥ २३॥

एवं दिवाकरात् प्राप्य दिवाकरसमद्युतिः ।
कामान् मनोभिलषितान् ब्राह्मणेभ्योऽददात् प्रभुः ॥ २४॥

पुरोहितपुरोगाश्च तिथिनक्षत्रपर्वसु ।
इज्यार्थे स्म प्रवर्तन्ते विधिमन्त्रप्रमाणतः ॥ २५॥

ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः ।
द्विजसङ्घैः परिवृताः प्रययुः काम्यकं वनम् ॥ २६॥

जनमेजयः—

पुष्पोपहारबलिभिर् बहुशश्च यथाविधि ।
सर्वात्मभूतं सम्पूज्य यतप्राणो जितेन्द्रियः ॥ २७॥

स्तवेन केन विप्रर्षे स तु राजा युधिष्ठिरः ।
विप्रार्थमाराधितवान् सूर्यमद्भुतविक्रमम् ॥ २८॥

[1]मयि स्नेहोऽस्ति चेद्ब्रह्मन् यदनुग्रहभागहम् ।

---

1. ख—इदमर्धं नास्ति

भगवन् नास्ति चेद्गुह्यं तच्च मे ब्रूहि साम्प्रतम् ॥ २९॥

वैशम्पायनः—

शृणुष्वावहितो राजञ् शुचिर्भूत्वा समाहितः ।
क्षणं च कुरु राजेन्द्र गुह्यं वक्ष्यामि ते हितम् ॥ ३०॥

धौम्येन तु यथाप्रोक्तं पार्थाय सुमहात्मने ।
नाम्नामष्टशतं पुण्यं तच्छृणुष्व महामते ॥ ३१॥

सूर्योऽर्यमा भगस्त्वष्टा पूषाऽर्कस्सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ ३२॥

पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिश्शुक्रो बुधोऽङ्गारक एव च ॥ ३३॥

इन्द्रो विवस्वान् दीप्तांशुश् शुचिश्शौरिश्शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ ३४॥

वैद्युतो जाठरश्चाग्निर् ऐन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ३५॥

कृतं त्रेता द्वापरश्च कलिस्सर्वामराश्रयः ।
कला काष्ठा मुहूर्ताश्च पक्षा मासा ऋतुस्तथा ॥ ३६॥

संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषश्शाश्वतो योगी व्यक्ताव्यक्तस्सनातनः ॥ ३७॥

लोकाध्यक्षस्सुराध्यक्षो विश्वकर्मा तमोनुदः ।

वरुणस्सागरोंऽशुश्च जीमूतो जीवनोऽरिहा ॥ ३८॥

भूताश्रयो भूतपतिस् सर्वभूतनिषेवितः ।
मणिस्सुवर्णो भूतादिः कामदस्सर्वतोमुखः ॥ ३९॥

जयो विशालो वरदश् शीघ्रगः प्राणधारणः ।
धन्वन्तरिर्धूमकेतुर् आदिदेवोऽदितेस्सुतः ॥ ४०॥

द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ४१॥

देवकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषाऽन्वितः ॥ ४२॥

एतद्वै कीर्तनीयस्य सूर्यस्यैव महात्मनः ।
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना ॥ ४३॥

शक्राच्च नारदः प्राप्तो धौम्यश्च तदनन्तरम् ।
धौम्याद्युधिष्ठिरः प्राप्य सर्वान् कामानवाप्तवान् ॥ ४४॥

सुरपितृगणयक्षसेवितं
निशिचरसिद्धगणैश्च वन्दितम् ।
वरकनकहुताशनप्रभं
त्वमपि मनस्यभिधेहि भास्करम् ॥ ४५॥

सूर्योदये यस्सुसमाहितः पठेत्
स पुत्रलाभं धनरत्नसञ्चयान् ।

लभेत जातिस्मरतां सदा नरो
धृतिं च मेधां च स विन्दते वराम् ॥ ४६॥

[1]इमं स्तवं देववरस्य कीर्तयेच्
छृणोति वा यस्सुमनास्समाहितः ।
स मुच्यते शोकदवाग्निसागरा-
ल्लभेत कामान् मनसा यथेप्सितान् ॥ ४७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
॥ २९ ॥ आरण्यकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ४७॥ श्लोकाः]

## ॥ चतुर्थोऽध्यायः ॥

पाण्डवेषु वनं गतेषु सत्सु हितं पृष्टेन विदुरेण धृतराष्ट्रं प्रति पाण्डवानां पुना राज्ये स्थापनविधानम् ॥ १ ॥ ततो धृतराष्ट्रधिकृतेन विदुरेण पाण्डवान् प्रति प्रस्थानम् ॥ २ ॥

वैशम्पायनः—

वनं प्रविष्टेष्वथ पाण्डवेषु
प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः ।
धर्मात्मानं विदुरमगाधबुद्धिं
सुखासीनो वाक्यमुवाच राजा ॥ १

1. ख—अयं श्लोको नास्ति

धृतराष्ट्रः—

प्रज्ञा च ते भार्गवस्येव शुद्धा
धर्मं च त्वं परमं वेत्थ सूक्ष्मम् ।
समश्च त्वं सम्मतः कौरवाणां
पथ्यं चैषां मम च प्रब्रवीहि ॥ २

एवं गते विदुर यदद्य कार्यं
पौराश्चेमे कथमस्मान् भजेरन् ।
ते चाप्यस्मान नोद्धरेयुस्समूलान्
न कामये तांश्च विनश्यमानान्[1] ॥ ३

विदुरः—

त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ।
धर्मे राजन् वर्तमानस्स्वशक्त्या
पुत्रान् सर्वान् पाहि कुन्तीसुतांश्च ॥ ४

स वै धर्मो विप्रलुप्तस्सभायां
पापात्मभिस्सौबलेयप्रधानैः ।

---

1. ख—सौबलेनैव पापेन दुर्योधनहितैषिणा ।
क्रूरमाचरितं क्षत्तर् न मे प्रियमनुष्ठितम् ॥
तथैवाङ्गीकृते तत्र तद्भवान् वक्तुमर्हति ।
उत्तरं प्राप्तकालं च किमन्यन्मन्यते क्षमम् ॥
नास्ति धर्मे सहायत्वम् इति मे दीर्यते मनः ।
यत्र पाण्डुसुतास्सर्वे क्लिश्यन्ति वनमागताः ॥ [अधिकः पाठः]

आहूय कुन्तीसुतमक्षवत्यां
　पराजैषीत् सत्यसन्धं सुतस्ते ॥ ५

एतस्य ते दुष्प्रणीतस्य राजन्
　छेषस्याहं परिपश्याम्युपायम् ।
यथा पुत्रस्तव कौरव्य पापा-
　न्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ६

तद्वै सर्वं पाण्डुपुत्रा लभन्तां
　यत्तद्राजन्नतिसृष्टं त्वयाऽऽसीत् ।
एष धर्मः परमो यत् स्वकेन
　राजा तुष्येन्न परस्वेषु गृद्ध्येत् ॥ ७

एतत् कार्यं तव सर्वप्रधानं
　तेषां तुष्टिश्शकुनेश्चाव[1]मानः ।
एवं शेषं यदि पुत्रेषु ते स्याद्
　एतद्राजंस्त्वरमाणः कुरुष्व ॥ ८

अथैतदेवं न करोषि राजन्
　ध्रुवं कुरूणां भविता विनाशः ।
न हि क्रुद्धो भीमसेनोऽर्जुनो वा
　शेषं कुर्याच्छात्रवाणामनीके ॥ ९

---

1. क—मानात् ; ख—ष्टिश्शक्यते नावमानात् ।

येषां योद्धा सव्यसाची कृतास्त्रो
धनुर्येषां गाण्डिवं लोकसारम् ।
येषां भीमो बाहुशाली च योद्धा
तेषां लोके किं नु दुष्प्रापमस्ति ॥ १०

[1]उक्तं पूर्वं जातमात्रे सुते ते
मया यत् ते हितमासीत् तदानीम् ।
पुत्रं त्यजेममहितं कुलस्ये-
त्येतद्राजन् न च तत् त्वं चकर्थ ॥ ११

इदानीं ते हितमुक्तं न चेत् त्वम्
एवं कर्ता परितप्ताऽसि पश्चात् ॥ ११॥

यद्येतदेवमनुमन्ता सुतस्ते
संप्रीयमाणः पाण्डवैरेकराज्यम् ।
तापो न ते भविता प्रीतियोगात्
[2]तस्मान्निगृह्णीष्व सुतान् सुखाय ॥ १२॥

[3]निगृह्याबुद्धिं मानिनं पापबुद्धिं
पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये ॥ १३

---

1. ख—येषां राजा धर्मपुत्रो महात्मा तेषां लोके किन्नु दुष्प्रापमस्ति ।
[अधिकः पाठः]

2. क-ग—त्वं चेन्निगृह्णासि सुतं सहायैः ।

3. घ—निगृह्य पुत्रं मानिनं पापबुद्धिं
क-ख—अथापरो भवति सुतान्निगृह्य ।

अजातशत्रुर्हि विमुक्तरागो
धर्मेणेमां पृथिवीं शास्तु राजन् ।
ततो राजन् पार्थिवास्सर्व एव
वैश्या इवास्मानुपतिष्ठन्तु सद्यः ॥ १४

दुर्योधनश्शकुनिस्सूतपुत्रः
प्रीत्या राजन् पाण्डुपुत्रान् भजन्तु ।
दुश्शासनो याचतु भीमसेनं
सभामध्ये द्रुपदस्यात्मजां च ॥ १५

युधिष्ठिरं त्वं परिसान्त्वयस्व
राज्ये चैनं स्थापयस्वाभिपूज्य ।
त्वया पृष्टः किमहमन्यद्वदेयम्
एतत् कृत्वा कृतकृत्योऽसि राजन् ॥ १६

धृतराष्ट्रः—

एतद्वाक्यं विदुर यत् ते सभायाम्
इह प्रोक्तं पाण्डवान् प्राप्य मां च ।
हितं तेषामहितं मामकानाम्
एतत् सर्वं मम नोपैति चेतः ॥ १७

इदं त्विदानीं कृतमेव निश्चितं
तेषामर्थे पाण्डवानां यदात्थ ।

तेनाद्य मन्ये नासि हितो ममेति
कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ १८

असंशयं तेऽपि ममैव पुत्रा
दुर्योधनस्तु मम देहात् प्रसूतः ।
स्वं वै देहं परहेतोस्त्यजेति
को नु ब्रूयात् समतामन्ववेक्षन् ॥ १९

स मां जिह्मं विदुर त्वं ब्रवीषि
मन्युं तेऽहमधिकं धारयामि ।
[1]यथेच्छकं गच्छ वा तिष्ठ वा त्वं
सुसान्त्व्यमानाऽप्यसती स्त्री जहाति ॥ २०

वैशम्पायनः—

एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्यद्
अन्तर्वेश्म सहसोत्थाय राजा ।
नेदमस्तीति विदुरो भाषमाणस्
सम्प्राद्रवद्यत्र पार्था बभूवुः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

॥ २९ ॥ आरण्यकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये २१ श्लोकाः]

---

1. ख-ग—यथेष्टकं

## ॥ पञ्चमोऽध्यायः ॥

विदुरस्य काम्यकवने पाण्डवसमागमः ॥ १ ॥ तेन तेषु तत्र स्वागमनकारणनिवेदनम् ॥ २ ॥

वैशम्पायनः—

पाण्डवास्तु वने वासम् उद्दिश्य भरतर्षभाः ।
प्रययुर्जाह्नवीकूलात् कुरुक्षेत्रं सहानुगाः ॥ १

सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते ।
ययुर्वनेनैव वनं सततं पश्चिमां दिशम् ॥ २

ततस्सरस्वतीतीरे समेषु मरुधन्वसु ।
काम्यकं नाम ददृशुर् वनं मुनिजनप्रियम् ॥ ३

तत्र ते न्यवसन् वीरा वने बहुमृगद्विजे ।
अन्वास्यमाना मुनिभिस् सान्त्व्यमानाश्च भारत ॥ ४

विदुरस्त्वथ पाण्डूनां सदा दर्शनलालसः ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ५

ततो यात्वा विदुरः काननं तच्
शीघ्रैरश्वैर्वाहितस्यन्दनेन ।
ददर्शासीनं धर्मात्मानं विविक्ते
सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ॥ ६

ततोऽपश्यद्विदुरं तूर्णमेकम्
अभ्यागतं सत्यसन्धस्य राजा ।
अथाब्रवीद्भ्रातरं भीमसेनं
किंनु क्षत्ता वक्ष्यति नस्समेत्य ॥ ७

कच्चिन्नायं वचनात् सौबलस्य
समाह्वाता देवनायोपयाति ।
कच्चित् क्षुद्रः [1]कुशली चायुधानि
जेष्यत्यस्माकं पुनरेवाक्षवत्याम् ॥ ८

समाहूतः केनचिदाह्वाय
नाहं शक्तो भीमसेनापयातुम् ।
गाण्डीवे वा संशयिते कथंचिद्
राज्यप्राप्तिस्संशयिता भवेन्नः ॥ ९

तत उत्थाय विदुरं पाण्डवेयाः
तं प्रत्यगृह्णन्नृपते सर्व एव ।
सतैस्समेतैस्सत्कृतः पाण्डवेयैर्
यथोचितं पाण्डुपुत्रैस्समेयात् ॥ १०

समाश्वस्तं विदुरं ते नरर्षभास्
ततोऽपृच्छन्नागमनाय हेतुम् ।

1. क-ख—शकुनिश्चा

स चापि तेभ्यो विस्तरतश्शशंस
यथावृत्तो धृतराष्ट्रोऽम्बिकेयः ॥ ११

विदुरः—
अवोचन्मां धृतराष्ट्रोऽभिगुप्तम्
अजातशत्रो परिगृह्याभिपूज्य ।
एवं गते समतामभ्युपेत्य
पथ्यं तेषां मम चैव ब्रवीहि ॥ १२
मया तूक्तं यत् क्षमं कौरवाणां
हितं पथ्यं धृतराष्ट्रस्य चैव ।
तद्वै पथ्यं तन्मनो नाभ्युपैति
ततश्चाहं क्षममन्यन्न मन्ये ॥ १३
परं श्रेयः पाण्डवेया मयोक्तं
न मे तच्च श्रुतवानाम्बिकेयः ।
यथाऽऽतुरस्येव हि पथ्य[1]मौषधं
न रोचते स्मास्य तदुच्यमानम् ॥ १४
न श्रेयसे [2]यततेऽजातशत्रो
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
[3]ध्रुवं न रोचेद्भरतर्षभस्य
पतिः कुमार्या इव षष्टिवर्षः ॥ १५

---

1. क-ख—मन्नं    2. अ-क-घ—नीयते
3. क—ब्रुवन्न रुच्यै ; ख—न रोचते यद्भरत ; घ—ब्रुवन्न रोचेत

ध्रुवं विनाशो नृप कौरवाणां
न वै श्रेयो धृतराष्ट्रः परैति ।
यथा च पर्णे पुष्करस्यावासिक्तं
जलं न तिष्ठेत् पथ्यमुक्तं तथाऽस्मिन् ॥ १६

ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां
यत्र श्रद्धा तात तत्र प्रयाहि ।
नाहं भूयः कामये त्वां सहायं
महीमिमां पालयितुं पुरं वा ॥ १७

सोऽहं त्यक्तो धृतराष्ट्रेण [1]राजंस्
त्वां शंसितुं तूर्णमुपागतोऽहम् ।
युक्तं सर्वं यन्मयोक्तं सभायां
तद्धार्यतां यत् प्रवक्ष्यामि भूयः ॥ १८

क्लेशैस्तीव्रैर्युज्यमानस्सपत्नैः
क्षमां कुर्वन् कालमुपासते यः ।
संवर्धयन् स्तोकमिवाग्निमात्मवान्
स वै भुङ्क्ते पृथिवीमेक एव ॥ १९

यस्याविभक्तं वसु राजन् सहायैस्
तस्य दुःखस्यांशभाजस्सहायाः ।

---

1. क—राजन् स त्वां श्रावितुमुपयातस्त्वरावान् ।

सहायानामेष सङ्ग्रहणेऽभ्युपायस्
सहायाप्त्या पृथिवीप्राप्तिमाहुः ॥ २०
सत्यं श्रेष्ठं पाण्डवा निष्प्रलापं
तुल्यं चान्नं सह भोज्यं सहायैः ।
आत्मा चैषामग्रतो नातिवर्तेद्
एवं वृत्तिर्वर्धते भूमिपाल ॥ २१

युधिष्ठिरः—
तथा करिष्यामि यथा ब्रवीषि
परां बुद्धिमुपगम्याप्रमत्तः ।
यच्चाप्यन्यद्देशकालोपपन्नं
तद्वै वाच्यं तत् करिष्यामि कृत्स्नम् ॥ २२

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ २९ ॥ आरण्यकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

## ॥ षष्ठोऽध्यायः ॥

विदुरविप्रयोगखिन्नेन धृतराष्ट्रेण तदाह्वानाय सञ्जयप्रेषणम् ॥ १ ॥ सञ्जयाहूतेन विदुरेण पुनर्धृतराष्ट्रं प्रत्यागमनम् ॥ २ ॥

वैशम्पायनः—
गते तु विदुरे राजन्नाश्रमं पाण्डवान् प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत दुर्मनाः ॥ १

स सभाद्वारमागम्य विदुरस्मारमोहितः ।
समक्षं पार्थिवेन्द्राणां विसंज्ञः प्रापतद्भुवि ॥ २

स तु लब्ध्वा चिरात् संज्ञां समुत्थाय महीतलात् ।
समीपोपस्थितं राजा सञ्जयं वाक्यमब्रवीत् ॥ ३

धृतराष्ट्रः—
भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः ।
तस्य स्मृत्याऽद्य सुभृशं हृदयं दीर्यतीव मे ॥ ४
तमानयस्व धर्मज्ञं मम भ्रातरमाशु वै ॥ ४॥

वैशम्पायनः—
इति ब्रुवन् स नृपतिः कृपणं पर्यदेवयत् ॥ ५
पश्चात्तापाभिसंतप्तो विदुरस्मारकर्शितः ।
भ्रातृस्ने[1]हादिदं राजा सञ्जयं वाक्यमब्रवीत् ॥ ६

धृतराष्ट्रः—
गच्छ सञ्जय जानीहि भ्रातरं विदुरं मम ।
मया मूढेन निकृतः कच्चिज्जीवति वा न वा ॥ ७

न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किञ्चन ।
व्यलीकं कृतपूर्वं मे प्राज्ञेनामितबुद्धिना ॥ ८

स व्यलीकं कथं प्राप्तो मत्तः परमबुद्धिमान् ।
न जह्याज्जीवितं प्राज्ञस् तं गच्छानय सञ्जय ॥ ९

---

1. ख—हान्वितो राजन् ।

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च ।
सञ्जयो बाढमित्युक्त्वा प्राद्रवत् काम्यकं वनम् ॥ १०

सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः ।
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ॥ ११

विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ।
भ्रातृभिश्चाभिसङ्गुप्तं देवैरिव [1]पुरंदरम् ॥ १२

युधिष्ठिरमथाभ्येत्य पूजयामास सञ्जयः ।
भीमार्जुनयमांश्चापि तथैव प्रत्यपद्यत ॥ १३

राज्ञा पृष्टस्स कुशलं सुखासीनश्च सञ्जयः ।
शशंसागमने हेतुम् इदं चैवाब्रवीद्वचः ॥ १४

सञ्जयः—

राजा स्मरति ते क्षत्तर् धृतराष्ट्रोऽम्बिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं सञ्जीवय नराधिपम् ॥ १५

सोऽनुमान्य कुरुश्रेष्ठान् पाण्डवान् कुरुनन्दनान् ।
नियोगाद्राजसिंहस्य गन्तुमर्हसि मानद ॥ १६

वैशम्पायनः—

एवमुक्तस्तु विदुरो धीमान् स्वजनवत्सलः ।
युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ १७

---

1. ख—शतक्रतुम्

[1]सोऽभिगत्वा तदा वेश्म राज्ञस्तमभिवाद्य च ।
उपातिष्ठन्महात्मानं राजानं प्रत्यवर्तत ॥ १८
तमब्रवीन्महाप्राज्ञो धृतराष्ट्रः प्रतापवान् ॥ १८॥

धृतराष्ट्रः—

दिष्ट्या प्राप्तोऽसि धर्मज्ञ दिष्ट्या स्मरासि मेऽनघ ॥ १९
अद्य रात्रौ दिवा चाहं त्वत्कृते भरतर्षभ ।
प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः ॥ २०
[2]चिन्तयाऽहं परिक्लिष्टस् त्वद्गतेनान्तरात्मना ॥ २०॥

वैशम्पायनः—

सोऽङ्कमारोप्य विदुरं मूर्धन्याघ्राय चैव ह ।
क्षम्यतामिति होवाच यदुक्तोऽसि मया रुषा ॥ २१॥

विदुरः—

क्षान्तमेव मया राजन् गुरुर्नः परमो भवान् ।
तथाऽहमागतः क्षिप्रं त्वद्दर्शनपरायणः ॥ २२॥
भवन्ति हि कुरुश्रेष्ठ पुरुषा धर्मचेतसः ।
दीनानुकम्पिनो राजन् नात्र कार्या विचारणा ॥ २३॥
पाण्डोः पुत्रा यादृशास्ते तादृशा मे सुतास्तव ।
दीना इति हि मे बुद्धिर् अभिपन्नाऽद्य तान् प्रति ॥ २४॥

---

1. ख—अर्धद्वयं नास्ति
2. ख—नास्तीदमर्धम्

वैशम्पायनः—

अन्योन्यमनुनीयैवं भ्रातरौ [1]द्वौ महाद्युती ।

विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥　　२५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

॥ २९ ॥ आरण्यकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[अस्मिन्नध्याये २५॥ श्लोकाः]

---

## ॥ सप्तमोऽध्यायः ॥

---

विदुरस्य पुनरागमनेन खिद्यता दुर्योधनेन कर्णादिभिरालोचनम् ॥१॥ कर्णादिषु समालोच्य पाण्डवजिघांसया प्रस्थितेषु तदा समागतेन व्यासेन तेषां प्रतिषेधनम् ॥ २ ॥

---

वैशम्पायनः—

श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ।

धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥　　१

स सौबलं समानाय्य कर्णदुश्शासनौ तथा ।

अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः ॥　　२

दुर्योधनः—

एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य सम्मतः ।

विदुरः पाण्डुपुत्राणां सुहृद्विद्वान् हिते रतः ॥　　३

---

1. ख—तौ

यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति ।
पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ॥ ४

अथ पश्याम्यहं पार्थान् प्राप्तानिह कथञ्चन ।
पुनश्शोषं गमिष्यामि निरसुर्निरवग्रहः ॥ ५

[1]विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् ।
करिष्ये न हि तानृद्धान् पुनर्द्रष्टुमिहोत्सहे ॥ ६

शकुनिः—

किं बालि[2]शमतिं राजन्नास्थितोऽसि विशाम्पते ।
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ७

सत्यवाक्ये स्थितास्सर्वे पाण्डवा भरतर्षभ ।
पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित् ॥ ८

अथवा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा गृहम् ।
निरस्य समयं भूयः पणोऽस्माकं भविष्यति ॥ ९

सर्वे [3]भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः ।
छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः ॥ १०

दुश्शासनः—

एवमेतन्महाप्राज्ञ यथा वदसि मातुल ।
नित्यं हि मे कथयतस् तव बुद्धिर्हि रोचते ॥ ११

---

1. ख—क्षिप्रमुद्बन्धनं वापि 2. ख—शां मतिं 3. ख—भवाम

[1]तथा तद् भविता राजन् नान्यथा तद्भविष्यति ॥ ११॥

कर्णः—

काममीक्षामहे सर्वे दुर्योधन तवेप्सितम् ।
ऐकमत्यं हि नो राजन सर्वेषामेव लक्ष्यते ॥ १२॥

वैशम्पायनः—

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नातिहृष्टमनाः क्षिप्रम् अभवत् स पराङ्मुखः ॥ १३॥

उपलभ्य ततः कर्णो विवृत्य नयने शुभे ।
रोषाद्दुश्शासनं चैव सौबलेयं च तावुभौ ॥ १४॥

उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना ॥ १५

कर्णः—

अहो मम मतं यत्तु तन्निबोध नराधिपाः ॥ १५॥

प्रियं सर्वे चिकीर्षामो राज्ञः किं करवामहे ।
न चास्य शक्नुमस्सर्वे ह्यवस्थातुमतन्द्रिताः ॥ १६॥

वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ।
गच्छामस्सहिता हन्तुं पाण्डवान् वनगोचरान् ॥ १७॥

तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् ।
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् ॥ १८॥

यावदेव परिद्यूना यावच्छोकपरायणाः ।

---

1. क-ख—नास्तीदमर्धम्

यावन्मन्त्रविहीनाश्च तावद्गच्छाम माचिरम् ॥ १९॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ।
प्रहृष्टमनसस्सर्वे प्रत्यूचुस्सूतजं तदा ॥ २०॥

दुश्शासनादयः—

एतत् कृत्यतमं राज्ञः कौरवस्य महात्मनः ॥ २१

वैशम्पायनः—

एवमुक्त्वा सुसङ्क्रुद्धा रथैस्सर्वे पृथक्पृथक् ।
निर्ययुः पाण्डवान् हन्तुं सङ्घशः कृतनिश्चयाः ॥ २२

तान् प्रस्थितान् परिज्ञाय कृष्णद्वैपायनः प्रभुः ।
आजगाम [1]विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा ॥ २३

प्रतिषिध्याथ तान् सर्वान् भगवाँल्लोकपूजितः ।
प्रज्ञाचक्षुषमासीनम् उवाचाभ्येत्य सत्वरम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

॥ २९ ॥ आरण्यकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[ अस्मिन्नध्याये २४ श्लोकाः ]

---

1. ख—महायोगी दृष्ट्वा

## ॥ अष्टमोऽध्यायः ॥

तदा समागतेन व्यासेन धृतराष्ट्रं प्रति पाण्डवैस्सह विरोधस्यानर्थहेतुत्वकथनपूर्वकं तैस्सह शमविधानम् ॥ १॥ व्यासेन धृतराष्ट्रं प्रति पुत्रस्नेहस्य दुस्त्यजत्वे दृष्टान्तत्वेन सुरभ्युपाख्यानाख्यानपूर्वकं कौरवाणां जीवितस्य पाण्डवैस्सह शमाधीनत्वाभिधानम् ॥ २ ॥

---

व्यासः—

धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम ।
वक्ष्यामि त्वां कौरवाणां सर्वेषां हितमुत्तमम् ॥ १

न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम् ।
निकृत्या निर्जिताश्चैव दुर्योधनवशानुगैः ॥ २

ते स्मरन्तः परिक्लेशान् पूर्णे वर्षे त्रयोदशे ।
विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ॥ ३

तदयं किं नु पापात्मा तव पुत्रस्सुमन्दधीः ।
पाण्डवान् नित्यसङ्क्रुद्धो राज्यहेतोर्जिघांसति ॥ ४

वार्यतां साध्वयं मूढश्शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हन्तुम् इच्छन् प्राणान विमोक्ष्यते ॥ ५

यथाऽऽह विदुरः प्राज्ञो यथा भीष्मो यथा वयम् ।
यथा कृपश्च द्रोणश्च तथा साधु विधीयताम् ॥ ६

विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः ।

अधर्म्यमयशस्यं च मा राजन् प्रतिपद्यथाः ॥ ७

समीक्षा यादृशी ह्यस्य पाण्डवान् प्रति भारत ।
उपेक्ष्यमाणा सा राजन् महान्तमनयं सृजेत् ॥ ८

अथवाऽयं सुमन्दात्मा वनं गच्छतु ते सुतः ।
पाण्डवैस्सहितो राजन्नेक एवासहायवान् ॥ ९

ततस्संसर्गजस्स्नेहः पुत्रस्य तव पाण्डवैः ।
यदि स्यात् कृतकृत्यस्त्वं भवेथाः पुरुषर्षभ ॥ १०

अथवा जायमानस्य यच्छीलमनुजायते ।
श्रूयते तन्महाराज नामृतस्यापसर्पति ॥ ११

कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोऽपि वा ।
भवान् वाऽत्र परं कार्यं पुराऽपार्थोऽतिवर्तते* ॥ १२

धृतराष्ट्रः—

भगवन् नाहमप्येतद् रोचये द्यूतसंस्तवम् ।
मन्ये तु विधिनाऽऽक्रम्य कारितोऽस्मीति वै मुने ॥ १३

न तद्रोचयते भीष्मो न द्रोणो विदुरो न च ।
गान्धार्या नेष्यते द्यूतं तच्च मोहात् प्रवर्तितम् ॥ १४

परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् ।
पुत्रस्नेहेन भगवञ् जानन्नपि यतव्रत ॥ १५

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

व्यासः—

वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ।
दृढं वेद्मि परं पुत्रं परं पुत्रान्न विद्यते ॥ १६

इन्द्रोऽप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः ।
अन्यैस्समृद्धैरप्यर्थैर् न सु[1]तान्मन्यते परम् ॥ १७

अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम् ।
सुरभ्याश्चैव संवादम् इन्द्रस्य च विशाम्पते ॥ १८

त्रिविष्टपगता राजन् [2]सुरभिः प्रारुदत् किल ।
गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ॥ १९

इन्द्रः—

किमिदं रोदिषि शुभे कच्चित् क्षेमं दिवौकसाम् ।
मनुष्येष्वथवा गोषु नैतदल्पं भविष्यति ॥ २०

सुरभिः—

विनिपातो न वः कश्चिद् दृश्यते त्रिदशाधिप ।
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ २१

पश्यैनं कर्षकं रौद्रं दुर्बलं मम पुत्रकम् ।
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन निपीडितम् ॥ २२

[3]एनं दृष्ट्वा भृशं श्रान्तं वध्यमानं सुराधिप ।
कृपाविष्टाऽस्मि देवेन्द्र मनश्चोद्विजते मम ॥ २३

---

1. ख—ताद्विद्यते परम्　2. घ—सुरभिं　3. ख—अर्धचतुष्टयं नास्ति

एकस्त्वत्र बलोपेतो धुरमुद्वहतेऽधिकाम् ।
अपरोऽप्यबलप्राणः कृशो धमनिसन्ततः ॥ २४

कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव ॥ २४॥

वध्यमानः प्रतोदेन तुद्यमानस्तथैव च ।
नैव शक्नोति तं भारम् उद्वोढुं पश्य वासव ॥ २५॥

ततोऽहं तस्य शोकार्ता विरौमि भृशदुःखिता ।
अश्रूण्यावर्तयन्ती च नेत्राभ्यां [1]करुणायती ॥ २६॥

इन्द्रः—

तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ।
किं कृपान्वितवत्यत्र पुत्र एकोऽत्र [2]हन्यते ॥ २७॥

सुरभिः—

यदि पुत्रसहस्रं मे सर्वत्र सममेव मे ।
दीनस्य तु ततश्शक्र पुत्रस्याभ्यधिका कृपा ॥ २८॥

व्यासः—

तदिन्द्रस्सुरभेर्वाक्यं निशम्य भृशविस्मितः ।
जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजम् ॥ २९॥

प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् ।
कर्षकस्याचरन् विघ्नं भगवान् पाकशासनः ॥ ३०॥

तद्यथा सुरभिः प्राह सममेवास्तु ते तथा ।

---

1. ख—वती 2. क—ऽत्र पीड्यते ख—एकएव न पीड्यते

सुतेषु राजन् सर्वेषु दीनेष्वभ्यधिका कृपा ॥ ३१॥
यादृशो मे सुतः पाण्डुस् तादृशो मेऽसि पुत्रक ।
विदुरश्च महाप्राज्ञस् स्नेहादेतद्ब्रवीम्यहम् ॥ ३२॥
चिराय तव पुत्राणां शतमेकं च पार्थिव ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दास्सुदुःखिताः ॥ ३३॥
कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि ।
इति दीनेषु पार्थेषु मनो मे परितप्यते ॥ ३४॥
यदि पार्थिव कौरव्याञ् जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतश् शमं गच्छतु पाण्डवैः ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ २९ ॥ आरण्यकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ३५॥ श्लोकाः]

## ॥ नवमोऽध्यायः ॥

धृतराष्ट्रेण दुर्योधनानुशासनं प्रार्थितेन व्यासेन तत्रागमिष्यन्तं मैत्रेयं प्रति तत्प्रार्थनाविधानपूर्वकं स्वावासं प्रति गमनम् ॥ १ ॥ तत्रागतेन मैत्रेयेण ऊर्वास्फालनपूर्वकं स्ववचनमनादृतवतो दुर्योधनस्य भीमसेनगदया तवोरुभेदो भवेदिति शापदानम् ॥ २ ॥

धृतराष्ट्रः—
एवमेतन्महाप्राज्ञ यथा वदसि मां मुने ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ १

भवांस्तु मन्यते साधु यत् कुरूणां सुखोदयम् ।
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ॥ २

यदि त्वहमनुग्राह्यः कौरवेषु दया यदि ।
अनुशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ३

व्यासः—
अयमायाति वै राजन् मैत्रेयो भगवानृषिः ।
अन्वीक्ष्य पाण्डवान् भ्रातॄन् इहैवाऽस्मद्दिदृक्षया ॥ ४

एष दुर्योधनं पुत्रं तव राजन् महानृषिः ।
अनुशास्तु यथान्यायं शमायास्य कुलस्य ते ॥ ५

ब्रूयाद्यदेष राजेन्द्र तत् कार्यमविशङ्कया ।
अक्रियायां तु कार्यस्य पुत्रं ते शप्स्यते रुषा ॥ ६

वैशम्पायनः—
एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ७

कृत्वाऽर्घ्याद्याः क्रियास्सर्वा विश्रान्तं मुनिपुङ्गवम् ।
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ८

धृतराष्ट्रः—
सुखेनागमनं कच्चिद् भगवन् कुरुजाङ्गले ।
कच्चित् कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः ॥ ९

समये स्थातुमिच्छन्ति कच्चिच्च पुरुषर्षभाः ।

कच्चित् कुरूणां सौभ्रात्रम् अविच्छिन्नं भविष्यति ॥ १०

मैत्रेयः—

तीर्थयात्रामनुक्रामन् प्राप्तोऽस्मि कुरुजाङ्गलम् ।
यदृच्छया धर्मराजं दृष्टवान् काम्यके वने ॥ ११

तं जटाजिनसंवीतं तपोवननिवासिनम् ।
समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ॥ १२

तत्राश्रौपमहं राजन् पुत्राणां तव विग्रहम् ।
अनयं द्यूतरूपेण महापायमुपस्थितम् ॥ १३

ततोऽहं [1]त्वामनुप्राप्तः कौरवाणामवेक्षया ।
[2]सदा ह्यभ्यधिकस्स्नेहः प्रीतिश्च त्वयि मे प्रभो ॥ १४

नैतदौपयिकं राजंस् त्वयि भीष्मे च जीवति ।
[3]यदन्योन्यकृते पुत्रा विरुध्यन्ते नराधिप ॥ १५

मेधीभूतस्स्वयं राजन् निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरम् उत्पतन्तमुपेक्षसे ॥ १६

दस्यूनामिव ते वृत्तं सभायां कुरुनन्दन ।
तेन न भ्राजसे राजंस् तापसानां समागमे ॥ १७

वैशम्पायनः—

ततो व्याघृत्य राजानं दुर्योधनममर्षणम् ।

---

1. ख—समनु + र्णां व्यपेक्षया 2. ख—यथा चा + विभो
3. क—यदन्योन ते ख—यदन्योन्यं तु ते

उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥ १८

मैत्रेयः—

दुर्योधन महाबाहो निबोध वदतां वर ।
वचनं मे महाप्राज्ञ ब्रुवतो यद्धितं तव ॥ १९

मा द्रुहः पाण्डवान् राजन् कुरुष्व हितमात्मनः ।
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ ॥ २०

पाण्डवान् प्राप्य तान् रात्रौ किम्मीरो नाम राक्षसः ।
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः ॥ २१

तं भीमस्समरश्लाघी बलेन बलिनां वरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ २२

पश्य दिग्विजये राजन् यथा भीमेन पातितः ।
जरासन्धो महेष्वासो नागायुतबलो युधि ॥ २३

सम्बन्धी वासुदेवश्च येषां स्यालश्च पार्षतः ।
ते हि सर्वे नरव्याघ्राश् शूरा विक्रान्तयोधिनः ॥ २४

सर्वे नागायुतप्राणा वज्रसंहनना दृढाः ।
सत्यव्रतपरास्सर्वे सर्वे पुरुषमानिनः ॥ २५

हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम् ।
हिडिम्बबकमुख्यानां किम्मीरस्य च रक्षसः ॥ २६

कस्तान् युधि समासीत जरामरणवान् नरः ।

तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ॥ २७

[1]कुरु मे वचनं राजन् मा मृत्युवशमन्वगाः ॥ २७॥

वैशम्पायनः—

एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशाम्पते ।
ऊरुं गजकराकारं करेणाभिजघान सः ॥ २८॥

दुर्योधनस्स्मितं कृत्वा चरणेनोल्लिखन् महीम् ।
न किञ्चिदुक्त्वा दुर्मेधास् तस्थौ किञ्चिदवाङ्मुखः ॥ २९॥

तमशुश्रूषमाणं तु विलिखन्तं वसुन्धराम् ।
दृष्ट्वा दुर्योधनं राजन् मैत्रेयं कोप आविशत् ॥ ३०॥

स कोपवशमापन्नो मैत्रेयो भगवानृषिः ।
विधिना सम्प्रयुक्तश्च शापायास्य मनो दधे ॥ ३१॥

ततस्स वार्युपस्पृश्य कोपसंरक्तलोचनः ।
मैत्रेयो धार्तराष्ट्रं तम् अशपद्दुष्टचेतसम् ॥ ३२॥

मैत्रेयः—

यस्मात् त्वं मामनादृत्य न मे वाचं चिकीर्षसि ।
तस्मादस्यावमानस्य सद्यः फलम[2]वाप्स्यसि ॥ ३३॥

त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
यत्र भीमो गदाघातैस् तवोरुं भेत्स्यते बलात् ॥ ३४॥

---

1. ख-घ—कुरुष्व 2. ख-घ—मवाप्नुहि

वैशम्पायनः—

इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः ।
प्रसादयामास मुनिं नैतदेवं भवेदिति ॥　　३५॥

मैत्रेयः—

शमं यास्यति चेत् पुत्रस् तव राजन् यथा तथा ।
शापो न भविता तात विपरीते भविष्यति ॥　　३६॥

वैशम्पायनः—

स विलक्षस्तु राजेन्द्र दुर्योधनपिता तदा ।
मैत्रेयं प्राह किम्मीरः कथं भीमेन पातितः ॥　　३७॥

मैत्रेयः—

नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः ।
एष ते विदुरस्सर्वम् आख्यास्यति गते मयि ॥　　३८॥

वैशम्पायनः—

इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम् ।
किम्मीरवधसंविग्नो भयं दुर्योधनोऽगमत् ॥　　३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि नवमोऽध्यायः ॥ ९ ॥

॥ २९ ॥ आरण्यकपर्वणि नवमोऽध्यायः ॥ ९ ॥

[ अस्मिन्नध्याये ३९॥ श्लोकाः ]

॥ आरण्यकपर्व समाप्तम् ॥

---

## ॥ दशमोऽध्यायः ॥

(किम्मीरवधपर्व)

मैत्रेयचोदितेन विदुरेण धृतराष्ट्राय भीमकृतकिम्मीरवधप्रकार-कथनम् ॥

धृतराष्ट्रः—

किम्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यताम् ।
रक्षसा भीमसेनस्य कथमासीत् समागमः ॥ १

विदुरः—

शृणु भीमस्य कर्मेदम् अतिमानुषकर्मणः ।
श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः ॥ २

इतः प्रयाता राजेन्द्र पाण्डवा द्यूतनिर्जिताः ।
जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनम् ॥ ३

रात्रौ निशीथे स्वाभीले गतेऽर्धसमये नृप ।
प्रचारे पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ४

तद्वनं तापसा नित्यं शेषाश्च वनचारिणः ।
दूरात् [1]परिहरन्ति स्म पुरुषादभयात् किल ॥ ५

तेषां प्रविशतां तत्र मार्गमावृत्य भारत ।
दीप्ताक्षं भीषणं रक्षस् सोल्मुकं प्रत्यदृश्यत ॥ ६

1. ख—परिहरिष्यन्ति

बाहू महान्तौ कृत्वा तु तथाऽऽस्यं च भयानकम् ।
स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः ॥ ७

दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ।
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ॥ ८

[1]सृजन्तं राक्षसीं मायां महारावविराविणीम् ।
मुञ्चन्तं विपुलं नादं सतोयमिव तोयदम् ॥ ९

तस्य नादेन संत्रस्ताः पक्षिणस्सर्वतोदिशम् ।
विमुक्तनादास्सम्पेतुस् स्थलजा जलजैस्सह ॥ १०

सम्प्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ।
तद्वनं तस्य नादेन सम्प्रास्थितमि[2]वाभवत् ॥ ११

तस्योरुवाताभिहतास् ताम्रपल्लवबाहवः ।
विदूरजाताश्च लतास् समाश्लिष्यन्त पादपान् ॥ १२

तस्मिन् क्षणेऽथ प्रववौ मारुतो भृशदारुणः ।
रजसा [3]संवृतं तेन नष्टर्क्षमभवन्नभः ॥ १३

पञ्चानां पाण्डुपुत्राणाम् अविज्ञातो महारिपुः ।
[4]पञ्चानामिन्द्रियाणां तु [5]शोकावेश इवातुरः ॥ १४

स दृष्ट्वा पाण्डवान् दूरात् कृष्णाजिनसमावृतान् ।

---

1. अ-घ—अर्धपञ्चकं नास्ति 2. ख—वाबभौ
3. ख—संप्रवृत्तेन 4. ख—इदमर्धं नास्ति 5. घ—शोकवेग

आवृणोत् तद्वनद्वारं मैनाक इव पर्वतः । १५
तं समासाद्य वित्रस्ता कृष्णा कमललोचना ।
अदृष्टपूर्वं [1]मत्यन्तं विषादमगमद्भृशम् ॥ १६
दुश्शासनकरोत्कृष्टाविप्रकीर्णशिरोरुहा ।
पञ्चपर्वतमध्यस्था नदीवाकुलतां गता ॥ १७
विमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः ।
इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम् ॥ १८
अथ तां राक्षसीं मायाम् उत्थितां घोरदर्शनाम् ।
रक्षोघ्नैर्विविधैर्मन्त्रैर् धौम्यस्सम्यक्प्रयोजितैः ॥ १९
पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् ॥ १९॥
स नष्टमायोऽतिबलः क्रोधविष्फारितेक्षणः ।
काममूर्तिधरः क्षुब्धः कालकल्पो ह्यदृश्यत ॥ २०॥
तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः ॥ २१

युधिष्ठिरः—

को भवान् कस्य वा किं ते क्रियतां कार्यमुच्यताम् ॥ २१॥

वैशम्पायनः—

प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम् ॥ २२

राक्षसः—

अहं बकस्य वै भ्राता किम्मीर इति विश्रुतः ।

---

1. अ-घ—संत्रासान्न्यमीलयत लोचने

वनेऽस्मिन् काम्यके शून्ये निवसामि गतज्वरः ॥ २३

युधि निर्जित्य पुरुषान् आहारं नित्यमाचरे ॥ २३॥

के यूयमभिसम्प्राप्ता भक्ष्यभूता ममान्तिकम् ।
युधि निर्जित्य वस्सर्वान् भक्षयिष्ये गतज्वरः ॥ २४॥

विदुरः—

युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततस्सर्वं गोत्रनामादि भारत ॥ २५॥

युधिष्ठिरः—

पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः ।
सहितो भ्रातृभिस्सर्वैर् भीमसेनार्जुनादिभिः ॥ २६॥

हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरम् इदं तव परिग्रहम् ॥ २७॥

विदुरः—

किम्मीरस्त्वब्रवीदेनं दिष्ट्या दैवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोरथम् ॥ २८॥

भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनं चासादयाम्यहम् ॥ २९॥

सोऽयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ।
अनेन हि मम भ्राता बको विनिहतः प्रियः ॥ ३०॥

वेत्रकीयगृहे राजन् ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम् ॥ ३१॥

हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनाऽनेन स्वसा चास्य हृता पुरा ॥ ३२॥

सोऽयमभ्यागतो मूढो ममेदं गहनं वनम् ।
प्रचारसमयेऽस्माकम् अर्द्धरात्रे समास्थिते ॥ ३३॥

अद्यास्य यातयिष्यामि तद्वैरं चिरसम्भृतम् ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ॥ ३४॥

अद्याहमनृणो भूत्वा भ्रातुस्सख्युस्तथैव च ।
शान्तिं [1]लब्धास्मि परमां हत्वा राक्षसकण्टकम् ॥ ३५॥

यदि तेन पुरा मुक्तो भीमसेनो बकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर ॥ ३६॥

एनं हि विपुलप्राणम् अद्य हत्वा वृकोदरम् ।
सम्भक्ष्य जरयिष्यामि यथाऽगस्त्यो महासुरम् ॥ ३७॥

वैशम्पायनः—

एवमुक्तस्तु धर्मात्मा सत्यसन्धो युधिष्ठिरः ।
नैतदस्तीति सङ्क्रुद्धो भर्त्सयामास राक्षसम् ॥ ३८॥

ततो भीमो महाबाहुर् आरुज्य तरसा द्रुमम् ।
[2]दशव्याममिवाविद्धं निष्पत्रमकरोत्तदा ॥ ३९॥

---

1. ख—लप्स्यामि　　2. ख—शतव्याममथोद्विध्यन्नि

चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ।
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः ॥ ४०॥

[1]निवार्य भीमो जिष्णुं तं तद्रक्षो मेघगर्जितम् ।
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठ तिष्ठेति भारत ॥ ४१॥

इत्युक्त्वा तमभिक्रुद्धं कक्ष्यामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं सन्दष्टौष्ठपुटो बली ॥ ४२॥

तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ॥ ४३

यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि ।
पातयामास वेगेन कुलिशं मघवानिव ॥ ४४

असम्भ्रान्तं तु तद्रक्षस् समरे प्रत्यदृश्यत ।
चिक्षेप चोल्मुकं दीप्तम् [2]अशनिं ज्वलितामिव ॥ ४५

तदुदस्तमलातं तु भीमः प्रहरतां वरः ।
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ॥ ४६

किम्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धस् समरे प्रत्यदृश्यत ॥ ४७

तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयो [3]र्युद्धं भ्रात्रोस्स्त्रीकाङ्क्षिणोर्यथा ॥ ४८

---

1. ख—निवार्य जिष्णुं भीमोऽथ तद्रक्षो भीमगर्वितम् [पाठान्तरम्]
2. ख—अग्निं प्रज्वलितं यथा 3. क-ख—ः पूर्वं भ्रात्रोः श्री

शीर्षयोः पतिता वृक्षा बिभिदुर्नैकधा तयोः ।
यथैवोत्पलपत्राणि मत्तयोर्द्विपयोस्तथा ॥ ४९

मूर्ध्नि जर्झरभूतास्तु बहवस्तत्र पादपाः ।
चीराणीव व्युदस्तानि [1]रेजुस्तत्र महावने ॥ ५०

तद्वृक्षयुद्धमभवत् [2]सुमुहूर्तं विशाम्पते ।
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ॥ ५१

ततश्शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः ।
प्राहिणोद्राक्षसः क्रुद्धो भीमसेनश्चचाल ह ॥ ५२

तं शिलाताडनजडं पर्यधावत् स राक्षसः ।
बाहुविक्षिप्तकिरणस् स्वर्भानुरिव भास्करम् ॥ ५३

तावन्योन्यं समाश्लिष्य विकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रवृद्धौ वृषभाविव ॥ ५४

तयोरासीत् सुतुमुलस् सम्प्रहारस्सुदारुणः ।
नखदंष्ट्रायुधवतोर् व्याघ्रयोर्दृप्तयोरिव ॥ ५५

दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।
कृष्णानयनदृष्टश्च व्यवर्धत वृकोदरः ॥ ५६

अभिहत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।
मातङ्गमिव मातङ्गः प्रभिन्नकरटामुखम् ॥ ५७

---

1. क-ख—विरेजुस्तत्र भारत　　2. क-ख—मुहूर्तमिव भारत

स चाप्येनं ततो रक्षः प्रतिजग्राह वीर्यवान् ।
तमाक्षिपद्भीमसेनो बलेन बलिनां वरः ॥ ५८

तयोर्भुजविनिष्पेषाद् उभयोर्बलिनोस्तथा ।
[1]शब्दस्समभवद्घोरो वेणुस्फोटसमो युधि ॥ ५९

अथैनमाक्षिप्य बलाद् भीमसेनो महाबलः ।
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ६०

स भीमेन परामृष्टो दुर्बलो बलिनां रणे ।
व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवः ॥ ६१

तत एनं परिश्रान्तम् उपलक्ष्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ६२

[2]नदन्तं तं महानादं भिन्नभेरीसमस्वनम् ।
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ६३

तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः ।
प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् ॥ ६४

आक्रम्य च कटीदेशे जानुभ्यां राक्षसाधमम् ।
अपीडयत बाहुभ्यां तस्य कण्ठं वृकोदरः ॥ ६५

अथ कज्जलसर्वाङ्गं व्यावृत्तनयनोल्बणम् ।
भूतले पातयामास वाक्यं चेदमुवाच ह ॥ ६६

---

1. अ—अर्धचतुष्टयं नास्ति 2. क—अर्धचतुष्टयं नास्ति

भीमः—

हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चासि यमस्य सदनं प्रति ॥ ६७

विदुरः—

इत्येवमुक्त्वा पुरुषप्रवीरस्
तं राक्षसं क्रोधविवृत्तनेत्रः ।
प्रस्रस्तवस्त्राभरणं स्फुरन्तम्
उद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ६८

तस्मिन् हते तोयदतुल्यरूपे
कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः ।
भीमं परिष्वज्य गुणैरनेकैर्
हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ६९

विदुरः—

एवं विनिहतस्सङ्ख्ये किम्मीरो मनुजाधिप ।
भीमेन वचनात् तस्य धर्मराजस्य कौरव ॥ ७०

ततो निष्कण्टकं कृत्वा वनं तदपराजितः ।
द्रौपद्या सह [1]धर्मज्ञा वसतिं चावसन् यतः ॥ ७१

समाश्वास्य च ते सर्वे द्रौपदीं पुरुषर्षभाः ।
प्रहृष्टमनसस्सर्वे प्रशशंसुर्वृकोदरम् ॥ ७२

---

1. क-ख—धर्मात्मा वसतिं तामुपावसत्

भीमबाहुबलो[1]त्पिष्टे विनष्टे राक्षसे ततः ।
विविशुस्तद्वनं वीराः क्षेमं निहतकण्टकम् ॥ ७३

स मया गच्छता मार्गे [2]विनिकीर्णो भयावहः ।
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ७४

तत्राश्रौषमहं [3]चैतत् कर्म भीमस्य संयुगे ।
ब्राह्मणानां कथयतां ये तत्रासन् समागताः ॥ ७५

वैशम्पायनः—
एवं विनिहतं सङ्ख्ये किम्मीरं राक्षसाधमम् ।
श्रुत्वा ध्यानपरो राजा निशश्वासार्तवत् तदा ॥ ७६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि दशमोऽध्यायः ॥ १० ॥

॥ ३० ॥ किम्मीरवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ७६ श्लोकाः]

॥ किम्मीरवधपर्व समाप्तम् ॥

---

1. ख—त्क्षिप्ते निहते राक्षसेतदा
2. ख—अयं पादोऽनन्तरश्च नस्तः
3. ख—राजन् कर्म

## ॥ एकादशोऽध्यायः ॥

(कैरातपर्व)

श्रीकृष्णेन स्वीयैस्सह वने पाण्डवसमीपगमनम् ॥ १ ॥ अर्जुनेन कृष्णस्तवनम् ॥ २ ॥ स्वदुःखनिर्वेदनपूर्वकं रुदन्त्या द्रौपद्याः कृष्णेन समाश्वासनम् ॥ ३ ॥

---

वैशम्पायनः—

भोजाः प्रव्रजिताञ्श्रुत्वा वृष्णयश्चान्धकैस्सह ।
पाण्डवान् दुःखसन्तप्तान् समाजग्मुर्महावने ॥ १

पाञ्चालस्य [1]च दायादो धृष्टकेतुश्च चेदिपः ।
केकयाश्च महेष्वासा भ्रातरो लोकविश्रुताः ॥ २

वने तेऽभिययुः पार्थान् क्रोधामर्षसमन्विताः ।
गर्हयन्तो धार्तराष्ट्रान् किं कुर्म इति चाब्रुवन् ॥ ३

वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।
परिवार्योपविविशुर् धर्मराजं युधिष्ठिरम् ॥ ४

श्रीभगवान्—

[2]दुर्योधनस्य शकुनेः कर्णस्य च दुरात्मनः ।
दुश्शासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ५

---

1. ख—सुतः श्रीमान् धृष्टद्युम्नः प्रतापवान् ।
शिशुपालसुतश्श्रीमान् धृष्टकेतुश्च चेदिपः ॥ [अधिकः पाठः]
2. क—अर्धलयं नास्ति

ततस्सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् ।
निकृत्या वा चरन् वध्य एष धर्मस्सनातनः ॥ ६

वैशम्पायनः—

पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।
अर्जुनश्शमयामास दिधक्षन्तमिव प्रजाः ॥ ७

[1]सङ्क्रुद्धं केशवं दृष्ट्वा पूर्वदेवेषु फल्गुनः ।
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ ८

पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः ।
प्रजापतिपतेर्विष्णोर् लोकनाथस्य धीमतः ॥ ९

अर्जुनः—

दशवर्षसहस्राणि यत्र सायंगृहो मुनिः ।
[2]व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ १०

दशवर्षसहस्राणि दशवर्षशतानि च ।
पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन् पुरा ॥ ११

ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ।
अतिष्ठ एकपादेन वायुभक्षश्शतं समाः ॥ १२

कृष्णाजिनोत्तरासङ्गः कृशो धमनिसन्ततः ।
आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके ॥ १३

प्रभासमप्यथासाद्य तीर्थं पुण्यजनार्चितम् ।

1. ख—इदमर्धं नास्ति 2. ख—अर्धद्वयं नास्ति

[1]तत्र कृष्ण महाबाहो दिव्यं वर्षसहस्रकम् ॥ १४

अतिष्ठ[2]स्तप एकेन पादेन नियमे स्थितः ॥ १४॥

क्षेत्रज्ञस्सर्वभूतानाम् आदिरन्तश्च केशव ।

तपसां च निधिः कृष्ण यज्ञस्त्वं च सनातनः ॥ १५॥

निहत्य नरकं भौमम् आहृत्य मणिकुण्डले ।

[3]प्रादास्त्वमदितेः कृष्ण भवान् नः परमा गतिः ॥ १६॥

[4]प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ १७

कृत्वा तत् कर्म लोकानाम् ऋषभस्सर्वलोकजित् ।

अवधीस्त्वं रणे सर्वान् समेतान् दैत्यदानवान् ॥ १८

ततस्सर्वेश्वरत्वं च सम्प्रदाय शचीपतेः ।

मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ॥ १९

स त्वं नारायणो भूत्वा हरिरासीः परन्तप ।

ब्रह्मा सोमश्च विष्णुश्च धर्मो धाता यमोऽनलः ॥ २०

वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।

अजश्चराचरगुरुस् स्रष्टा त्वं पुरुषोत्तम ॥ २१

नारायणादिभिर्देव क्रतुभिर्भूरिदक्षिणैः ।

---

1. ख—इदमर्धं नास्ति
2. क-ख—स्त्वेकपादेन नियमेन च संयुतः
3. ख—कोशएकस्मिन्नेवेदमर्धं दृश्यते
4. ख—अर्धद्वयं नास्ति

अयजो भूरितेजास्त्वं कृष्ण चैत्ररथे वने ॥ २२

शतं शतसहस्राणि सुवर्णस्य जनार्दन ।
एकैकस्मिंस्तथा यज्ञे परिपूर्णानि दत्तवान् ॥ २३

अदितेरपि पुत्रत्वम् एत्य यादवनन्दन ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजोऽभवः ॥ २४

शिशुर्भूत्वा दिवं खं च पृथिवीं च परन्तप ।
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा ॥ २५

सम्प्राप्य पदमाकाशम् आदित्यसदने स्थितः ।
अत्यरोचश्च भूतात्मन् भास्करं स्वेन तेजसा ॥ २६

मौरवास्सादिताः पाशा निशुम्भनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः प्राग्ज्योतिषपुरं प्रति ॥ २७

जारूथ्या[1]माहतः क्रोधाच् छिशुपालोऽनुगैस्सह ।
भीमधन्वा च शैब्यश्च शतधन्वा च निर्जितः ॥ २८

तथा पर्जन्यघोषेण रथेनादित्यवर्चसा ।
अहार्षी रुक्मिणीं भैष्मीं रणे निर्जित्य रुक्मिणम् ॥ २९

इन्द्रद्युम्नो हतः कोपाद् यवनश्च कशेरुमान् ।
हतस्सौभपतिस्साल्वस् त्वया सौभश्च पातितः ॥ ३०

---

1. अ—मग्रहीः क—माहरः + नृपैस्सह घ—मग्रधीः क्रोधाः

इरावत्यां तथा भोजः कार्तवीर्यसमो युधि ।
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥　　३१

तां च भोगवतीं पुण्याम् ऋषिकान्तां जनार्दन ।
द्वारकामात्मसात् कृत्वा समुद्रं गमयिष्यसि ॥　　३२

न क्रोधो न च मात्सर्यं नानृतं मधुसूदन ।
त्वयि तिष्ठति दाशार्ह [1]न नृशंस्यं कुतोऽनृजु ॥　　३३

आसीनं चित्तमध्ये त्वां दीप्यमानं स्वतेजसा ।
आगम्य ऋषयस्सर्वे [2]ध्यायन्त्यमलमच्युत ॥　　३४

युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन ।
आत्मनैवात्मसात् कृत्वा जगदास्से परन्तप ॥　　३५

नैव पूर्वे परे चैव करिष्यन्ति कृतानि ते ।
कर्माणि यानि देव त्वं बाल एव महाद्युते ॥　　३६

कृतवान् पुण्डरीकाक्ष बलदेवसहायवान् ।
वैराजभवने चापि ब्रह्मणा न्यवसस्सह ॥　　३७

वैशम्पायनः—

एवमुक्त्वा स्वमात्मानम् आत्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत् ततः पार्थम् इत्युवाच जनार्दनः ॥　　३८

---

1. क—न नृशंसः　ख—न नृशंसो न चानृजुः
2. क-ख—याचन्त्यभयमच्युत　घ—ध्यायन्त्यमलमच्युत

श्रीभगवान्—

ममैव त्वं तवैवाहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ३९

नरस्त्वमसि दुर्धर्ष हरिर्नारायणोऽस्म्यहम् ।
लोकाल्लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ४०

अनन्यः पार्थ मत्तस्त्वम् अहं त्वत्तश्च पाण्डव ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ४१

वैशम्पायनः—

तस्मिन् वीरसमावापे सङ्क्रुद्धेष्वथ राजसु ।
धृष्टद्युम्नमुखैर्वीरैर् भ्रातृभिः परिवारिता ॥ ४२

पाञ्चाली पुण्डरीकाक्षम् आसीनं यादवैस्सह ।
अभिगम्याब्रवीत् कृष्णा शरण्यं शरणैषिणी ॥ ४३

द्रौपदी—

[1]वासुदेव वसूनां त्वं वासवावरजाच्युत ।
देवदेवो हि देवानाम् इति द्वैपायनोऽब्रवीत् ॥ ४४

पूर्वे प्रजानिसर्गे त्वाम् आहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वलोकानाम् असितो देवलोऽब्रवीत् ॥ ४५

[2]विष्णुस्त्वमसि दुर्धर्षस् त्वं यज्ञो मधुसूदन ।
यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाऽब्रवीत् ॥ ४६

---

1. अ-घ—अर्धद्वयं नास्ति 2. ख—अर्धद्वयं नास्ति

ऋषयस्त्वां क्षमामाहुस् सत्यं च पुरुषोत्तम ।
सत्याद्यज्ञोऽसि सम्भूतः कश्यपस्त्वां यथाऽब्रवीत् ॥ ४७

साध्यानामपि देवानां वसूनामीश्वरेश्वरः ।
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत् ॥ ४८

दिवं ते शिरसा व्याप्तं पद्भ्यां च पृथिवी विभो ।
जठरे त इमे लोकाः पुरुषोऽसि सनातनः ॥ ४९

विद्यातपोभितृप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनसिद्धानाम् ऋषीणामसि सत्तमः ॥ ५०

राजर्षीणां पुण्यकृताम् आहवेष्वनिवर्तिनाम् ।
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषोत्तम ॥ ५१

त्वं प्रभुस्त्वं विभुश्च त्वम् आत्मभूस्त्वं सनातनः ॥ ५१॥

लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ।
नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ५२॥

मर्त्यता चैव भूतानाम् अमरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम् ॥ ५३॥

सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वलोकानां ये दिव्या ये च मानुषाः ॥ ५४॥

कथं नु भार्या पार्थानां तव कृष्ण सखी विभो ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ॥ ५५॥

स्त्रीधर्मिणी वेपमाना रुधिरेण समुक्षिता ।
[1]एकवस्त्रा विकृष्टाऽस्मि दुःखिता कुरुसंसदि ॥ ५६॥

राजमध्ये सभायां तु रजसाऽभिपरिप्लुता ।
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन् पापचेतसः ॥ ५७॥

दासीभावेन भोक्तुं माम् ईषुस्ते मधुसूदन ।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेष्वथ वृष्णिषु ॥ ५८॥

नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साऽहं दासीकृता बलात् ॥ ५९॥

गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान् महाबलान् ।
ये क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ॥ ६०॥

धिग्बलं भीमसेनस्य धिक् पार्थस्य धनुष्मतः ।
यौ मां विप्रकृतां क्षुद्रैर् मर्षयेतां जनार्दन ॥ ६१॥

शाश्वतोऽयं धर्मपथस् सद्भिराचरितस्सदा ।
यद्भार्यां परिरक्षन्ति भर्तारोऽप्यबलीयसः ॥ ६२॥

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायाम् आत्मा भवति रक्षितः ॥ ६३॥

आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ।
भर्ता च भार्यया रक्ष्यः कथं जायेन्ममोदरे ॥ ६४॥

---

1. ख—अर्धचतुष्टयं नास्ति

नन्विमे शरणं प्राप्तं न त्यजन्ति कदाचन ।
ते मां शरणमापन्नां नान्वपद्यन् कथं वराः ॥ ६५॥

पञ्चेमे पञ्चभिर्जाताः कुमारा [1]भूरितेजसः ।
एतेषामप्यवेक्षार्थं त्रातव्याऽस्मि जनार्दन ॥ ६६॥

प्रतिविन्ध्यो युधिष्ठिरात् सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ ६७॥

कनिष्ठाच्छ्रुत[2]कर्मा च सर्वे सत्यपराक्रमाः ।
प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः ॥ ६८॥

नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः ।
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ॥ ६९॥

अधर्मेण हृतं राज्यं सर्वे दासास्तथा कृताः ।
सभायां परिकृष्टाऽहम् एकवस्त्रा रजस्वला ॥ ७०॥

नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् ।
अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ॥ ७१॥

धिग्भीमसेनस्य बलं धिक् पार्थस्य च गाण्डिवम् ।
[3]यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ७२॥

[4]य एतानाक्षिपद् भ्रातॄन् सह मात्रा विहिंसकः ।

---

1. क-ख—स्त्वमितौजसः
2. क—सोमस्तु ख—सेनस्तु
3. अ-क—नास्तीदमर्धम्
4. क—अर्धद्वयं नास्ति

अधीयानान् पुरा बालान् व्रतस्थान् मधुसूदन ॥　　७३॥
भोजने भीमसेनस्य पापः प्राक्षेपयद्विषम् ।
कालकूट[1]निभं तीक्ष्णं सम्भृतं रोमहर्षणम् ॥　　७४॥
तज्जीर्णमविकारेण सहान्नेन जनार्दन ।
[2]सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम ॥　　७५॥
प्रमाणकोट्यां विश्वस्तं पाशैर्बध्वा वृकोदरम् ।
तोये सुभीमे गङ्गायाः प्रक्षिप्य पुनराव्रजत् ॥　　७६॥
यदा विबुद्धः कौन्तेयस् तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर् भीमसेनो महाबलः ॥　　७७॥
आशीविषैः कृष्णसर्पैस् सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार ह शत्रुहा ॥　　७८॥
प्रतिबुद्धस्तु कौन्तेयस् सर्वान् सर्वानपोथयत् ।
सारथिं चास्य दयितम् अपहस्तेन जघ्निवान् ॥　　७९॥
ततः पुनरुपाधाक्षीद् बालकान् वारणावते ।
शयानानार्यया सार्धं को नु तत् कर्तुमर्हति ॥　　८०॥
यत्रार्या रुदती भीता पाण्डवानिदमब्रवीत् ।
महद्व्यसनमापन्ना शिखिना परिवारिता ॥　　८१॥

आर्या—

हा हताऽस्मि कुतोन्वद्य भवेच्छान्तिरिहानलात् ।

---

1. अ-क—विषं　　2. ख—इदमर्धं नास्ति

अनाथा विनशिष्यामि बालकैः पुत्रकैस्सह ॥ ८२॥

द्रौपदी—

तत्र भीमो महाबाहुर् वायुवेगपराक्रमः ।
आर्यामाश्वासयामास भ्रातृंश्चैव वृकोदरः ॥ ८३॥

वैनतेयो यथा पक्षी गरुडः पततां वरः ।
तथैवाभिपतिष्यामि भयं वो नेह विद्यते ॥ ८४॥

[1]आर्यामङ्केन वामेन दक्षिणेन युधिष्ठिरम् ।
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ॥ ८५॥

सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान् ।
भ्रातृनार्यां च बलवान् मोक्षयामास पावकात् ॥ ८६॥

ते रात्रौ प्रस्थितास्सर्वे सह मात्रा यशस्विनः ।
अभ्यगच्छन् महारण्यं हिडिम्बवनमन्तिकात् ॥ ८७॥

श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः ।
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ॥ ८८॥

भीमस्य पादौ कृत्वा तु स्वपतोऽङ्के ततो बलात् ।
पर्यष्वजत संहृष्टा कल्याणी मृदुपाणिना ॥ ८९॥

तामबुद्ध्यदमेयात्मा बलवान् सत्यविक्रमः ।
पर्यपृच्छच्च तां भीमः किमिहेच्छस्यनिन्दिते ॥ ९०॥

तयोश्श्रुत्वा तु कथितम् आगच्छद्राक्षसाधमः ।

---

1. अ—अर्धद्वयं नास्ति

[1]भीमरूपो महानादान् विसृजन् भीमदर्शनः ॥ ९१॥

राक्षसः—

केन सार्धं कथयसि आनयैनं ममान्तिकम् ।
हिडिम्बे भक्षयिष्यावो न चिरं कर्तुमर्हसि ॥ ९२॥

द्रौपदी—

सा कृपासङ्गृहीतेन हृदयेन मनस्विनी ।
नैतदैच्छत् तदा कर्तुम् अनुक्रोशादनिन्दिता ॥ ९३॥

स नादान् विपुलान् घोरान् राक्षसः पुरुषादकः ।
कृत्वाऽभ्यगच्छद्वेगेन भीमसेनं तदा किल ॥ ९४॥

तमभिद्रुत्य सङ्क्रुद्धो वेगेन महता बली ।
अगृह्णात् पाणिना पाणिं भीमसेनस्य राक्षसः ॥ ९५॥

इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम् ।
संहत्य भीमसेनस्य व्याक्षिपत् सहसा करम् ॥ ९६॥

गृहीतः पाणिना पाणिं भीमसेनोऽथ रक्षसा ।
नामृष्यत महाबाहुस् तत्राक्रुध्यद्वृकोदरः ॥ ९७॥

तदासीत् तुमुलं युद्धं भीमसेनहिडिम्बयोः ।
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ ९८॥

हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिस्सह ।
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ॥ ९९॥

---

1. ख—इदमर्धं नास्ति

ततस्ते प्राद्रवन् सर्वे सह मात्रा यशस्विनः ।
एकचक्रामभिगतास् संवृता ब्राह्मणव्रजैः ॥ १००॥

प्रस्थाने विदुरश्चैषां मन्त्री प्रियहितोऽभवत् ।
ततोऽगच्छन्नेकचक्रां पाण्डवास्संशितव्रताः ॥ १०१॥

तत्राप्यासादयामासुर् बकं नाम महाबलम् ।
पुरुषादं प्रतिभयं हिडिम्बेनैव सम्मितम ॥ १०२॥

तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः ।
सहितो भ्रातृभिस्सर्वैर् द्रुपदस्य पुरं ययौ ॥ १०३॥

लब्धाऽहमपि तत्रैव वसता सव्यसाचिना ।
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा ॥ १०४॥

एवं सुयुद्धे पार्थेन जिताऽहं मधुसूदन ।
स्वयंवरे महत् कर्म कृत्वाऽप्यसुकरं परैः ॥ १०५॥

एवं क्लेशैस्सुबहुभिः क्लिश्यमाना सुदुःखिता ।
निवसाम्यार्यया हीना कृष्ण धौम्यपुरस्सरा ॥ १०६॥

त इमे सिंहविक्रान्ता वीर्येणाभ्यधिकाः परैः ।
अजिताः परिक्लिष्यन्तीं समुपैक्षन्त मां कथम् ॥ १०७॥

एतादृशानि दुःखानि सहन्ती दुर्बलीयसाम् ।
दीर्घकालं प्रदीप्तानि पापानां पापकर्मणाम् ॥ १०८॥

कुले महति जाताऽस्मि दिव्येन विधिना किल ।

पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः ॥ १०९॥

कचग्रहमनुप्राप्ता का नु जीवेत मादृशी ।
पञ्चानामिन्द्रकल्पानां प्रेक्षतां मधुसूदन ॥ ११०॥

वैशम्पायनः—

इत्युक्त्वा प्रारुदत् कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ १११॥

स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः ॥ ११२॥

चक्षुषी परिमार्जन्ती निश्श्वसन्ती पुनः पुनः ।
बाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ ११३॥

द्रौपदी—

नैव मे पतयस्सन्ति न पुत्रा मधुसूदन ।
न भ्रातरो न च पिता नैव त्वं न च बान्धवाः ॥ ११४॥

ये मां विप्रकृतां क्षुद्रैर् उपेक्षन्ते विशोकवत् ।
न हि मे शाम्यते दुःखं कर्णो यत् प्राहसत् तदा ॥ ११५॥

वैशम्पायनः—

अथैनामब्रवीत् कृष्णस् तस्मिन् वीरसमागमे ॥ ११६

श्रीभगवान्—

रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धाऽसि भामिनि ॥ ११६॥

बीभत्सुशरसञ्छन्नान् शोणितौघपरिप्लुतान् ।

निहताञ्जीवितं त्यक्त्वा शयानान् धरणीतले ॥ ११७॥

यत् समक्षं पाण्डवानां तत् करिष्यामि मा शुचः ।
सत्यं ते प्रतिजानामि राज्ञो राज्ञी भविष्यसि ॥ ११८॥

पतेद्द्यौर्हिमवाञ्शीर्येत् पृथिवी शकली भवेत् ।
शुष्येत् तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ ११९॥

धृष्टद्युम्नः—

अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम् ।
दुर्योधनं भीमसेनः कर्णं हन्ता धनञ्जयः ॥ १२०॥

रामकृष्णौ व्यपाश्रित्य अजेयास्स्म शुचिस्मिते ।
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ १२१॥

वैशम्पायनः—

[1]इत्युक्त्वाऽभिमुखा वीरा वासुदेवमुपास्थिताः ।
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् ॥ १२२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ३१ ॥ कैरातपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये १२२॥ श्लोकाः]

---

1. ख—इदमर्धद्वयं नास्ति

## ॥ द्वादशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति तद्व्यसनस्य द्वारकायां स्वस्यासान्निध्यहेतुकत्व-कथनेन समाश्वासनम्॥ १ ॥ कृष्णेन युधिष्ठिरं प्रति साल्वेन युद्धस्य स्वस्या-नागमनहेतुत्वकथनम्॥ २ ॥

श्रीभगवान्—

नेदं कृच्छ्रमनुप्राप्तो भवान् स्याद्वसुधाधिप ।
यद्यहं द्वारकायां स्यां राजन् सन्निहितः पुरा ॥ १

आगच्छेयमहं द्यूतम् अनाहूतोऽपि कौरवैः ।
आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च ॥ २
वारयेयमहं द्यूतं बहून् दोषान् प्रदर्शयन् ॥ २॥

भीष्मद्रोणौ समानाय्य कृपं बाह्लीकमेव च ।
वैचित्रवीर्यं राजानम् अलं द्यूतेन कौरव ॥ ३॥

पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ।
तत्र वक्ष्याम्यहं दोषान् यैर्भवानवरोपितः ॥ ४॥

वीरसेनसुतो यैश्च राज्यात् प्रभ्रंशितः पुरा ।
[1]अभक्षितविनाशश्च देवनेन विशाम्पते ॥ ५॥

स्वातन्त्र्यं द्यूतसङ्गस्य वर्णयेयं यथातथम् ॥ ६

1. ख—अर्धद्वयं नास्ति

स्त्रियोऽक्षा मृगया पानम् एतत् कामसमुत्थितम् ।
व्यसनं चतुष्टयं प्रोक्तं [1]यैर्नरो भ्रश्यते श्रियः ॥ ७॥

तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः ।
एकाह्ना द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च ॥ ८॥

[2]विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः ॥ ९

अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम् ।
अविश्वास्यमनर्थं च प्रसङ्गे कटुकोदयम् ॥ १०

द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम् ॥ १०॥

एवमुक्तो यदि मया गृह्णीयाद्वचनं मम ।
अनामयं स्याद्धर्मस्य कुरूणां कुरुनन्दन ॥ ११॥

न चेत्तन्मम राजेन्द्र गृह्णीयान्मधुरं वचः ।
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् ॥ १२॥

अथैनमभिनीयैवं सुहृदो नाम दुर्हृदः ।
सभासदश्च तान् सर्वान् भेदयेयं दुरोदरान् ॥ १३॥

असान्निध्यं तु कौरव्य ममानर्तेष्वभूत् तदा ।
येनेदं व्यसनं [3]प्राप्ता भवन्तो द्यूतकारितम् ॥ १४॥

सोऽहमेत्य कुरुश्रेष्ठ द्वारकां पाण्डुनन्दन ।

---

1. ख-घ—यै राज्याद् भ्रश्यते श्रियः
2. क—नास्तीदमर्धम्
3. ख—प्राप्ता

अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथम् ॥ १५॥

श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः ।
तूर्णमभ्यागतोऽस्मि त्वां द्रष्टुकामो महीपते ॥ १६॥

अहो कृच्छ्रमनुप्राप्तास् सर्वे स्म भरतर्षभ ।
ये वयं त्वां व्यसनिनं पश्याम सह सोदरैः ॥* १७॥

युधिष्ठिरः—

असान्निध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन ।
क्व चासीद्विप्रवासस्ते किं चाकार्षीः प्रवासितः ॥ १८॥

श्रीभगवान्—

साल्वस्य नगरं सौभं गतोऽहं भरतर्षभ ।
तं निहन्तुं नृपश्रेष्ठ शृणु मे तत्र कारणम् ॥ १९॥

महातेजा महाबाहुर् यस्स राजा महायशाः ।
दमघोषात्मजो वीरश् शिशुपालो मया हतः ॥ २०॥

यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति ।
सरोष इव सम्प्राप्तो नामृष्यत दुरात्मवान् ॥ २१॥

श्रुत्वा तं निहतं साल्वस् तीव्रकोपसमन्वितः ।
उपायाद्द्वारकां शून्याम् इहस्थे मयि भारत ॥ २२॥

स तत्र चोदितो राजन् बालकैर्वृष्णिपुङ्गवैः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

निवृत्तः कामगं सौभम् आरुह्यैव नृशंसवत् ॥ २३॥

चिरजीवी नृपस्सोऽपि प्रसादात् पद्मजन्मनः ॥ २४

ततो वृष्णिप्रवीरांस्तान् बालान् हत्वा बहूंस्तदा ।
पुरोद्यानानि सर्वाणि भेदयामास दुर्मतिः ॥ २५

उक्तवांश्च महाबाहो कासौ वृष्णिकुलाधमः ।
वासुदेवस्स मन्दात्मा वसुदेवसुतो गतः ॥ २६

तस्य युद्धार्थिनो दर्पं युद्धे विनयिताऽस्म्यहम् ।
आनर्ता[1]स्सर्वमाख्यात तत्र गन्तास्मि यत्र सः ॥ २७

तं हत्वा विनिवर्तिष्ये कंसकेशिनिषूदनम् ।
अहत्वा न निवर्तिष्ये सत्येनायुधमालभे ॥ २८

कासौ कासाविति पुनस् तत्र तत्र प्रधावति ।
मया किल रणे योद्धुं काङ्क्षमाणस्स सौभराट् ॥ २९

अद्य तं पापकर्माणं क्षुद्रं विश्वासघातिनम् ।
शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम् ॥ ३०

मम पापस्वभावेन भ्राता येन निपातितः ।
शिशुपालो महीपालस् तं वधिष्ये महीतले ॥ ३१

भ्राता बालश्च राजा च न च सङ्ग्रामकोविदः ।

1. क-ख—स्सत्य

प्रमत्तश्च हतो वीरस् तं वधिष्ये जनार्दनम् ॥ ३२

एवमादि महाराज विलप्य दिवमास्थितः ।
कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन ॥ ३३

तमश्रौषमहं गत्वा यथावृत्तस्स दुर्मतिः ।
[1]मयि कौरव्य दुष्टात्मा मार्तिकावतको नृपः ॥ ३४

ततोऽहमपि कौरव्य रोषव्याकुललोचनः ।
निश्चित्य मनसा राजन् वधायास्य मनो दधे ॥ ३५

आनर्तेषु विमर्दं च [2]क्षेपं चात्मनि कौरव ।
प्रवृद्धमवलेपं च तस्य दुष्कृतकर्मणः ॥ ३६

ततोऽहमपि कौरव्य रोषव्याकुललोचनः ।
निश्चित्य मनसा राजन् वधायास्य मनो दधे ॥ ३७

ततस्सौभवधायाहं प्रतस्थे पृथिवीपते ।
स मया सागरोपान्ते दृष्ट आसीत् परीप्सता ॥ ३८

ततः प्रध्माप्य जलजं पाञ्चजन्यमहं नृप ।
आहूय साल्वं समरे युद्धाय समवस्थितः ॥ ३९

तन्मुहूर्तमभूद्युद्धं तत्र मे दानवैस्सह ।
वशीभूताश्च मे सर्वे भूतले च निपातिताः ॥ ४०

---

1. ख—इदमर्धं नास्ति 2. अ-घ—क्षेमं

एतत् कार्यं महाबाहो येनाहं नागतस्तदा ।
श्रुत्वैव हास्तिनपुरे द्यूतं चाविनयोत्थितम् ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ३१ ॥ कैरातपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ४१ श्लोकाः ]

---

## ॥ त्रयोदशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति साल्वसमागमसमये उग्रसेनकृतद्वारकारक्षण-प्रकारकथनम् ॥ १ ॥ कृष्णेन युधिष्ठिरं प्रति साल्वयादवयुद्धवर्णनम् ॥ २ ॥

---

युधिष्ठिरः—

वासुदेव महाबाहो विस्तरेण महामते ।
सौभस्य वधमाचक्ष्व न हि तृप्यामि कथ्यताम् ॥ १

श्रीभगवान्—

हतं श्रुत्वा महाबाहो [1]मया श्रौतश्रवं नृप ।
उपायाद्भरतश्रेष्ठ साल्वो द्वारवतीं पुरीम् ॥ २

[2]अरुधत् तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन ।
साल्वो वैहायसं चापि तत् पुरं व्यूह्य विष्ठितः ॥ ३

---

1. क-ख—शिशुपालं महारणे
2. क—अरुणत्; ख—अरुन्धत्तां स दु; घ—आरुधत्तां

[1]तत्र सोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ ४

पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा [2]सार्गला चैव सयन्त्रखनका तथा ॥ ५

सोपतल्पप्रतोलीका साट्टाट्टालकगोपुरा ।
सचक्रग्रहिणी चैव सोल्कालातावपोथिका ॥ ६

सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका ।
साष्ट्रिका साङ्कुरा राजन् सशतघ्नी सलाङ्गला ॥ ७

[3]ससुतूणी सासिधरा सायुधा सपरश्वधा ।
लोहचर्मवती चापि साग्निस्सहुलशृङ्गिका ॥ ८

शास्त्रदृष्टेन विधिना सुयुक्ता भरतर्षभ ॥ ८॥

[4]दृप्तैरनेकैर्विविधैर् गदसाम्बोद्धवादिभिः ।
पुरुषै राजशार्दूल समन्तात् परिवारिता ॥ ९॥

अभिख्यातगुणैर्वीरैर् दृष्टवीर्यैश्च संयुगे ।
मध्यमेन च गुल्मेन रक्षिता सा पुरी तदा ॥ १०॥

उत्क्षिप्तगुल्मैश्च ततो हयैश्च सपताकिभिः ।

---

1. ख—इदमर्धं नास्ति 2. क-ख—सहुला
3. क-ख—समुसुण्ठी
4. ख—दीप्तैरनेकैश्चविधैः शूल प्रासासिमुद्गरै : । [पाठान्तरम्]

[1]आघोषितं च नगरे न पातव्या सुरेति ह ॥ ११॥
प्रमादं परिरक्षद्भिर् उग्रसेनोद्धवादिभिः ।

प्रमत्तेष्वभिघातं हि कुर्यात् साल्वो नराधिपः ॥ १२॥
[2]इति कृत्वाऽप्रमत्तास्ते सर्वे वृष्ण्यन्धकास्स्थिताः ॥ १३

आनर्ताश्च तथा सर्वे नटनर्तकगायकाः ।
बहिर्निर्वासितास्सर्वे रक्षद्भिर्वित्तसञ्चयान् ॥ १४

सङ्क्रमा भेदितास्सर्वे नावश्च प्रतिषेधिताः ।
परिघाश्चापि कौरव्य कीलकैस्सुनिकीलिताः ॥ १५

उदपानाः कुरुश्रेष्ठ तथा वाप्यः[3]क्षतास्तथा ।
समन्तात् क्रोशमात्रं च कारिता विषमा च भूः ॥ १६

सङ्क्रमा भेदितास्सर्वे प्राकाराश्च नवीकृताः ॥ १६॥
प्रकृत्या विषमं सर्वं प्रकृत्या च सुरक्षितम् ।
[4]प्रकृत्या चायुधोपेतं विशेषेण तदाऽनघ ॥ १७॥

सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम् ।
तत् पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा ॥ १८॥
[5]न चामुद्रोऽविनिर्याति न चामुद्रः प्रवेश्यते ।

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति
3. क-ख—करीषकाः ; ख—उदपानं + करीषकाः ।
4. ख—अर्धद्वयं नास्ति 5. ख—अर्धद्वयं नास्ति

वृष्ण्यन्धकपुरे राजंस् तदा सौभसमागमे ॥ १९॥

अनुरथ्यासु सर्वासु चत्वरेषु च कौरव ।
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत् ॥ २०॥

दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् ।
कृतापदानं च तदा बलमासीद्विशाम्पते ॥ २१॥

न कोऽप्यवेतनः कश्चिन्न चातिक्रान्तवेतनः ।
नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः ॥ २२॥

एवं सुविहिता राजन् द्वारका भूरिदक्षिणैः ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥* २३॥

तां [1]तापयित्वा राजेन्द्र साल्वस्सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह ॥ २४॥

समे निविष्टा सा सेना प्रभूतसलिलाशये ।
चतुरङ्गबलोपेता साल्वराजाभिपालिता ॥ २५॥

वर्जयित्वा श्मशानानि देवतायतनानि च ।
वल्मीकांश्चैव चैत्यांश्च संनिविष्टमभूद्बलम् ॥ २६॥

अनीकानां विभागेन पन्थानस्संस्कृतास्तथा ।
[2]प्रतिमा नवमाश्चैव साल्वस्य शिबिरे नृप ॥ २७॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख-घ—तूपया 2. ख—अर्धमेकं नास्ति

सर्वायुधसमोपेतं सर्वशस्त्रविशारदम् ।
रथनागाश्वकलिलं पदातिजनसङ्कुलम् ॥ २८॥

तुष्टपुष्टबलोपेतं वीरलक्षणलक्षितम् ।
विचित्रध्वजसन्नाहं विचित्रशरकार्मुकम् ॥ २९॥

संनिवेश्य तु कौरव्य द्वारकायां नरर्षभ ।
अभिसारयामास तदा वेगेन पतगेन्द्रवत् ॥ ३०॥

तदापतत्तु संदृश्य बलं साल्वपतेस्तदा ।
निर्याय योधयामासुः कुमारा वृष्णिनन्दनाः ॥ ३१॥

असहन्तोऽभियानं तत् साल्वराजस्य कौरव ।
चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च महारथः ॥ ३२॥

ते रथैर्दंशितास्सर्वे विचित्राभरणध्वजाः ।
संसक्तास्साल्वराजस्य बहुभिर्योधपुङ्गवैः ॥ ३३॥

गृहीत्वा तु धनुस्साम्बस् साल्वस्य सचिवं रणे ।
योधयामास संहृष्टः क्षेमधूर्तिं चमूपतिम् ॥ ३४॥

तस्य बाणमयं वर्षं जाम्बवत्यास्सुतो महत् ।
मुमोच भरतश्रेष्ठ यथावर्षं सहस्रदृक् ॥ ३५॥

तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः ।
क्षेमधूर्तिर्महाराज हिमवानिव निश्चलः ॥ ३६॥

ततस्साम्बाय राजेन्द्र क्षेमधूर्तिस्स्समयन्निव ।

मुमोच मायाविहितं शरजालं महत्तरम् ॥ ३७॥
ततो मायामयं जालं माययैव विदार्य सः ।
साम्बश्शरसहस्रेण रथमस्याभ्यवर्षत ॥ ३८॥
ततस्स विद्धस्साम्बेन क्षेमधूर्तिश्चमूपतिः ।
अपायाज्जवनैरश्वैस् साम्बबाणप्रपीडितः ॥ ३९॥
तस्मिन् विप्रद्रुते शूरे साल्वस्याथ चमूपतौ ।
वेगवान् नाम दैतेयस् सुतं मेऽभ्यद्रवद्बली ॥ ४०॥
अभिद्रुतस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः ।
वेगं वेगवतो राजंस् तस्थौ वीरो विधारयन् ॥ ४१॥
स वेगवति कौन्तेय साम्बो वेगवतीं गदाम् ।
चिक्षेप तरसा वीरो व्याविद्ध्यन् सत्यविक्रमः ॥ ४२॥
तया त्वभिहतो राजन् वेगवान् न्यपतद्भुवि ।
वातरुग्ण इव क्षुण्णश् शीर्णमूलो वनस्पतिः ॥ ४३॥
तस्मिन् निपतिते वीरे गदारुग्णे महासुरे ।
प्रविश्य महतीं सेनां योधयामास मे सुतः ॥ ४४॥
चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः ।
महारथस्समाज्ञातो महाराज महाधनुः ॥ ४५॥
ततस्सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः ।
वृत्रवासवयो राजन् यथापूर्वं तथाऽभवत् ॥ ४६॥

अन्योन्यस्याभिसङ्क्रुद्धावन्योन्यं जघ्नतुश्शरैः ।
विनदन्तौ महाराज सिंहाविव महाबलौ ॥ ४७॥

रौक्मिणेयस्ततो बाणम् [1]अग्न्यर्कोपमवर्चसम् ।
अभिमन्त्र्य महास्त्रेण सन्दधे शत्रुनाशनम् ॥ ४८॥

स विविन्ध्याय सक्रोधस् समाहूय महारथः ।
चिक्षेप मे सुतो राजन् स गतासुरथापतत् ॥ ४९॥

विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूम् ।
कामगेन स सौभेन साल्वः पुनरुपागमत् ॥ ५०॥

ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम् ।
दृष्ट्वा साल्वं महाबाहो सौभस्थं पृथिवीगतम् ॥ ५१॥

ततो निर्याय कौन्तेय व्यवस्थाप्य च तद्बलम् ।
आनर्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् ॥ ५२॥

प्रद्युम्नः—

सर्वे भवन्तस्तिष्ठन्तु सर्वे पश्यन्तु मां युधि ।
निवारयन्तं सङ्ग्रामे बलात् सौभं सराजकम् ॥ ५३॥

अयं सौभपतेस्सेनाम् आयसैर्भुजगोपमैः ।
धनुर्मुक्तैश्च नाराचैर् नाशयाम्यद्य यादवाः ॥ ५४॥

[2]आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति ।

---

1. ख-घ—अग्न्यर्कोरगवर्चसम् 2. ख—इदमर्धं नास्ति

मयाऽभिपन्नो दुष्टात्मा ससौभस्सपदानुगः ॥ ५५॥

श्रीभगवान्—

एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन ।
विष्ठितं तद्बलं द्वारि युयुधे च यथासुखम् ॥ ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ३१ ॥ कैरातपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ५६॥ श्लोकाः ]

---

## ॥ चतुर्दशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति साल्वप्रद्युम्नयुद्धवर्णनम् ॥ १ ॥

---

श्रीभगवान्—

एवमुक्त्वा रौक्मिणेयो यादवान् यादवर्षभ ।
दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ १

उच्छ्रित्य मकरं केतुं व्यात्ताननमलङ्कृतम् ।
उत्पतद्भिरिवाकाशं हयैरभ्यपतन्परान् ॥ २

विक्षिपन्नाददानश्च धनुर्ज्यामाक्षिपन् मुहुः ।
तूणखड्गधरश्शूरो बद्धगोधाङ्गुलित्रवान् ॥ ३

सविद्यु[1]च्चपलं चापं विहरन् वै तलात्तलम् ।
मोहयामास दैतेयान् सर्वान् सौभनिवासिनः ॥　　४

नास्य विक्षिपतश्चापं संदधानस्य चासकृत् ।
अन्तरं ददृशे कश्चिन्निघ्नतश्शात्रवान् रणे ॥　　५

मुखस्य वर्णो न विकम्पतेऽस्य
चेलुश्च गात्राणि न चापि तस्य ।
[2]सिंहोन्नतस्याप्यभिगर्जतोऽस्य
शुश्राव लोकोऽद्भुत[3]वीर्यमग्र्यम् ॥　　६

जलेचरः काञ्चनयष्टिसंस्थो
व्यात्ताननश्शत्रुबलप्रमाथी ।
व्यत्रासयद्दानवराजमुख्यान्
सात्वस्य सेनाप्रमुखे ध्वजाग्र्यः ॥　　७

ततस्तूर्णं विनिष्पत्य प्रद्युम्नश्शत्रुकर्शनः ।
साल्वमेवाभिदुद्राव निवार्यारिबलं रुषा ॥　　८

अभिघातं तु वीरेण प्रद्युम्नेन महात्मना ।
[4]न मर्षयन् सुसङ्क्रुद्धस् साल्वः कुरुकुलोद्वह ॥　　९

---

1. क-ख—च्चलितं
2. क—सिंहोन्नतं चा ; ख—सिंहस्य नादमभि
3. ख-घ—रूप
4. क-ख—नामर्षयत् + सौभपतिस्तदा ; घ—नमर्षयत् + सौभपतिस्तदा

सरोषमदसम्मत्तः कामगादवरुह्य च ।
प्रद्युम्नं योधयामास साल्वः परपुरञ्जयः ॥ १०
तयोस्सुतुमुलं युद्धं साल्ववृष्णिप्रवीरयोः ।
समेता ददृशुर्लोका बलिवासवयोरिव ॥ ११
तस्य मायामयो वीर रथो हेमपरिष्कृतः ।
सध्वजस्सपताकश्च सानुकर्षस्सतूणवान् ॥ १२
स तं रथवरं श्रीमान् समारुह्य किल प्रभो ।
मुमोच बाणान् कौरव्य प्रद्युम्नाय महाबलः ॥ १३
ततो बाणमयं वर्षं व्यसृजत् तरसा रणे ।
प्रद्युम्नो भुजवेगेन साल्वं सम्मोहयन्निव ॥ १४
स तैरभिहतस्सङ्ख्ये नामर्षयत सौभराट् ।
शरान् दीप्ताग्निसङ्काशान् मुमोच तनये मम ॥ १५
स साल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः ।
मुमोच बाणं च रिपोर् मर्मभेदिनमाहवे ॥ १६
तस्य मर्म विभिद्याशु स बाणो मत्सुतेरितः ।
विवेश हृदयं पत्री स पपात भृशाहतः ॥ १७
तस्मिन्निपतिते वीरे साल्वराजे विचेतसि ।
सम्प्राद्रवन् दानवेन्द्रा दारयन्तो वसुंधराम् ॥ १८
हाहाकृतमभूत् सैन्यं साल्वस्य पृथिवीपते ।

नष्टसंज्ञे निपतिते तदा सौभपतौ नृपे ॥ १९

तत उत्थाय राजेन्द्र प्रतिलभ्य स चेतनाम् ।
मुमोच बाणं तरसा प्रद्युम्नाय महाबलः ॥ २०

तेन बाणेन महता प्रद्युम्नस्समरे स्थितः ।
जत्रुदेशे भृशं विद्धो [1]व्यवासीदद्रथे तदा ॥ २१

तं स विद्ध्वा तु राजेन्द्र साल्वो रुक्मिणिनन्दनम् ।
ननाद सिंहनादं च नादेनापूरयन् महीम् ॥ २२

[2]ततो मोहं समापन्ने तनये मम भारत ।
मुमोच बाणांस्त्वरितः पुनरन्यान् दुरात्मवान् ॥ २३

स तैरभिहतो बाणैर् बहुभिस्तेन मोहितः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ २४

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

॥ ३१ ॥ कैरातपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[ अस्मिन्नध्याये २४ श्लोकाः ]

---

1. ख—मुमोह समरे तदा
2. ख—इदमर्धं नास्ति

## ॥ पञ्चदशोऽध्यायः ॥

प्रद्युम्ने साल्वबाणाभिहत्या मूर्च्छिते सारथिना रणाङ्गणादन्यतो रथयापनम् ॥१॥ ततः प्रतिबुद्धेन प्रद्युम्नेन सारथिं प्रति सविषादोक्तिः ॥२॥ प्राद्युम्नपराजितस्य साल्वस्य रणादपयानम् ॥ ३ ॥

श्रीभगवान्—

साल्वबाणार्दिते तस्मिन् प्रद्युम्ने रणवल्लभ ।
वृष्णयो भग्नसङ्कल्पा विव्यथुः पृतनामुखे ॥ १

हाहाकृतमभूत् सर्वं वृष्ण्यन्धकबलं तदा ।
प्रद्युम्ने पतिते राजन् साल्वः प्रमुदितोऽभवत् ॥ २

तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत् तूर्णं शिक्षितो दारुकिस्तदा ॥ ३

नातिदूरापयाते तु रथे रथवरप्रणुत् ।
धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदम् ॥ ४

प्रद्युम्नः—

सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः ।
नैष वृष्णिप्रवीराणाम् आहवे धर्म उच्यते ॥ ५

कच्चित् सौते न ते मोहस् साल्वं दृष्ट्वा महाहवे ।
विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथम् ॥ ६

सूतः—

जानार्दने न मे मोहो नापि मां भयमाविशत् ।
अतिभारं तु ते मन्ये साल्वं केशवनन्दन ॥ ७

[1]सोपयामि शनैर्वीर बलवानेष पापकृत् ।
मोहितश्च रणे शूरो रक्ष्यस्सारथिना रथी ॥ ८

आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाऽप्यहम् ।
[2]रक्षितव्यो रणे नित्यम् इति मत्वाऽपयाम्यहम् ॥ ९

एकश्चासि महाबाहो बहवश्चापि दानवाः ।
न समं रौक्मिणेयाहम् इति मत्वाऽपयामि वै ॥ १०

श्रीभगवान्—

[3]एवं ब्रुवति सूते तु तदा मकरकेतुमान् ।
उवाच सूतं कौरव्य संनिवर्त्य रथं पुनः ॥ ११

प्रद्युम्नः—

दारुकात्मज मैवं त्वं पुनः कार्षीः कथञ्चन ।
व्यपयानं रणात् सौते जीवतो मम कर्हिचित् ॥ १२

न स वृष्णिकुले जातो यो वै त्यजति सङ्गरम् ।
यश्चापि पतितं हन्ति तवास्मीति च वादिनम् ॥ १३

तथा स्त्रियं वै यो हन्ति वृद्धान् बालांस्तथैव च ।

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. अ—अर्धलयं नास्ति

विरथं मुक्तकेशं च भग्नशस्त्रायुधं तथा ॥ १४

त्वं च सूतकुले जातो विदितस्सूतकर्मणि ।
धर्मज्ञश्चासि वृष्णीनाम् आहवेष्वपि दारुके ॥ १५

[1]वर्णनं चरितं कृत्स्नं वृष्णीनां पृतनामुखे ।
अपयानं पुनस्सौते मैवं कार्षीः कथञ्चन ॥ १६

अपयातं हतं पृष्ठे भीरुं रणपलायिनम् ।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ॥ १७

केशवस्याग्रजो वाऽपि नीलवासा मदोत्कटः ।
किं वक्ष्यति महाबाहुर् बलदेवस्समागतः ॥ १८

किं वक्ष्यति शिनेर्नप्ता रणसिंहो महारथः ।
अपयातं रणात् सौते साम्बश्च समितिञ्जयः ॥ १९

चारुदेष्णश्च दुर्धर्षस् तथैव गदसारणौ ।
अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे ॥ २०

शूरं सम्भावितं [2]सन्तं नित्यं पुरुषमानिनम् ।
स्त्रियश्च वृष्णिवीराणां किं मां वक्ष्यन्ति सङ्गताः ॥ २१

प्रद्युम्नोऽयमपायाति भीतस्त्यक्त्वा रणाजिरम् ।
धिगेनमिति वक्ष्यन्ति साधु साध्विति मां प्रति ॥ २२

धिग्वचः परिहासो वा मम वा मद्विधस्य वा ।

1. ख—इदमर्धद्वयं नास्ति 2. क—नित्यं सन्तः; ख—नित्यं सुतं

मृत्युतोऽभ्यधिकस्सौते तस्मान्मा व्यपयाः पुनः ॥ २३

भारं हि मयि संन्यस्य यातो मधुनिहा हरिः ।
यज्ञं भारतसिंहस्य पार्थस्यामिततेजसः ॥ २४

कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः ।
साल्वं निवारयिष्येऽहं तिष्ठ त्वमिति सूतज ॥ २५

स च सम्भावयन्मां वै निवृत्तो हृदिकात्मजः ।
तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथम् ॥ २६

उपयान्तं दुराधर्षं शङ्खचक्रगदाधरम् ।
पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि [1]महाभुजम् ॥ २७

सात्यकिं बलदेवं च ये चान्ये तत्र वृष्णयः ।
मया स्पर्धन्ति सततं किं नु वक्ष्यामि तानहम् ॥ २८

[2]त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतश्शरैः ।
त्वयाऽपनीतो विवशो न जीवेयं कथञ्चन ॥ २९
[3]संनिवर्त रथेनाशु पुनर्दारुकनन्दन ।
न चैतदेवं कर्तव्यम् आपत्सु च कथञ्चन ॥ ३०

न जीवितमहं सौते बहुमन्ये कदाचन ।
अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतश्शरैः ॥ ३१

---

1. क-ख—जनार्दनम्
2. क—अर्धचतुष्टयं नास्ति
3. ख—अर्धचतुष्टयं नास्ति

कदा मां सूतपुत्र त्वं जानीषे वा भयार्दितम् ।
अपयातं रणं हित्वा यथा [1]कापुरुषं तथा ॥ ३२

अयुक्तं तु मया त्यक्तुं सङ्ग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृशं स त्वं याहि रणाजिरम् ॥* ३३

श्रीभगवान्—

एवमुक्तस्तु कौन्तेय सूतपुत्रस्ततो मृधे ।
प्रद्युम्नमब्रवीच्छ्लक्ष्णं मधुरं वाक्यमञ्जसा ॥ ३४

सौतिः—

न मे भयं रौक्मिणेय सङ्ग्रामे यच्छतो हयान् ।
युद्धज्ञश्चास्मि वृष्णीनां नात्र किञ्चिदतोऽन्यथा ॥ ३५

आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः ।
सर्वार्थेषु रथी रक्ष्यस् त्वं चापि भृशपीडितः ॥ ३६

त्वं हि साल्वप्रयुक्तेन पत्रिणाभिहतो भृशम् ।
कश्मलाभिहतो वीर ततोऽहमपयातवान् ॥ ३७

स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया ।
पश्य मे हयसंयाने शिक्षां केशवनन्दन ॥ ३८

दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः ।

1. ख-घ—कापुरुषस्तथा
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

वीतभीः प्रविशाम्येतां साल्वस्य महतीं चमूम् ॥ ३९

श्रीभगवान्—

एवमुक्त्वा ततो वीरो हयान् सं[1]योज्य सङ्गरे ।
रश्मिभिश्च समुद्यम्य जवेनाभ्यपतत् तदा ॥ ४०

मण्डलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ॥ ४१

प्रतोदेनाहता राजन् [2]रश्मिभिश्च समुद्यताः ।
उत्पतन्त इवाकाशं विबभुस्ते हयोत्तमाः ॥ ४२

ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम् ।
दह्यमाना इव तदा पस्पृशुश्चरणैर्महीम् ॥ ४३

सोऽपसव्यां चमूं तस्य साल्वस्य भरतर्षभ ।
चकार नातियत्नेन तदद्भुतमिवाभवत् ॥ ४४

अमृष्यमाणोऽपसव्यं साल्वस्समितिदारुणः ।
यन्तारमस्य सहसा त्रिभिर्बाणैस्समर्पयत् ॥ ४५

दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन् ।
भूय एव महाबाहो प्रययौ हितसम्मतः ॥ ४६

ततो बाणान् बहुतरान् पुनरेव स सौभराट् ।
मुमोच तनये वीर मम रुक्मिणिनन्दने ॥ ४७

---

1. क-ख—चोद्य संयुगे
2. ख—अयं पादोऽनन्तरश्च न स्तः

तानप्राप्ताञ्शितैर्बाणैश् चिच्छेद परवीरहा ।
रौक्मिणेयस्स्मितं कृत्वा दर्शयन् पाणिलाघवम् ॥ ४८

भग्नान् दृष्ट्वा तु तान् बाणान् प्रद्युम्नेन स सौभराट् ।
आसुरीं दारुणीं मायाम् आस्थाय व्यसृजच्छरान् ॥ ४९

तां प्रयुक्तां समाज्ञाय दैतेयास्त्रं महाबलम् ।
ब्रह्मास्त्रेणान्तरा च्छित्त्वा मुमोचान्यान् पतत्रिणः ॥ ५०

तस्य चास्त्रं विधूयाथ विव्याध रुधिराशनान् ।
शिरस्युरसि वक्त्रे च स मुमोह पपात च ॥ ५१

तस्मिन्निपतिते क्षुद्रे साल्वे बाणप्रपीडिते ।
रौक्मिणेयोऽपरं बाणं संदधे शत्रुतापनः ॥ ५२

तमर्चितं सर्वदाशार्हपूगैर्
आशीर्भिरग्निज्वलनप्रकाशम् ।
दृष्ट्वा शरं ज्यामभिनीयमानं
बभूव हाहाकृतमन्तरिक्षम् ॥ ५३

ततो देवगणास्सर्वे सेन्द्रास्सहधनेश्वराः ।
नारदं प्रेषयामासुश् श्वसनं च महाबलम् ॥ ५४

तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् ॥ ५४॥

नारदश्वसनौ—

नैष वध्यस्त्वया वीर साल्वराजः कथञ्चन ।

संहरस्व पुनर्बाणम् अवध्योऽयं त्वया रणे ॥ ५५॥
एतस्य च शरस्याजौ नावध्योऽस्ति पुमान् क्वचित् ॥ ५६
मृत्युरस्य महाबाहो रणे देवकिनन्दनः ।
कृष्णस्सङ्कल्पितो धात्रा तन्मिथ्या न भवेदिति ॥ ५७

श्रीभगवान्—

ततः परमसंहृष्टः प्रद्युम्नश्शरमुत्तमम् ।
सञ्जहार धनुश्श्रेष्ठात् तूणौ चैव न्यवेशयत् ॥ ५८
तत उत्थाय राजेन्द्र साल्वः परमदुर्मनाः ।
व्यपायात् सबलस्तूर्णं प्रद्युम्नशरपीडितः ॥ ५९
स द्वारकां परित्यज्य साल्वो वृष्णिभिरर्दितः ।
[1]सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ३१ ॥ कैरातपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ६० श्लोकाः ]

## ॥ षोडशोऽध्यायः ॥

कृष्णेन युधिष्ठिरंप्रति स्वस्य साल्वेन सह युद्धप्रकारकथनम् ॥

श्रीभगवान्—

आनर्तनगरं मुक्तं ततोऽहमगमं तदा ।
महाक्रतौ राजसूये निवृत्ते भरतर्षभ ॥ १

1. ख—इदमर्धं नास्ति

अपश्यं द्वारकां चैव महाराज हतत्विषम् ।
निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् ॥ २

अनभिज्ञेयरूपाणि द्वारकोपवनानि च ।
दृष्ट्वा शङ्कोपपन्नोऽहम् अपृच्छं हृदिकात्मजम् ॥ ३

अस्वस्थनरनारीकम् इदं वृष्णिपुरं भृशम् ।
किमिदं नरशार्दूल श्रोतुमिच्छामहे वयम ॥ ४

एवमुक्तस्तु स मया विस्तरेणेदमब्रवीत् ।
रोधं मोक्षं च साल्वेन हार्दिक्यो राजसत्तम ॥ ५

ततोऽहं कौरवश्रेष्ठ श्रुत्वाऽप्रियमनुत्तमम् ।
विनाशे साल्वराजस्य तदैवाकरवं मतिम् ॥ ६

ततोऽहं भरतश्रेष्ठ समाश्वास्य पुरे जनम् ।
राजानमाहुकं चैव तथैवानकदुन्दुभिम् ॥ ७

सर्वान् वृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा ।
अप्रमादस्सदा कार्यो नगरे यादवर्षभाः ॥ ८

साल्वराजविनाशाय प्रयातं मां निबोधत ।
नाहत्वा विनिवर्तिष्ये पुरीं द्वारवतीं प्रति ॥ ९

ससाल्वं सौभनगरं हत्वा द्रष्टास्मि वः पुनः ।
त्रिःसामा हन्यतामेषा दुन्दुभिश्शत्रुभीषणी ॥ १०

[1]ते मयाऽऽश्वासिता वीरा यथावद्भरतर्षभ ।
सर्वे मामब्रुवन् हृष्टाः प्रयाहि जहि शात्रवान् ॥ ११
तैः प्रहृष्टात्मभिर्वीरैर् आशीर्भिरभिनन्दितः ।
वाचयित्वा द्विजश्रेष्ठान् प्रणम्य शिरसा भवम् ॥ १२
[2]शैब्यसुग्रीवयुक्तेन रथेनाच्छादयन् दिशः ।
प्रध्माय शङ्खप्रवरं पाञ्चजन्यं भयावहम् ॥ १३
प्रयातोऽस्मि नरव्याघ्र बलेन महता वृतः ।
कॢप्तेन चतुरङ्गेण बलेन जितकाशिना ॥ १४
समतीत्य बहून् देशान् गिरींश्च बहुपादपान् ।
सरांसि सरितश्चैव मार्तिकावतमासदम् ॥ १५
तत्राश्रौषं नरव्याघ्र साल्वं नगरमन्तिकात् ।
प्रयान्तं सौभमास्थाय तमहं पृष्ठतोऽन्वगाम् ॥ १६
दृष्टवानस्मि राजेन्द्र साल्वराजमथान्तिके ॥ १६॥
ततस्सागरमासाद्य कुक्षौ तस्य चलोर्मिणः ।
समुद्रनाभ्यां साल्वोऽभूत् सौभमास्थाय शत्रुहन् ॥ १७॥
स समालोक्य सहसा सेनां स्वां प्राहिणोद्युधि ॥ १८
[3]मद्बाहुना च सेनायां शिष्टायां किंचिदेव च ।
स समालोक्य सहसा स्मयन्निव युधिष्ठिर ॥ १९

1. ख—अर्धमिदं नास्ति　2. ख-घ—सैन्य　3. ख—इदमर्धं नास्ति

आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः ॥ १९॥

[1]तस्य शार्ङ्गविनिर्मुक्तैर् बहुभिर्मर्मभेदिभिः ।
पुरं नासाद्यत शरैस् ततो मां रोष आविशत् ॥ २०॥

स चापि पापप्रकृतिर् दैतेयापशदो नृप ।
पर्यवर्षत दुर्धर्षश् शरधारास्सहस्रशः ॥ २१॥

सैनिकान् मम सूतं च हयांश्च समवाकिरत् ।
अचिन्तयन्तस्तु शरान् वयं युध्याम भारत ॥ २२॥

ततश्शतसहस्राणि शराणां नतपर्वणाम् ।
चिक्षिपुस्समरे वीरा मयि साल्वपदानुगाः ॥ २३॥

ते हयान् मे रथं चैव ध्वजं दारुकमेव च ।
छादयामासुरसुरास् साल्वराजेन चोदिताः ॥ २४॥

न हया न रथो वीर न ध्वजो न च दारुकः ।
अदृश्यन्त शरैश्छन्नास् तथाऽहं सैनिकाश्च मे ॥ २५॥

ततोऽहमपि कौरव्य शराणामयुतान् बहून् ।
आमन्त्रितांश्च धनुषि दिव्येन विधिनाऽक्षिपम् ॥ २६॥

न तत्र विषयस्त्वासीन्मम सैन्यस्य भारत ।
खे विषक्तं हि तत्सैन्यं क्रोशमात्र इवाभवत् ॥ २७॥

ततस्ते प्रेक्षकास्सर्वे देवा वै दिवमास्थिताः ।

---

1. अ-ख—अर्धलयं नास्ति

हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः ॥　　२८॥

मत्कार्मुकविनिर्मुक्ता दानवानां महारणे ।
अङ्गेषु रुधिराक्तास्ते विविशुश्शलभा इव ॥　　२९॥

ततो हलहलाशब्दस् सौभमध्ये व्यवर्धत ।
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ॥　　३०॥

ते निकृत्तभुजस्कन्धाः कबन्धाकृतिदर्शनाः ।
नदन्तो भैरवान्नादान् निपतन्ति स्म दानवाः ॥　　३१॥

ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम् ।
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् ॥　　३२॥

तान् दृष्ट्वा पतितांस्तत्र साल्वस्सौभपतिस्तदा ।
मायायुद्धेन महता योधयामास मां युधि ॥　　३३॥

ततो [1]हुन्दुहलाः प्रासाश् शक्तिशूलपरश्वथाः ।
पट्टसाश्च मुसुण्ड्यश्च प्रपतन्त्यनिशं मयि ॥　　३४॥

तामहं माययैवाशु प्रतिगृह्य व्यनाशयम् ।
तस्यां हतायां मायायां गिरिश्रृङ्गैरयोधयत् ॥　　३५॥

ततोऽभवत्तम इव प्रकाश इव चाभवत् ।
दुर्दिनं सुदिनं चैव शीतमुष्णं च भारत ॥　　३६॥

[2]अङ्गारपांसुवर्षं च शस्त्रवर्षं च भारत ॥　　३७

---

1. क-घ—हुलुः　ख—गदा　　2. क-ख —इदमर्धं नास्ति

एवं मायां विकुर्वाणो योधयामास मां रिपुः ।
विज्ञाय तदहं सर्वं माययैव व्यनाशयम् ॥ ३८

यथाकालं तु युद्धेन व्यधमं सर्वतश्शरैः ।
ततो व्योम महाराज शतसूर्यमिवाभवत् ॥ ३९

शतचन्द्रं च कौन्तेय सहस्रायुततारकम् ।
ततो नाज्ञायत तदा दिवारात्रं तथा दिशः ॥ ४०

ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयम् ।
ततस्तदस्त्रं मन्त्रेण विधूतं शरतूलवत् ॥ ४१

तथा समभवद्युद्धं तुमुलं रोमहर्षणम् ।
[1]लब्ध्वा लोकं च राजेन्द्र पुनश्शत्रुमयोधयम् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ३१ ॥ कैरातपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]

## ॥ सप्तदशोऽध्यायः ॥

कृष्णसाल्वयोर्युद्धम् ॥१॥ साल्वेन स्वमायासृष्टवसुदेवस्य शिरश्छेदनप्रदर्शनेन कृष्णव्यामोहनम् ॥ २ ॥ ततो मुहूर्तेन प्रतिबुद्धेन कृष्णेन स्वानुभूतस्य मायिकत्वाध्यवसायः ॥ ३ ॥

श्रीभगवान्—

एवं स पुरुषव्याघ्रस् साल्वो [2]राज्ञां महारिपुः ।
युध्यमानो मया सङ्ख्ये वियदभ्यगमत् पुनः ॥ १

1. क-ख—लब्धालोकस्तु 2. ख-घ—राजा

ततश्शतघ्नीश्च महागदाश्च
दीप्ताश्च शूलानसिसायकांश्च ।
चिक्षेप रोषान्मयि मन्दबुद्धिस्
साल्वो महाराज जयाभिकाङ्क्षी ॥ २

तानाशुगैरापततोऽहमाशु
निवार्य तूर्णं खगमान् ख एव ।
द्विधा त्रिधा वाऽच्छिनमाशु मुक्तैस्
ततोऽन्तरिक्षे निनदो बभूव ॥ ३

ततश्शतसहस्रेण शराणां नतपर्वणाम् ।
दारुकं वाजिनश्चैव रथं च समवाकिरत् ॥ ४

ततो मामब्रवीद्वीरो दारुको विह्वलन्निव ।
स्थातव्यमिति तिष्ठामि साल्वबाणप्रपीडितः ॥ ५

इति तस्य निशम्याहं सारथेः करुणं वचः ।
अवेक्षमाणो यन्तारम् अवशं शरपीडितम् ॥ ६

न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये ।
अन्तरं पाण्डवश्रेष्ठ पश्यामि न हतं शरैः ॥ ७

स तु बाणमयोत्पीडो व्यसृजद्रुधिरं बहु ।
अभिवृष्टो यथा मेघैर् गिरिर्गैरिकधातुमान् ॥ ८

अभीशुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ।

संस्तम्भयं महाबाहो साल्वबाणप्रपीडितम् ॥ ९

अथ मां पुरुषः कश्चिद् द्वारकानिलयोऽब्रवीत् ॥ ९॥

[1]त्वरितो रथमारोप्य सौहृदादिव भारत ।

आहुकस्य वचो वीर तस्यैव परिचारकः ॥ १०॥

विषण्णस्साधुवचनम् तन्निबोध युधिष्ठिर ।

द्वारकाधिपतिर्वीर आह त्वामाहुको वचः ॥ ११॥

आहुकः—

केशवैहि विजानीष्व यत्त्वां पितृसखोऽब्रवीत् ॥ १२

उपयात्वाद्य साल्वेन द्वारकां वृष्णिनन्दन ।

विषक्ते त्वयि दुर्धर्ष हतश्शूरसुतो बलात् ॥ १३

तदलं साधुयुद्धेन निवर्तस्व जनार्दन ।

द्वारकामेव रक्षस्व कार्यमेतन्महत्तव ॥ १४

श्रीभगवान्—

इत्येवं तस्य वचनं श्रुत्वा परमदुर्मनाः ।

निश्चयं नाधिगच्छामि कर्तव्यस्येतरस्य वा ॥ १५

सात्यकिं बलदेवं च प्रद्युम्नं च महारथम् ।

[2]जगर्हे मनसा वीरांस् तच्छ्रुत्वा विप्रियं वचः ॥ १६

अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ।

तेषु रक्षां समाधाय प्रयातस्सौभपातने ॥ १७

बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा ॥ १७॥

---

1. अर्धपञ्चकं नास्ति 2. ख-घ—विगर्हे

सात्यकिश्चारुदेष्णश्च रौक्मिणेयश्च वीर्यवान् ।
साम्बप्रभृतयश्चैवेत्यहमासं सुदुर्मनाः ॥ १८॥

एतेषु हि नरव्याघ्र जीवत्सु न कथञ्चन ।
शक्यश्शूरसुतो हन्तुम् अपि वज्रभृता स्वयम् ॥ १९॥

[1]हतश्शूरसुतो व्यक्तं व्यक्तं ते च परासवः ।
बलदेवमुखास्सर्वे इति मे निश्चिता मतिः ॥ २०॥

सोऽहं सर्वविनाशं तं चिन्तयानो मुहुर्मुहुः ।
अविह्वलो महाराज पुनस्साल्वमयोधयम् ॥ २१॥

ततोऽपश्यं महाराज प्रपतन्तमहं नृप ।
सौभाच्छूरसुतं वीर ततो मां मोह आविशत् ॥ २२॥

तस्य रूपं प्रपततः पितुर्मम नराधिप ।
ययातेः क्षीणपुण्यस्य स्वर्गादिव महीतलम् ॥ २३॥

विशीर्णगलितोष्णीष[2]स्रस्तकुण्डलभूषणः ।
प्रपतन् दृश्यते पार्थ क्षीणपुण्य इव ग्रहः ॥ २४॥

ततश्शार्ङ्गं धनुश्श्रेष्ठं कराग्रात् प्रापतन्मम । २५
मोहापन्नस्तु कौन्तेय रथोपस्थ उपाविशम् ॥ २५॥

ततो हाहाकृतं सर्वं सैन्यं मे गतचेतनम् ।

---

1. ख—हतश्शूरसुतो व्यक्तमिति मे निश्चिता मतिः । मध्ये अर्धं नास्ति
2. क-ख—प्रकीर्णाम्बरमूर्धजः

मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ॥ २६॥

प्रसार्य बाहू पततः प्रसार्य चरणावपि ।
रूपं पितुरपश्येयं तच्छकुनेः पततो यथा ॥ २७॥

तं पतन्तं महाबाहो शूलपट्टसपाणयः ।
अभिघ्नन्तो भृशं वीर मम चेतो व्यकम्पयन् ॥ २८॥

ततो मुहूर्तात् प्रतिलभ्य संज्ञाम्
अहं तदा वीर महाविमर्दे ।
न तत्र सौभं न रिपुं न साल्वं
पश्यामि वृद्धं पितरं न चापि ॥ २९॥

ततो ममासीन्मनसि मायेयमिति निश्चितम् ।
प्रबुद्धोऽस्मि ततो भूयश्शतशोऽवाकिरं शरान् ॥ ३०॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ३१ ॥ कैरातपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

## ॥ अष्टादशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति स्वेन साल्वसंहारकथनपूर्वकं सुभद्राभिमन्युभ्यां सह द्वारकागमनम् ॥ १ ॥ धृष्टद्युम्नधृष्टकेतुभ्यां यथाक्रमं द्रौपदेयानकुलभार्यां चादाय स्वस्वनगरगमनम् ॥ २ ॥

श्रीभगवान्—

ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः ।
शरैरपातयं सौभाच्छिरांसि विबुधद्विषाम् ॥ १

शरांश्चाशीविषाकारान् ऊर्ध्वगांस्तिग्मतेजसः ।
अप्रैषं साल्वराजाय शार्ङ्गमुक्तान् सुवाससः ॥ २

ततो नादृश्यत रणे सौभः कुरुकुलोद्वह ।
अन्तर्हितो माययाऽभूत् ततोऽहं विस्मितोऽभवम् ॥ ३

[1]अथ दानवसङ्घास्ते विकृताननमूर्धजाः ।
उदक्रोशन्महाराज धिष्ठिते मयि भारत ॥ ४

ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महारणे ।
अयोजयं तद्वधाय ततश्शब्द उपारमत् ॥ ५

हतास्ते दानवास्सर्वे यैस्स शब्द उदीरितः ।
शरैरादित्यसङ्काशैर् ज्वलितैश्शब्दसाधनैः ॥ ६

तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् ।
शब्दो यतो महाराज तत्रापि प्राहरं शरान् ॥ ७

एवं नादैर्दिशस्सर्वास् तिर्यगूर्ध्वं च भारत ।
नादयामासुरसुरास् ते चापि निहता मया ॥ ८

ततः प्राग्ज्योतिषं गत्वा पुनरेवाप्यदृश्यत ।
सौभं कामगमं वीर मोहयन्मम चक्षुषी ॥ ९

ततो लोकान्तकरणो दानवोऽथ नराकृतिः ।
शिलावर्षेण महता सहसा मां समावृणोत् ॥ १०

---

1. अ-घ—अर्धचतुष्टयं नास्ति

सोऽहं पर्वतवर्षेण वध्यमानस्समन्ततः ।
[1]वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ॥ ११

ततोऽहं पर्वताचितस् सहयः सहसारथिः ।
अप्रख्यातिमियां राजन् सध्वजः पर्वतैश्चितः ॥ १२

ततो वृष्णिप्रवीरा ये ममासन् सैनिकास्तदा ।
ते भयार्ता दिशस्सर्वे सहसा विप्रदुद्रुवुः ॥ १३

ततो हाहाकृतं सर्वम् अभूत् किल विशाम्पते ।
[2]द्यौरन्तरिक्षं भूश्चैवादृश्यमाने तदा मयि ॥ १४

ततो विषण्णमनसो मम राजन् सुहृज्जनाः ।
रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ॥ १५

द्विषतां सम्प्रहर्षोऽभूद् आर्तिश्च सुहृदामपि ।
[3]एवमज्ञातवान् वीर पश्चादश्रौषमच्युत ॥ १६

ततोऽहमिन्द्रदयितं सर्वपाषाणभेदनम् ।
वज्रमुद्यम्य तान् सर्वान् पर्वतान् समशातयम् ॥ १७

ततः पर्वतभारार्ता मन्दप्राणविचेष्टिताः ।
हया मे सहसा राजन् वेपमाना इवाभवन् ॥ १८

मेघजाल इवाकाशे विदार्याभ्युदितं रविम् ।

---

1. ख—इदमर्धं नास्ति
2. ख—अर्धद्वयं नास्ति
3. ख—नास्तीदमर्धम्

दृष्ट्वा मां बान्धवास्सर्वे हर्षमाहारयन् पुनः ॥ १९

ततो मामब्रवीत् सूतः प्राञ्जलिः प्रणतो नृप ॥ १९॥

सूतः—

साधु सम्पश्य वार्ष्णेय साल्वं सौभपतिं स्थितम् ।
अलं कृष्णावमन्यैनं साधु यत्नं समाचर ॥ २०॥

मार्दवं सखितां चैव साल्वादद्य व्यपाहर ।
जहि साल्वं महाबाहो मैनं जीवय केशव ॥ २१॥

सर्वैः पराक्रमैर्वीर वध्यश्शत्रुरमित्रहन् ॥ २२

न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ।
योऽपि स्यात् पीठकः कश्चित् किं पुनस्समरे स्थितः ॥ २३

[1]स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो ।
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगादयम् ॥ २४

[2]जितवाञ्जामदग्न्यं स कोटिवर्षगणान् बहून् ।
स एष नान्यैर्वध्यो हि त्वदृते नैव कश्चन ॥ २५

नैष मार्दवसाध्यो वै मतो नैष सखा तव ।
येन त्वं योधितो वीर द्वारका चावमर्दिता ॥ २६

श्रीभगवान्—

एवमादि तु कौन्तेय श्रुत्वाऽहं सारथेर्वचः ।

---

1. ख—इदमर्धं नास्ति 2. क-ख—अर्धद्वयं नास्ति

तत्त्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् ॥ २७

वधाय साल्वराजस्य सौभस्य च निपातने ।
दारुकं चाब्रुवं वीर मुहूर्तं स्थीयतामिति ॥ २८

ततोऽप्रतिहतं दिव्यम् अभेद्यमतिवीर्यवत् ।
आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् ॥ २९

यक्षाणां राक्षसानां च दानवानां च संयुगे ।
राज्ञां च प्रतिलोमानां भस्मान्तकरणं महत् ॥ ३०

क्षुरान्तममलं चक्रं कालान्तकयमोपमम् ।
अभिमन्त्र्याहमतुलं द्विषतां विनिबर्हणम् ॥ ३१

जहि सौभं स्ववीर्येण [1]ये चात्र रिपवो मम ।
इत्युक्त्वा भुजवीर्येण तस्मै प्राहिणवं रुषा ॥ ३२

रूपं सुदर्शनस्यासीद् आकाशे पततस्तदा ।
द्वितीयस्येव सूर्यस्य युगान्ते परिवेष्टयतः ॥ ३३

तत् समासाद्य नगरं सौभं व्यपगतत्विषम् ।
[2]मध्येन दारयामास महामेरुमिवोच्छ्रितम् ॥ ३४

द्विधा कृतं ततस्सौभं सुदर्शनबलाहृतम् ।
महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ॥ ३५

तस्मिन्निपतिते सौभे चक्रमागात् करं मम ॥ ३५॥

---

1. ख—अयं पादोऽनन्तरश्च न स्तः 2. अ-ख—चक्रं विदारयामास

[1]पुनश्चोद्धूय वेगेन साल्वायेत्यहमब्रुवम् ॥　　३६

ततस्साल्वं गदां गुर्वीम् आविध्यन्तं महाहवे ।
द्विधा चकार सहसा प्रजज्वाल च तेजसा ॥　　३७

तस्मिन्निपतिते वीरे दानवास्त्रस्तचेतसः ।
हाहाकृता दिशो जग्मुर् अर्दिता मम सायकैः ॥　　३८

ततोऽहं समवस्थाप्य रथं सौभसमीपतः ।
शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्यहर्षयम् ॥　　३९

तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम् ।
दह्यमानमभिप्रेक्ष्य स्त्रियस्तास्सम्प्रदुद्रुवुः ॥　　४०

एवं निहत्य समरे साल्वं सौभं निपात्य च ।
आनर्तान् पुनरागम्य सुहृदां प्रीतिमावहम् ॥　　४१

एतस्मात् कारणाद् राजन् नागमं गजसाह्वयम् ।
यद्यागां परवीरघ्न न हि जीवेत् सुयोधनः ॥　　४२

वैशम्पायनः—

एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ।
आमन्त्र्य प्रययौ श्रीमान् पाण्डवान् मधुसूदनः ॥　　४३

अभिवाद्य महाबाहुर् धर्मराजं युधिष्ठिरम् ।
राज्ञा मूर्धन्युपाघ्रातो भीमेन च महाभुजः ॥　　४४

---

1. ख—इदमर्धं नास्ति

सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम् ।
आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ॥ ४५

सैन्यसुग्रीवयुक्तेन रथेनादित्यवर्चसा ।
द्वारकां प्रययौ कृष्णस् समाश्वास्य युधिष्ठिरम् ॥ ४६

ततः प्रयाते दाशार्हे धृष्टद्युम्नोऽपि पार्षतः ।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ४७

धृष्टकेतुस्स्वसारं च समादायाथ चेदिराट् ।
जगाम पाण्डवान् दृष्ट्वा रम्यां शुक्तिमतीं पुरीम् ॥ ४८

केकयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसः ।
आमन्त्र्य पाण्डवान् सर्वान् प्रययुस्तेऽपि भारत ॥ ४९

ब्राह्मणाश्च महाभागास् तथा विषयवासिनः ।
विसृज्यमानास्सुभृशं न त्यजन्ति स्म पाण्डवान् ॥ ५०

समवायस्स राजेन्द्र सुमहाद्भुतदर्शनः ।
आसीन्महात्मनां तेषां काम्यके भरतर्षभ ॥ ५१

युधिष्ठिरस्तु विप्रांस्तान् अनुमान्य महामनाः ।
शशास पुरुषान् काले रथान् योजयतेति सः ॥ ५२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ३१ ॥ कैरातपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[ अस्मिन्नध्याये ५२ श्लोकाः ]

## ॥ एकोनविंशोऽध्यायः ॥

कृष्णादीनां पाण्डवान् दृष्ट्वा वनात् स्वनगरगमनानन्तरं पाण्डवैः पौराणामाश्वासनपूर्वकं नगरं प्रति निवर्तनम् ॥ १ ॥

---

वैशम्पायनः—

तस्मिन् दशार्हाधिपतौ प्रयाते
युधिष्ठिरो भीमसेनार्जुनौ च ।
यमौ च कृष्णा च पुरोहितश्च
रथान् महार्हान् परमाश्वयुक्तान् ॥ १

आस्थाय वीरास्सहिता वनाय
प्रतस्थिरे भूतपतिप्रकाशाः ।
हिरण्यनिष्कान् वसनानि गाश्च
प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः ॥ २

प्रेष्याः परे विंशतिरात्तशस्त्रा
धनूंषि शस्त्राणि शरांश्च दीप्तान् ।
मौर्वीस्सुयन्त्राणि कलापकांश्च
सर्वे समादाय जघन्यमीयुः ॥ ३

ततस्तु वासांसि च राजपुत्र्या
धात्र्यश्च दास्यश्च विभूषणं यत् ।

तदिन्द्रसेनस्त्वरितः प्रगृह्य
जघन्यमेवोपययौ रथेन ॥ ४
ततः कुरुश्रेष्ठमुपेत्य पौराः
प्रदक्षिणं चक्रुरदीनसत्त्वम् ।
तं ब्राह्मणाश्चाभ्यवदन् प्रसन्ना
मुख्याश्च सर्वे कुरुजाङ्गलानाम् ॥ ५
स चापि तानभ्यवदत् प्रसन्नस्
सहैव तैर्भ्रातृभिर्धर्मराजः ।
तस्थौ च तत्राधिपतिर्महात्मा
दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ॥ ६
पितेव पुत्रेषु स तेषु भावं
चक्रे कुरूणामृषभो महात्मा ।
ते चापि तस्मिन् भरतप्रबर्हे
तथा बभूवुः पितरीव पुत्राः ॥ ७
ततस्समासाद्य महाजनौघाः
कुरुप्रवीरं परिवार्य तस्थुः ।
हा नाथ हा धर्म इति ब्रुवन्तो
ह्रिया च सर्वेऽश्रुमुखा बभूवुः ॥ ८
ततः कुरूणामधिपः प्रजानां
पितेव पुत्रानपहाय चास्मान् ।

पौरानिमाञ्जानपदांश्च सर्वान्
　　हित्वा प्रयातः क्वनु धर्मराजः ॥　　९
धिग्धार्तराष्ट्रं सुनृशंसवृत्तं
　　धिक्सौबलं पापमतिं च कर्णम् ।
अनर्थमिच्छन्ति नरेन्द्र पापा
　　ये धर्मनित्यस्य सतस्त्वोग्राः ॥　　१०
स्वयं निवेश्याप्रतिमं महात्मा
　　पुरं महद्देवपुरप्रकाशम् ।
शतक्रतुप्रस्थममोघकर्मा
　　हित्वा प्रयातः क्वनु धर्मराजः ॥　　११
चकार यामप्रतिमां महात्मा
　　सभां मयो देवसभाप्रकाशाम् ।
तां देवगुप्तामिव देवमायां
　　हित्वा प्रयातः क्वनु धर्मराजः ॥　　१२
तान् धर्मकामार्थविदुत्तमौजा
　　बीभत्सुरुच्चैस्सहितानुवाच ॥　　१२॥

अर्जुनः—

आदास्यते वासमिमं निरुध्य
　　वनेषु राजा द्विषतां [1]यशांसि ॥　　१३

---

1. क-ख—शिरांसि

द्विजातिमुख्यास्सहिताः पृथक् च
भवद्भिरासाद्य तपस्विभिश्च ।
प्रसाद्य धर्मार्थविदश्च वाच्या
यथार्थसिद्धिः परमा भवेन्नः ॥ १४

वैशम्पायनः—

इत्येवमुक्ते वचनेऽर्जुनेन
ते ब्राह्मणाः सर्ववर्णाश्च राजन् ।
मुदाऽभ्यनन्दन सहिताश्च चक्रुः
प्रदक्षिणं धर्मभृतां वरिष्ठम् ॥ १५

आमन्त्र्य पार्थं च वृकोदरं च
धनञ्जयं याज्ञसेनीं यमौ च ।
प्रतस्थिरे राष्ट्रमपेतहर्षा
युधिष्ठिरेणानुमता यथास्वम ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ ३१ ॥ कैरातपर्वणि नवमोऽध्यायः ॥ ९ ॥

[अस्मिन्नध्याये १६ श्लोकाः]

———

## ॥ विंशतितमोऽध्यायः ॥

पाण्डवैश्चिरावस्थाननिर्धारणपूर्वकं द्वैतवनप्रवेशः ॥ १ ॥

वैशम्पायनः—

ततस्तेषु प्रयातेषु कौन्तेयस्सत्यसङ्गरः ।
अभ्यभाषत धर्मात्मा भ्रातृन् सर्वान् युधिष्ठिरः ॥ १

युधिष्ठिरः—

द्वादशेमानि वर्षाणि वस्तव्यं निर्जने वने ।
समीक्षध्वं महारण्ये देशं बहुमृगद्विजम् ॥ २

बहुपुष्पफलं रम्यं शिवं पुण्यजनोचितम् ।
यत्रेमा द्वादश समास् सुखं प्रतिवसेमहि ॥ ३

वैशम्पायनः—

एवमुक्ते प्रत्युवाच धर्मराजं धनञ्जयः ।
गुरुवन्मानवगुरुं मानयित्वा मनस्विनम् ॥ ४

अर्जुनः—

भवानेव महर्षीणां वृद्धानां पर्युपासिता ।
अज्ञातं मानुषे लोके भवतो नास्ति किञ्चन ॥ ५

त्वया ह्युपासिता नित्यं ब्राह्मणा वेदपारगाः ।
द्वैपायनप्रभृतयो नारदश्च महातपाः ॥ ६

यस्सर्वलोकद्वाराणि नित्यं सञ्चरते वशी ।
देवलोकाद्ब्रह्मलोकं गन्धर्वाप्सरसामपि ॥ ७

[1]अनुभावांश्च जानासि ब्राह्मणानां न संशयः ।
प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव ॥ ८

त्वमेव राजञ्जानासि श्रेयः कारणमेव च ।
यत्रेच्छसि महाराज निवासं तत्र कुर्महे ॥ ९

इदं द्वैतवनं नाम सरः पुण्यजनोचितम् ।
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥ १०

अत्रेमा द्वादश समा विहरेमेति रोचये ।
यदि तेऽनुमतं राजन् किमन्यन्मन्यते भवान् ॥ ११

युधिष्ठिरः—

ममाप्येतन्मतं पार्थ त्वया यत् समुदाहृतम् ।
गच्छामः पुण्यविख्यातं महद् द्वैतवनं सरः ॥ १२

वैशम्पायनः—

ततस्ते प्रययुस्सर्वे पाण्डवा धर्मचारिणः ।
ब्राह्मणैर्बहुभिस्सार्धं पुण्यं द्वैतवनं सरः ॥ १३

ब्राह्मणास्साग्निहोत्राश्च तथैव च निरग्नयः ।
स्वाध्यायिनो भिक्षवश्च सजपा वनवासिनः ॥ १४

1. ख—इदमर्धं नास्ति

बहवो ब्राह्मणास्तत्र परिवव्रुर्युधिष्ठिरम् ।
[1]तपस्विनस्सत्यशीलाश् शतशस्संशितव्रताः ॥ १५

ते यात्वा पाण्डवास्तत्र ब्राह्मणैर्बहुभिस्सह ।
पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभाः ॥ १६

तत् सालतालाम्रमधूकनीप-
कदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पफलैरुपेतं
महद्वनं राष्ट्रपतिर्ददर्श ॥ १७

महाद्रुमाणां शिखरेषु तस्थुर्
मनोरमा वाच उदीरयन्तः ।
मयूरनत्यूहचकोरसङ्घास्
तस्मिन् वने [2]कोकिलशारिकाश्च ॥ १८

करेणुयूथैस्सह यूथपानां
मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां
तस्मिन् वने राष्ट्रपतिर्ददर्श ॥ १९

मनोरमां भोगवतीं समेत्य
धृतात्मनां चीरजटाधराणाम् ।

---

1. ख—अर्धमेकं नास्ति	2. क-ख—काननकोकिलाश्च

[1]तस्मिन् वने धर्मभृतां निवासे
दद‍र्श सिद्धर्षिगणाननेकान् ॥ २०

ततस्स यानादवरुह्य राजा
सभ्रातृकस्सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठस्
त्रिविष्टपं शक्र इवामितौजाः ॥ २१

तं सत्यसन्धं सहिता निपेतुर्
दिदृक्षवश्चारणसिद्धसङ्घाः ।
वनौकसश्चापि नरेन्द्रसिंहं
मनस्विनस्सम्परिवार्य तस्थुः ॥ २२

स तत्र सर्वानभिवाद्य वृद्धान्
प्रत्यर्चितो राजवद्देववच्च ।
विवेश सर्वैस्सहितो द्विजाग्र्यैः
कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ २३

स पुण्यशीलः पितृवन्महात्मा
तपस्विभिर्धर्मपरैरुपेत्य ।
प्रत्यर्चितः पुष्पधरस्य मूले
महाद्रुमस्योपविवेश राजा ॥ २४

---

1. ख—सङ्घाननेकान् स ददर्श भूमिपस्
तथैव सिद्धर्षिगणाननेकान् ॥ [पाठान्तरम्]

भीमश्च कृष्णा च धनञ्जयश्च
यमौ च ते चानुचरा नरेन्द्रम् ।
विमुच्य वाहानवगाह्य सर्वे
तत्रोपतस्थुर्भरत[1]प्रधानाः ॥ २५

लतावितानावनतस्स पाण्डवैर्
महाद्रुमः पञ्चभिरुग्रधन्विभिः ।
बभौ निवासोपगतैर्महात्मभिर्
महागिरिर्वारणयूथपैरिव ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि विंशतितमोऽध्यायः ॥ २० ॥
॥ ३१ ॥ कैरातपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये २६ श्लोकाः]

---

## ॥ एकविंशोऽध्यायः ॥

मार्कण्डेयेन पाण्डवानुपेत्य धर्मोपदेशपूर्वकमुत्तरदिग्गमनम् ॥ १ ॥

---

वैशम्पायनः—

तत् काननं प्राप्य नरेन्द्रपुत्रास्
सुखोचिता दुःखमुपेत्य कृच्छ्रम् ।
विजह्रुरिन्द्रप्रतिमप्रकाशाः
[2]भागीरथी सालवनेषु तेषु ॥ १

---

1. क-ख—प्रवहाः 2. अ—सरस्वती

यतींश्च सर्वान् स मुनींश्च राजा
तस्मिन् वने मूलफलैरुदग्रैः ।
द्विजातिमुख्यानृषभः कुरूणां
संतर्पयामास महानुभावः ॥ २

इष्टीश्च पित्र्याणि तथा गृहाणि
तस्मिन् वने वसतां पाण्डवानाम् ।
पुरोहितस्सर्वसमृद्धतेजाश्
चकार धौम्यः पितृवन्महात्मा ॥ ३

अपेत्य राष्ट्राद्वसतां तु तेषाम्
ऋषिः पुराणोऽतिथिराजगाम ।
तमाश्रमं तीव्रसमृद्धतेजा
मार्कण्डेयश्श्रीमतां पाण्डवानाम् ॥ ४

स सर्वविद्द्रौपदीं वीक्ष्य कृष्णां
युधिष्ठिरं भीमसेनार्जुनौ च ।
संस्मृत्य रामं मनसा महात्मा
तपस्विमध्ये स्मयते महौजाः ॥ ५

तं धर्मराजो विमना इवाब्रवीत्
सर्वे ह्रिया यान्ति तपस्विनो माम् ।

भवानिदं किं स्मयतीव हृष्टस्
　　तपस्विनां पश्यतां मामुदीक्ष्य ॥　　६

मार्कण्डेयः—

न तात हृष्यामि न च स्मयामि
　　प्रहर्षजो मां भजते न दर्पः ।
तवापदं तात समीक्ष्य रामं
　　सत्यव्रतं दाशरथिं स्मरामि ॥　　७

स चापि राजा सह लक्ष्मणेन
　　वने निवासं पितुरेव शासनात् ।
धन्वी चरन् पार्थ पुरा मयैव
　　दृष्टो गिरेः ऋष्यमूकस्य सानौ ॥　　८

सहस्रनेत्रप्रतिमो महात्मा
　　यमस्य नेता नमुचेश्च हन्ता ।
पितुर्निदेशादनघस्स्वधर्मं
　　चरन् वने दाशरथिश्चकार ॥　　९

स चापि शक्रस्य समप्रभावो
　　महानुभावस्समरेष्वजेयः ।
विहाय भोगान् विचरन् वनेषु
　　नेशे बलस्येति चरेदधर्मम् ॥　　१०

नृपाश्च नाभागभगीरथादयो
महीमिमां सागरान्तां विजित्य ।
सत्येन तेऽप्यजयंस्तात लोकान्
नेशे बलस्येति चरेदधर्मम् ॥ ११

[1]अलर्कमाहुर्नरदेववर्यं
सत्यव्रतं काशिकरूशराजम् ।
विहाय राज्यानि वसूनि चैव
नेशे बलस्येति चरेदधर्मम् ॥ १२

धात्रा विधिर्यो विहितः पुराणास्
तं पूजयन्तो नरवर्य सन्तः ।
सप्तर्षयः पार्थ दिवि प्रभान्ति
नेशे बलस्येति चरेदधर्मम् ॥ १३

[2]महाबलान् पर्वतकूटमात्रान्
विषाणिनः पश्य गजान्नरेन्द्र ।
स्थितान्निदेशे बलिनश्च सर्वान्
नेशे बलस्येति चरेदधर्मम् ॥ १४

सत्येन धर्मेण यथानुवृत्त्या
श्रिया वृतस्सर्वभूतान्यतीत्य ।

1. क-ख—अयं श्लोको नास्ति 2. क—अर्धद्वयं नास्ति

यशश्च तेजश्च तवापि दीप्तं
विभावसोर्भास्करस्येव पार्थ ॥ १५

यथाप्रतिज्ञं तु महानुभाव
कृच्छ्रं वने वासमिमं निरुष्य ।
ततश्श्रियं तेजसा तेन दीप्ताम्
आदास्यसे पार्थिव कौरवेभ्यः ॥ १६

वैशम्पायनः—
तमेवमुक्त्वा वचनं महर्षिस्
तपस्विमध्ये सहितं सुहृद्भिः ।
सम्मन्त्र्य धौम्यं सहितांश्च पार्थांस्
ततः प्रतस्थे दिशमुत्तरां सः ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ३१ ॥ कैरातपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये १७ श्लोकाः]

---

## ॥ द्वाविंशोऽध्यायः ॥

दाल्भ्येन युधिष्ठिरं प्रति ब्राह्मणस्य क्षत्रवृद्धिकारणत्वकथनम् ॥ १ ॥
महर्षीणां युधिष्ठिराभिगमनम् ॥ २ ॥

---

वैशम्पायनः—
वसत्स्वथ द्वैतवने पाण्डवेषु महात्मसु ।
अनुकीर्णं महारण्यं ब्राह्मणैस्समपद्यत ॥ १

ईर्यमाणेन सततं ब्रह्मघोषेण सर्वतः ।
ब्रह्मलोकसमं पुण्यम् आसीद्द्वैतवनं सरः ॥ २

यजुषामृचां साम्नां च गद्यानां चैव भारत ।
आसीदुच्चार्यमाणानां निःस्वनो हृदयङ्गमः ॥ ३

ज्याघोषः पाण्डवेयानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यवर्धत ॥ ४

अथाब्रवीद्बको‌ऽभ्येत्य धर्मराजं युधिष्ठिरम् ।
सन्ध्यां कौन्तेयमासीनम् ऋषिभिः परिवारितम् ॥ ५

दाल्भ्यः—

पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम् ।
होमवेलां कुरुश्रेष्ठ सम्प्रज्वलितपावकाम् ॥ ६

चरन्ति धर्मं पुण्येऽस्मिंस् त्वया गुप्ता महाव्रताः ।
भृगवोऽङ्गिरसश्चैव वासिष्ठाः काश्यपैस्सह ॥ ७

आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः ।
सर्वस्य जगतश्श्रेष्ठा ब्राह्मणास्सम्मतास्त्वया ॥ ८

इदं तु वचनं पार्थ शृण्वेकाग्रमना मम ।
भ्रातृभिस्सह कौन्तेय यत्त्वां वक्ष्यामि कौरव ॥ ९

ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णौ दहतश्शत्रून् वनानीवाग्निमारुतौ ॥ १०

नाब्राह्मणस्तात चिरं बुभूषेद्
इच्छन्निमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं
लब्ध्वा द्विजं हन्ति नृपस्सपत्नान् ॥ ११

चरन्निःश्रेयसं धर्मं प्रजापालनकारितम् ।
नाभ्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ १२

[1]अनूनमासीदसुरस्य राजन्
वैरोचनेश्श्रीरतिकाङ्क्षिताय ।
लब्ध्वा महीं ब्राह्मणसम्प्रयोगात्
तेषां चरन् दुःखमतो ऽयनश्यत् ॥ १३

नाब्राह्मणं भूमिरियं सभूतिर्
वर्णं द्वितीयं भजते चिराय ।
समुद्रनेमिर्नमते तु तस्मै
यं ब्राह्मणश्शास्ति नयैर्विनीतम् ॥ १४

कुञ्जरस्येव सङ्ग्रामे परिगृह्याङ्कुशग्रहम् ।
[2]ब्रह्मणा विप्रहीनस्य क्षत्रस्य क्षीयते बलम् ॥ १५

[3]ब्रह्मणोऽप्रतिमा दृष्टिः क्षात्रस्याप्रतिमं बलम् ।

---

1. ख—सान्या स चैवमसु; घ—सानून
2. अ—ब्राह्मणप्रति ख—एतदादि अर्धपञ्चकं नास्ति "ब्राह्मणैः सह-चारिभिः" इति एकः पादोऽस्ति 3. क—नास्तीदमर्धम्

तौ यदा चरतस्सार्धं तदा लोकः प्रसीदति ॥ १६
यथा हि सुमहानग्निः कक्षं दहति सानिलः ।
तथा दहति राजन्यो ब्राह्मणेन सहारिषु ॥ १७
ब्राह्मणो ह्येष मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य च विवृद्धये ॥ १८

अलब्धलाभाय च लब्धवृद्धये
यथार्हतीर्थप्रतिपादनाय च ।
यशस्विनं वेदविदं विपश्चितं
बहुश्रुतं ब्राह्मणमेव वासयेत् ॥ १९

ब्राह्मणेषूत्तमा वृत्तिस् तव नित्यं युधिष्ठिर !
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ २०

वैशम्पायनः—

ततस्ते ब्राह्मणास्सर्वे बकं दाल्भ्यमपूजयन् ।
युधिष्ठिरे स्तूयमाने पुनस्सुमनसोऽभवन् ॥ २१
द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः ।
इन्द्रद्युम्नोद्दालुकिश्च क्रतुमेधास्सहस्रपात् ॥ २२
लवणाश्वश्च कण्वश्च काश्यपश्च महातपाः ।
हारीतस्स्थूलकर्णश्च अग्निवेश्योऽथ कौशिकः ॥ २३
जितवाक्च सुवाक्चैव [1]बृहदश्व ऋतावसुः ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

ऊर्ध्वरेता देवमित्रस् सुहोत्रो होत्रवाहनः ॥ २४

एते चान्ये च बहवो ब्राह्मणास्संशितव्रताः ।
अजातशत्रुमर्चन्तः पुरन्दरमिवर्षयः ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ३१ ॥ कैरातपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

## ॥ त्रयोविंशोऽध्यायः ॥

भीमादिसन्निधाने युधिष्ठिरं प्रति द्रौपद्याः सविषादवचनम् ॥

वैशम्पायनः—

ततो वनंगताः पार्थास् सायाह्ने सह कृष्णया ।
उपविष्टाः कथाश्चक्रुर् दुःखशोकपरायणाः ॥ १

प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
ततः कृष्णा धर्मराजम् इदं वचनमब्रवीत् ॥ २

द्रौपदी—

न नूनं तस्य पापस्य दुःखमस्मासु किञ्चन ।
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥ ३

यस्त्वां राजन् मया सार्धम् अजिनैः परिवारितम् ।

भ्रातृभिश्च तदा सर्वैर् नाभ्यभाषत किञ्चन ॥ ४

वनं प्रस्थाप्य दुर्मेधा नान्वतप्यत दुर्मतिः ॥ ४॥

आयसं हृदयं नूनं तस्यासीत् क्रूरकर्मणः ।

यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत् तदा ॥ ५॥

सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः ।

ईदृशं दुःखमानीय मोदते पापपूरुषः ॥ ६॥

चतुर्णामेव पापानाम् अश्रु वै नाशितं तदा ।

त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥ ७॥

दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।

दुर्भ्रातुस्तस्य चोग्रस्य राजन् दुःशासनस्य च ॥ ८॥

इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम ।

दुःखेनापि परीतानां नेत्रेभ्यः प्रापतज्जलम् ॥ ९॥

इदं च शयनं दृष्ट्वा यच्चासीत् ते पुरातनम् ।

शोचामि त्वां महाराज दृष्ट्वा भूतलशायिनम् ॥ १०॥

दान्तं यच्च सभामध्य आसनं रत्नभूषितम् ।

[1]दृष्ट्वा कुशबृसीं चेमां शोको मां दारयत्ययम् ॥ ११॥

यदपश्यं सभायां त्वां राजभिः परिवारितम् ।

तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १२॥

1. अ-घ—नास्तीदमर्धम्

या त्वां स्रक्चन्दनादिग्धम् अपश्यं सूर्यवर्चसम् ।
सा त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥ १३॥

या त्वाऽहं कौशिकैर्वस्त्रैश् शुभैर्बहु[1]विधैः पुरा ।
दृष्टवत्यस्मि राजेन्द्र सा त्वा पश्यामि चीरिणम् ॥ १४॥

यच्च ते रुक्मपात्रीभिर् ब्राह्मणेभ्यस्सहस्रशः ।
ह्रियते ते गृहादन्नं संस्कृतं सार्वकामिकम् ॥ १५॥

यतीनामगृहाणां ते तथैव गृहमेधिनाम् ।
[2]दीनानां भोजनं राजन्नतीव गुणवत् प्रभो ॥ १६॥

तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १७

यांस्ते भ्रातॄन् महाराज युवानो मृष्टकुण्डलाः ।
अभोजयंश्च मृष्टान्नैस् सूदाः परमसंस्कृतैः ॥ १८

सर्वांस्तानद्य पश्यन्त्या वने वन्येन जीवतः ।
अदुःखार्हान् मनुष्येन्द्र नोपशाम्यति मे मनः ॥ १९

भीमसेनामिमं चापि दुःखितं वनवासिनम् ।
ध्यायन्तं किं नु मन्युस्ते प्राप्ते काले न वर्धते ॥ २०

भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युतम् ।
सुखार्हमसुखं दृष्ट्वा कस्माद्राजन्नुपेक्षसे ॥ २१

---

1. क-ख—शतैः पुरा  2. अ-घ—यतीनां

[1]संस्कृतं विविधैर्धान्यैर् वस्त्रैरुच्चावचैस्तथा ।
तं तं वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २२

कुरूनपीह यस्सर्वान् हन्तुमुत्सहते प्रभुः ।
त्वत्प्रसादं प्रतीक्षंस्तु सहतेऽयं वृकोदरः ॥ २३

योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरातिसर्गे शीघ्रास्त्रे कालान्तकयमोपमः ॥ २४

यस्य शस्त्रप्रतापेन प्रणतास्सर्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥ २५

तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्जुनं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २६

[2]दृष्ट्वा वनगतं पार्थम् अदुःखार्हं सुखोचितम् ।
न च ते वर्धते मन्युस् तेन मुह्यामि भारत ॥ २७

यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
[3]तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २८

यो यानैरद्भुताकारैर् हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तं [4]गृह्णीयात् पार्थिवानां परंतपः ॥ २९

क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।

---

1. क—सत्कृतं विविधैर्मान्यैर्; ख—अर्धद्वयं नास्ति; घ—संस्कृतं विविधैर्मान्यैर् वाक्यै
2. अ-घ—अर्धद्वयं नास्ति
3. ख—अर्धमेकं नास्ति
4. क-ख—योऽगृह्णात्+पा

तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३०
श्यामं बृहन्तं तरुणं धन्विनामुत्तमं रणे ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३१

दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३२
[1]दृष्ट्वा वनगतान् पार्थान् अदुःखार्हान् सुखोचितान् ।
न च ते वर्धते मन्युस् तेन मुह्यामि भारत ॥ ३३

द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
मां ते वनगतां दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३४

नूनं च तव नैवास्ति मन्युर्भरतसत्तम ॥ ३४॥
[2]त्यक्तवाँस्त्वं विनाशाय त्यक्ता भृगुपतिर्यथा ।
यत्ते भ्रातृंश्च मां चैव दृष्ट्वा न व्यथते मनः ॥ ३५॥

न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥ ३६॥
यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥ ३७॥
न त्वया तु क्षमा कार्या शत्रून् प्रति कथञ्चन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥ ३८॥

---

1. ख—अर्धद्वयं नास्ति
2. अ-क-ख—त्यक्तमात्मविनाशाय व्यक्तं भृगुपतिर्यथा । [ पाठान्तरम् ]

तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियस्सर्वभूतानां सोऽमुत्रेह विनश्यति ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ३१ ॥ कैरातपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ३९॥ श्लोकाः]

## ॥ चतुर्विंशोऽध्यायः ॥

द्रौपद्या युधिष्ठिरं प्रति कालभेदेन क्षमाकोपयोरवश्याश्रयणीयत्वे प्रमाणतया बलिप्रह्लादसंवादानुवादपूर्वकं प्रकृते कोपस्यावश्यादरणीयत्वोक्तिः ॥ १ ॥

द्रौपदी—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ १

असुरेन्द्रं महात्मानं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रः प्रह्लादं पितरं पितुः ॥ २

बलिः—

क्षमा वा श्रेयसी तात तेजो वाऽसुरसत्तम ।
एतन्मे संशयस्तात तथा त्वं ब्रूहि पृच्छतः ॥ ३

[1]श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम् ।

1. अ—अर्धचतुष्टयं नास्ति

करिष्यामि हि तत् सर्वं यथावदनुशासनम् ॥ ४

द्रौपदी—

तस्मै प्रोवाच तत् सर्वम् एवं पृष्टः पितामहः ।
[1]सर्वनिश्चयवित् प्राज्ञम् संशयं परिपृच्छते ॥ ५

प्रह्लादः—

न श्रेयस्सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात विजानीहि द्वयमेतदसंशयम् ॥ ६

यो नित्यं क्षमते तात बहून् दोषान् स विन्दति ।
भृत्याः परिभवन्त्येनम् उदासीनास्तथैव च ॥ ७

सर्वभूतानि चाप्यस्य न [2]नमन्ते कदाचन ।
तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता ॥ ८

अवज्ञाय च तं भृत्या भजन्ते बहुदोषतः ।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥ ९

[3]यानं वस्त्राण्यलङ्कारान् शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ १०

आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ॥ ११

न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन ।
अवज्ञातं हि लोकेऽस्मिन् मरणादपि गर्हितम् ॥ १२

---

1. ख—नास्तीदमर्धम्　2. ख-घ—नमन्ति　3. अ—अर्धत्रयं नास्ति

क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि ।
प्रेष्या भृत्याश्च पुत्राश्च तथोदासीनवृत्तयः ॥ १३

अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः ॥ १४

[1]तथा च नित्यमुदिता यदि वाऽल्पामपीश्वरात् ।
हानिमिष्यन्ति दुष्यन्ति स्वामिनश्चापकुर्वते ॥ १५

एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ॥ १५॥

[2]अस्थाने ह्यपि च स्थाने सततं चानुगामिनम् ।
क्रुद्धो दण्डान् प्रणयति विविधांस्तेजसावृतः ॥ १६॥

मित्रैस्सह विरोधं च यो नित्यं तेजसाऽऽवृतः ।
प्राप्नोति द्वेष्यतां लोके भृत्यात् स्वजनतस्तथा ॥ १७॥

सोऽवमानार्थलोपौ च वाच्यतामेष्यतीति च ।
संतापलोभमोहांश्च शत्रूंश्च लभते नरः ॥ १८॥

क्रोधाद्दण्डान् मनुष्येषु विविधान् पुरुषोऽनयन् ।
भ्रश्यते शीघ्रमैश्वर्यात् प्राणेभ्यस्स्वजनादपि ॥ १९॥

सोऽपकर्तॄंश्च शत्रूंश्च तेजसैवोपगच्छति ।
तस्मादुद्विजते लोकस् सर्पाद्वेश्मगतादिव ॥ २०॥

यस्मादुद्विजते लोकः कथं तस्य रतिर्भवेत् ॥ २१

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

अन्तरं ह्यस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ।
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ॥ २२

काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽस्मिंश्च परत्र च ॥ २३

क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण वै ।
एते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः ॥ २४

पूर्वोपकारी यस्ते स्याद् अपराधे गरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधितम् ॥ २५

[1]अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषैरिह ॥ २६

अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापे त्वल्पेऽपि तान् हन्याद् अपराधे ततोऽनृजून् ॥ २७

सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
[2]द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ २८

अजानता भवेत् कश्चिद् अपराधः कृतो यदि ।
क्षन्तव्यमेव तद्याहुस् सुपरीक्ष्य परीक्षकाः ॥ २९

मृदुना मार्दवं हन्ति मृदुना हन्ति दारुणम् ।
नासाध्यं मृदुना किञ्चित् तस्मात्तीक्ष्णतरं मृदु ॥ ३०

---

1. ख—अर्धचतुष्टयं नास्ति  2. अ-घ—नास्तीदमर्धम्

देशकालौ तु सम्प्रेक्ष्य बलाबलमथात्मनः ।
अन्वीक्ष्य कारणं चैव कार्यं तेजः क्षमापि वा ॥ ३१

नादेशकाले किञ्चित् स्याद् देशकालः परीक्ष्यते ।
तथा लोकभयाच्चैव क्षन्तव्यमपराधितम् ॥ ३२

एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथाऽनुवर्तत्सु तेजसः काल उच्यते ॥ ३३

द्रौपदी—

तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥ ३४

न हि कश्चित् क्षमाकालो विद्यतेऽद्य कुरून् प्रति ।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ॥ ३५

मृदुर्भवत्यवज्ञातस् तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं ह्येतद् यो वेत्ति स महीपतिः ॥ ३६

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ ३१ ॥ कैरातपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[अस्मिन्नध्याये ३६ श्लोकाः]

---

## ॥ पञ्चविंशोऽध्यायः ॥

युधिष्ठिरेण द्रौपदीं प्रति क्रोधे बहुदोषोद्भावनपूर्वकं क्रोधगर्हणम् ॥

युधिष्ठिरः—

क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता नृणाम् ।
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ ॥ १

यो न संहरते क्रोधं तस्याभावो भवत्युत ।
अभावकारणं तस्मात् क्रोधो भवति शोभने ॥ २

यः पुनः पुरुषः क्रोधं नित्यं विसृजते शुभे ।
तस्याभावाय भवति क्रोधः परमदारुणः ॥ ३

क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत् कथं मादृशः क्रोधम् उत्सृजेल्लोकनाशनम् ॥ ४

क्रुद्धः पापं नरः कुर्यात् क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ५

वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ ६

हिंस्यात् क्रोधादवध्यांस्तु वध्यान् सम्पूजयेदपि ।
आत्मानमपि वा क्रुद्धः प्रेषयेद्यमसादनम् ॥ ७

एतान् दोषान् प्रपश्यद्भिर् जितः क्रोधो मनीषिभिः ।

इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ ८

तं क्रोधं निर्जितं धीरैः कथमस्मद्विधश्चरेत् ।
एतद्द्रौपदि संस्मृत्य न मे मन्युः प्रवर्धते ॥ ९

आत्मानं च परं चैव त्रायते महतो भयात् ।
क्रुध्यन्तमप्रतिक्रुध्यन् द्वयोरेव चिकित्सकः ॥ १०

मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ ११

तस्यात्मानं परित्यज्य लोका नश्यन्त्यनात्मनः ।
तस्माद् द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥ १२

विद्वांस्तथैव यश्शक्तः क्लिश्यमानः प्रकुप्यति ।
स नाशयित्वा द्वेष्टारं परलोके न नन्दति ॥ १३

तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहुर् आपत्स्वपि विजानता ॥ १४

मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ १५

सत्यं चानृततश्श्रेयो नृशंसाच्चानृशंसता ॥ १५॥

तमेवं बहुदोषं तु क्रोधं सद्भिर्विवर्जितम् ।
मादृशो विसृजेत् कस्मात् सर्वलोकविनाशनम् ॥ १६॥

तेजस्विनं यमाहुर्हि पण्डिता दीर्घदर्शिनः ।

न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥ १७॥

यस्तु क्रोधं समुत्पन्नं प्रज्ञया परिबाधते ।
तेजस्विनं तं विदुषो मन्यन्ते तत्त्वदर्शिनः ॥ १८॥

क्रुद्धो हि कार्यं सुश्रोणि न यथावत् प्रपश्यति ।
न कार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥ १९॥

हन्त्यवध्यानपि क्रुद्धो गुरून् रूक्षैस्तुदत्यपि ।
[1]तस्मात् तेजसि कर्तव्ये क्रोधो दूरात् प्रतिष्ठितः ॥ २०॥

दाक्ष्यं ह्यमर्षश्शौर्यं च शीघ्रत्वमतितेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥ २१॥

क्रोधं त्यक्त्वा तु पुरुषस् सम्यक्तेजोऽभिपद्यते ॥ २२

कालयुक्तं महाप्राज्ञैः क्रुद्धैस्तेजस्सुदुर्लभम् ।
[2]क्रोधस्त्वपण्डितैश्शश्वत् तेज इत्यभिधीयते ॥ २३

रजस्तु लोकनाशाय विहितं मानुषान् प्रति ।
तस्माच्छश्वत्त्यजेत् क्रोधं पुरुषस्सम्यगाचरन् ॥ २४

[3]श्रेयान् स्वधर्मानुवशो न क्रुद्ध इति निश्चितम् ।
यदि सर्वमबुद्धानाम् अतिक्रान्तममेधसाम् ॥ २५

अतिक्रमो मद्विधस्य कथं स्वित् स्यादनिन्दिते ।

---

1. ख—इदमर्धं नास्ति　　2. ख—अर्धद्वयं नास्ति
3. ख—अर्धसप्तकं नास्ति

यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः ॥ २६

न स्यात् सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ २६॥

अभिषक्तो ह्यभिषजेद् आहन्याद्गुरुणा हतः ।
एवं विनाशो भूतानाम् अधर्मः प्रथितो भवेत् ॥ २७॥

आक्रुष्टः पुरुषस्सर्वान् प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ २८॥

हन्युश्च पितरः पुत्रान् पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन् भार्यास्तथैव च ॥ २९॥

[1]एवं सङ्कुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजानां वृद्धिमूलं हि जन्म विद्धि शुचिस्मिते ॥ ३०॥

ताः क्षीयेरन् प्रजास्सर्वाः क्षिप्रं द्रौपदि तादृशाः ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ३१॥

तस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥ ३२॥

क्षन्तव्यं पुरुषेणेह सर्वास्वापत्सु शोभने ।
[2]क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ३३॥

आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।
[3]यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ॥ ३४॥

---

1. ख—अर्धषटकं नास्ति  2. क-ख-घ—क्षमा भवो
3. ख—इदमर्धं नास्ति

प्रभाववानपि नरस् तस्य लोकास्सनातनाः ॥　३५

क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥　३५॥

अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावतां कृष्णे काश्यपेन महात्मना ॥　३६॥

क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तमेवं विजानाति स सर्वं क्षन्तुमर्हति ॥　३७॥

क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमया चोद्धृतं जगत् ॥　३८॥

अति यज्ञविदां लोकान् क्षमिणः प्राप्नुवन्ति तान् ।
अति ब्रह्मविदां लोकान् अति चापि तपस्विनाम् ॥　३९॥

क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।
क्षमा सत्यं सत्यवतां क्षमा दानं क्षमा यशः ॥　४०॥

तां क्षमामीदृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ।
यत्र ब्रह्म च सत्यं च यज्ञा लोकाश्च विष्ठिताः ॥　४१॥

[1]इज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा ॥　४२

क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म सम्पद्यते तदा ॥　४३

क्षमावतामयं लोकः परश्चैव क्षमावताम् ।

---

1. ख—इदमर्धं नास्ति

इह सन्मानमृच्छन्ति परत्र च परां गतिम् ॥ ४४

येषां मन्युर्मनुष्याणां क्षमयाऽभिहतस्सदा ।
तेषां परतरो लोकस् तस्मात् क्षान्तिः परा मता ॥ ४५

इति गीताः काश्यपेन गाथा नित्यं क्षमावताम् ।
श्रुत्वा गाथाः क्षमायास्तु तुष्य द्रौपदि मा क्रुधः ॥ ४६

पितामहश्शान्तनवश् शमं सम्पूजयिष्यति ।
कृष्णश्च देवकीपुत्रश् शमं सम्पूजयिष्यति ॥ ४७

आचार्यो विदुरश्चैव पौरवृद्धास्तथैव च ।
कृपश्च सञ्जयश्चैव शममेव वदिष्यति ॥ ४८

सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च ।
पितामहश्च नो व्यासश् शमं वदति नित्यशः ॥ ४९

[1]एतैर्हि राजा नियतं चोद्यमानश्शमं प्रति ।
[2]आदास्यतेति मे बुद्धिर् न चेल्लोभान्नशिष्यति ॥ ५०

कालोऽयं दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत् पुरस्तादपि भामिनि ॥ ५१

सुयोधनो नार्हतीति क्षमा मामेव विन्दति ।
अर्हस्तस्याहमित्येवं तस्मान्मां विन्दते क्षमा ॥ ५२

---

1. ख—अर्धद्वयं नास्ति
2. अ—आसाद्यतेति; घ—आदास्यते हि

एतदात्मवतां वृत्तम् एष धर्मस्सनातनः ।
क्षमा चैवानृशंस्यं च तत्कर्ता ह्यहमञ्जसा ॥ ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ ३१ ॥ कैरातपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

[ अस्मिन्नध्याये ५३ श्लोकाः ]

## ॥ षड्विंशोऽध्यायः ॥

भर्तृव्यसनदर्शनदूनया द्रौपद्या युधिष्ठिरं प्रति धर्मादितोऽपि विधेरेव प्राबल्योपपादनम् ॥

द्रौपदी—

नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे राज्ये वोढव्ये तेऽन्यथा मतिः ॥ १

नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च ।
पुरुषश्श्रियमाप्नोति निर्घृणित्वेन कर्हिचित् ॥ २

त्वां चेद्व्यसनमभ्यागाद् इदं भारत दुःसहम् ।
स त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ ३

[1]न हि तेऽध्यगमज्ञातु तदानीं नाद्य भारत ।
धर्मात् प्रियतरं किञ्चिद् अपि चेज्जीविनादपि ॥ ४

1. ख—अर्धमिदं नास्ति

धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते ।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ५

भीमसेनार्जुनौ चेमौ माद्रेयौ च मया सह ।
त्यजेस्त्वमिति मे बुद्धिर् न तु धर्मं परित्यजेः ॥ ६

राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः ।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥ ७

त्यक्त्वाऽन्यान् हि नरव्याघ्र नित्यदा धर्म एव ते ।
बुद्धिस्सततमन्वेति छायेव पुरुषं निजा ॥ ८

नावमंस्था हि सदृशान् नावरान्श्रेयसः कुतः ।
अवाप्य पृथिवीं सर्वां न ते शृङ्गमवर्धत ॥ ९

स्वाहाकारैस्स्वधाभिश्च पूजाभिरपि च द्विजान् ।
देवताश्च पितॄंश्चैव सततं पार्थ सेवसे ॥ १०

ब्राह्मणास्सर्वकामैस्ते सततं पार्थ तर्पिताः ।
यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ॥ ११

आरण्यकेभ्यो वन्यानि भोजनानि प्रयच्छसि ।
नादेयं ब्राह्मणेभ्यस्ते गृहे किञ्चिन्न विद्यते ॥ १२

यदिदं वैश्वदेवान्ते सायं प्रातः प्रदीयते ।
तद्दत्त्वाऽतिथिभृत्येभ्यो राजञ्छेषेण जीवसि ॥ १३

इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये ।

वर्तन्ते पाकयज्ञाश्च सदा यज्ञाश्च तेऽनघ ॥ १४

अस्मिन्नपि महारण्ये विजने दस्युसेविते ।
राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति ॥ १५

अश्वमेधो राजसूयः पौण्डरीकोऽथ गोसवः ।
इष्टास्त्वया महायज्ञा बहवोऽन्ये सदक्षिणाः ॥ १६

राजन् परीतया बुद्ध्या विषमाक्षपराजये ।
पार्थ मित्राणि चास्मांश्च वसूनि च पराजितः ॥ १७

ऋजोर्मृदोर्वदान्यस्य धीमतस्सत्यवादिनः ।
कथमक्षव्यसनजा बुद्धिरापतिता तव ॥ १८

अतीव मोह आयाति मनश्च परिदूयते ।
निशाम्य व्यसनं पार्थ तवेदमतिदुःसहम् ॥ १९

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ईश्वरस्य वशे लोकस् तिष्ठते नात्मनो यथा ॥ २०

धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २१

यथा दारुमयीं योषां नरो धीरस्समाहितः ।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥ २२

आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पापकम् ॥ २३

शकुनिस्तन्तु[1]बद्धो वा नीयतेऽयमनीश्वरः ।
ईश्वरस्य वशे तिष्ठन्नान्येषामात्मनः प्रभुः ॥ २४

मणिस्सूत्र इव प्रोतो नस्योत इव गोवृषः ।
[2]धातुरादेशमन्वेति तन्मयो हि तदर्पणम् ॥ २५

नात्माधीनो मनुष्योऽयं कालं भजति कञ्चन ।
स्रोतसो मध्यमापन्नः कूलवृक्ष इव च्युतः ॥ २६

अज्ञो जन्तुरनीशोऽयम् आत्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं नरकमेव वा ॥ २७

यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरेवं वशं यान्ति सर्वभूतानि भारत ॥ २८

आर्यकर्मणि युञ्जानः पापे वा पुनरीश्वरः ।
व्याप्य भूतानि चरते न चायमिति लक्ष्यते ॥ २९

हेतुमात्रमिदं धातुश् शरीरं क्षेत्रसंज्ञितम् ।
येन कारयते कर्म शुभाशुभफलं विभुः ॥ ३०

[3]पश्य मायाप्रभावोऽयम् ईश्वरेण यथा कृतः ।
यो हन्ति भूतैर्भूतानि मोहयित्वाऽऽत्ममायया ॥ ३१

अन्यथा परिदृष्टानि मुनिभिर्वेददर्शिभिः ।

---

1. क-ख—बद्धेव
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

[1]अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ३२

अन्यथैव हि वर्तन्ते पुरुषास्तानि तानि हि ।
अन्यथैव प्रभुस्तानि करोति विकरोति च ॥ ३३

यथा काष्ठेन वा काष्ठम् अश्म वा ह्यश्मना पुनः ।
अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ॥ ३४

एवं स भगवान् देवस् स्वयम्भूः प्रपितामहः ।
निहन्ति भूतैर्भूतानि जन्म कृत्वा युधिष्ठिर ॥ ३५

सम्प्रयोज्य वियोज्याथ कामकारकरः प्रभुः ।
क्रीडते भगवान् भूतैर् बालः क्रीडनकैरिव ॥ ३६

न मातृपितृवद्राजन् धाता भूतेषु वर्तते ।
रोषादिव प्रयुक्तोऽयं यथाऽयमितरो जनः ॥ ३७

आर्याञ्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।
अनार्यान् सुखिनश्चैव विह्वलामीति चिन्तये ॥ ३८

तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥ ३९

आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥ ४०

कर्म चेत् कृतमन्वेति कर्तारं नान्यमृच्छति ।

1. ख—अर्धमिदं नास्ति

कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ४१

अथ कर्मकृतं पापं न चेत् कर्तारमृच्छति ।
कारणं बलमेवेह जानञ्शोचामि दुर्बलान् ॥ ४२

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ३१ ॥ कैरातपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]

## ॥ सप्तविंशोऽध्यायः ॥

युधिष्ठिरेण द्रौपदीं प्रति धर्मस्य साफल्योपपादनम् ॥

युधिष्ठिरः—

फल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।
उक्तं यच्छ्रुतमस्माभिर् नास्तिक्यं तु प्रभाषसे ॥ १

नाहं धर्मफलाकाङ्क्षी राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ २

अस्तु वाऽत्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे निवसता कृष्णे यथाशक्ति करोमि तत् ॥ ३

धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥ ४

धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ॥ ४॥
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात् पापचेतनः ॥ ५॥
अतिवादान्मदाच्चैव मा धर्ममभिशङ्कथाः ।
धर्मातिशङ्की पुरुषस् तिर्यग्गतिपरायणः ॥ ६॥
धर्मो यस्यातिशङ्क्यस्स्याद् दोषो दुर्बोध आत्मनः ।
वेदाच्छूद्र इवापेयात् स लोकादजरामरात् ॥ ७॥
वेदाध्यायी धर्मपरः कुले जातो यशस्विनि ।
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥ ८॥
पापीयान् स हि शूद्रेभ्यस् तस्करेभ्यो विशेषतः ।
शास्त्रातिगो मन्दबुद्धिर् यो धर्ममतिशङ्कते ॥ ९॥
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन् महातपाः ।
[1]मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविता ॥ १०॥
व्यासो वसिष्ठो मैत्रेयो नारदो [2]रोमहर्षणः ।
अन्ये च ऋषयस्सर्वे धर्मेणैव सुतेजसः ॥ ११॥
प्रत्यक्षं पश्यसि ह्येतान् दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान् देवेभ्योऽपि गरीयसः ॥ १२॥
एते हि धर्ममेवादौ वर्णयन्ति सदा मम ।

---

1. ख—वशे तिष्ठन् हि धर्मस्य गतस्स चिरजीविताम् ॥　[पाठान्तरम्]
2. क-ख—रोमशः शुकः

कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ १३॥
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ १४॥
सर्वातिशङ्की नान्यस्मिन प्रमाणमधिगच्छति ।
आत्मप्रमाणश्चोन्नद्धश् श्रेयसो ह्यवमन्यते ॥ १५॥
इन्द्रियप्रीतिसम्बद्धं यदिदं लोकसाक्षिकम् ।
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ॥ १६॥
प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते ।
ध्यायन् स कृपणः पापो न लोकान् प्रतिपद्यते ॥ १७॥
प्रमाणान्यतिवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभानुगो मूढो नरकं प्रतिपद्यते ॥ १८॥
यस्तु नित्यं कृतमतिर् धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि सोऽ[1]मुत्रानन्दमश्नुते ॥ १९॥
आर्षं प्रमाणमुत्क्राम्य धर्मं न प्रतिपालयन् ।
धर्मशास्त्रातिगो मूढ आजन्म स न नन्दति ॥ २०॥
शिष्टैराचरितं धर्मं कृष्णे मा स्मातिशङ्कथाः ।
[illegible]भिः प्रोक्तं सर्वज्ञैस्सर्वदर्शिभिः ॥ २१॥
[illegible]वो नान्यस् स्वर्गं द्रौपदि गच्छताम् ।

---

[illegible]ख—ऽमुत्रानन्त्य    2. अ-ख—अर्धत्रयं नास्ति

स वै नौस्सागरस्येव वणिजः पारमिच्छतः ॥　　२२॥

अफलो यदि धर्मस्स्याच् चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज् जगन्मज्जेदनिन्दिते ॥　　२३॥

निर्वाणं नाधिगच्छेयुर् जीवेयुः पशुजीविकाम् ।
[1]विघातेनैव युज्येयुर् न चार्थं कश्चिदाप्नुयुः ॥　　२४॥

तपश्च ब्रह्मचर्यं च यज्ञस्स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥　　२५॥

नाचरिष्यन् परे धर्मं परे परतरेऽपि च ॥　　२६

[2]विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥　　२६॥

ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥　　२७॥

फलदं त्विह विज्ञाय धातारं श्रेयसि स्थितम् ।
धर्मं ते ह्याचरन् कृष्णे तद्धि धर्मं सनातनम ॥　　२८॥

[3]स चायं सफलो धर्मो न धर्मोऽफल उच्यते ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥　　२९॥

त्वय्येतद्वै विजानीहि जन्म कृष्णे यथा श्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥　　३०॥

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति
3. ख-घ—इदमर्धं नास्ति

एतावदेव पर्याप्तम् उपमानं शुचिस्मिते ।
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ॥ ३१॥
बहुनाऽपि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मतः किञ्चित् [1]प्रेत्य शर्मास्त्यशर्म वा ॥ ३२॥
[2]कर्मणामुत पुण्यानां पापानां च फलोदयः ।
प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥ ३३॥
नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।
[3]रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ॥ ३४॥
कृशाङ्गास्सुव्रताश्चैव तपसा दग्धकिल्बिषाः ।
प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ॥ ३५॥
न फलादर्शनाद्धर्मश् शङ्कितव्यो न देवताः ।
यष्टव्यं चाप्रमत्तेन दातव्यं चानसूयता ॥ ३६॥
कर्मणां फलमस्तीति तथैतद्धर्मशासनम् ।
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद काश्यपः ॥ ३७॥
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ।
विमृश्य धर्ममस्तीति नास्तिक्यं भावमुत्सृज ॥ ३८॥
ईश्वरं चापि भूतानां धातारं मा च विक्षिपः ।

---

1. अ—मुह्यन्त्यप्रजा इमाः ;
ख—येषां न धर्मस्तेषां वै प्रेत्य शर्मास्त्यशर्म वा । [पाठान्तरम् ]
घ—प्रेत्य कर्मास्ति शर्म वा
2. अ—अर्धत्रयं नास्ति 3. ख—इदमर्धं नास्ति

शिक्षस्वैनं नमस्वैनं मा तेऽभूद्बुद्धिरीदृशी ॥ ३९॥

यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमां देवतां कृष्णे मातिवोचः कथञ्चन ॥ ४०॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

॥ ३१ ॥ कैरातपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[ अस्मिन्नध्याये ४०॥ श्लोकाः ]

---

## ॥ अष्टाविंशोऽध्यायः ॥

युधिष्ठिरं प्रति द्रौपद्या ब्राह्मणोक्तबृहस्पतिनीतिकथनम् ॥

---

द्रौपदी—

नावमन्ये न गर्हे च धर्मं पार्थ कथञ्चन ।
ईश्वरं कुत एवाहम् अवमंस्ये प्रजापतिम् ॥ १

आर्ताऽहं प्रलपामीदम् इति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ॥ २

कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ ३

आमातृस्तन्यपानाच्च यावच्छय्योपसर्पणम् ।
जङ्गमाः कर्मणा वृत्तिम् आप्नुवन्ति युधिष्ठिर ॥ ४

जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।
[1]इच्छन्ति कर्मणा वृत्तिम् अवाप्तुं प्रेत्य चेह च ॥ ५
उत्थानमभिजानन्ति सर्वभूतानि भारत ।

प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥ ६
पश्यन्तस्स्वं समुत्थानम् उपजीवन्ति जन्तवः ।

अपि धाता विधाता च यथाऽयमुदके बकः ॥ ७
स्वकर्म कुरु माग्लासीः कर्मणा भव दंशितः ।

कृत्यं हि योऽभिजानाति सहस्रे नास्ति सोऽस्ति वा ॥ ८
[2]तस्य चापि भवेत् कार्यं विवृद्धौ रक्षणे तथा ॥

भक्ष्यमाणो ह्यनावापः क्षीयते हिमवानपि ॥ ९

उत्सीदेरन् प्रजास्सर्वा न कुर्युः कर्म चेद्यदि ॥ ९॥
अपि चाप्याफलं कर्म पश्यामः कुर्वतो जनान् ।

नान्यथा ह्यपि जानन्ति लोके वृत्तिं कथञ्चन ॥ १०॥
यश्च दिष्टपरो लोके यश्चायं हठवादकः ।

उभावपि [3]शमापन्नौ कर्मबुद्धिः प्रशस्यते ॥ ११॥
यो हि दिष्टमुपासीत निर्विचेष्टस्स्वपन् सुखम् ।
अवसीदेत् सुदुर्बुद्धिर् आमो घट इवाम्भसि ॥ १२॥

---

1. ख—इदमर्धं नास्ति 2. ख—सपादार्धानि न सन्ति
3. क—हतावेतौ ; घ—उभाववशमापन्नौ

तथैव हठबुद्धिर्यश् शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेद् अनाथ इव दुर्बलः ॥ १३॥

अकस्मादपि यः कश्चिद् अर्थं प्राप्नोति पूरुषः ।
[1]तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ १४॥

यश्चापि कश्चित् पुरुषो दिष्टं नाम भजत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ १५॥

यत्तावत् कर्मणा किञ्चित् फलमाप्नोति पूरुषः ।
प्रत्यक्षं चक्षुषा दृष्टं तत् पौरुषमिति स्मृतम् ॥ १६॥

स्वभावतः प्रवृत्तोऽन्यः प्राप्नोत्यर्थानकारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ १७॥

एवं हठाच्च दैवाच्च स्वभावात् कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस् तत्फलं पूर्वकर्मणः ॥ १८॥

धाताऽपि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥ १९॥

यद्धि यः पुरुषः कश्चित् कुरुते वै शुभाशुभम् ।
तद्धात्रा विहितं विद्धि पूर्वकर्मफलोदयम् ॥ २०॥

कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।
स यथा प्रेरयत्येनं तथाऽयं कुरुतेऽवशः ॥ २१॥

---

1. अ—अर्धचतुष्टयं नास्ति

तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥ २२॥

मनसाऽर्थान् विनिश्चित्य पश्चात् प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं धीरः पुरुषस्तत्र कारणम् ॥ २३॥

संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ २४॥

तिले तैलं गवि क्षीरं [1]काष्ठे वा पावकं तथा ।
[2]एवं धीरो विजानीयाद् उपायं चास्य सिद्धये ॥ २५॥

ततः प्रवर्तते पश्चात् कारणेष्वस्य सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः ॥ २६॥

कुशलेन कृतं कर्म कर्त्रा साधु विनिश्चितम् ।
इदं चाकुशलेनेति विशेषादुपलभ्यते ॥ २७॥

इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।
पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् ॥ २८॥

कर्तृत्वाच्चैव पुरुषः कर्मसिद्धौ प्रशस्यते ।
[3]असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥ २९॥

सर्वमेव हठेनैके दैवेनैके वदन्त्युत ।
पुंसः प्रयत्नजं केचिद् दैवमेतद्विशिष्यते ॥ ३०॥

---

1. अ-क-ख—काष्ठेयं पावकं ततः
2. अ—अर्धलयं नास्ति
3. अ—अर्धलयं नास्ति

न चैवैतावता कार्यं मन्यन्त इति चापरे ।
अस्ति सर्वमदृश्यं तु दैवादिष्टं तथा हठः ॥ ३१॥

दृश्यते वै हठाचैव दिष्टाचार्थस्य संततिः ।
किञ्चिद्दैवाद्धठात्किञ्चित् किञ्चिदेव स्वकर्मतः ॥ ३२॥

पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ॥ ३३
कुशलाः प्रतिजानन्ति ये तत्त्वविदुषो जनाः ॥ ३३॥

तथैव धाता भूतानाम् इष्टानिष्टफलप्रदः ।
यदि न स्यान्न भूतानां कृपणो नाम कश्चन ॥ ३४॥

यं यमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः ।
तत्तस्य फलमेव स्याद् यदि न स्यात् किलासुखम् ॥ ३५॥

त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः ।
तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ॥ ३६॥

कर्तव्यं त्वेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहेऽयं वर्ततेऽस्मासु सम्प्रति ॥ ३७॥

न तु निस्संशयं न स्यात् त्वयि कर्मण्यवस्थिते ॥ ३८
कुर्वतो हि भवत्येव प्रायेणैव युधिष्ठिर ।
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ॥ ३९

असम्भवे तत्र हेतुः प्रायश्चित्तं तु लक्ष्यते ।
कृते कर्मणि राजेन्द्र तथाऽऽनृण्यमवाप्नुते ॥ ४०

अलक्ष्मीराविशत्येनं शयानमलसं नरम् ॥ ४०॥
निःसंशयं फलं लब्ध्वा दक्षो [1]भूतिमुपाश्नुते ॥ ४१
[2]अनर्थं संशयावस्थं वृणुते मुक्तसंशयाः ।
धीरा नराः कर्मरता न तु निःसंशयं क्वचित् ॥ ४२
[3]एकान्तेन ह्यनर्थोऽयं वर्ततेऽस्मासु साम्प्रतम् ।
[4]स तु निःसंशयं न स्यात् त्वयि कर्मण्यवस्थिते ॥ ४३
अथवाऽसिद्धिरेव स्यान्महिमा तु तथैव ते ॥ ४३॥
वृकोदरस्य बीभत्सोर् भ्रात्रोश्च यमयोरपि ।
अन्येषां कर्म सफलम् अस्माकमपि वा पुनः ॥ ४४॥
विप्रकर्षेण [5]मध्येन कृतकर्मा यथा बलम् ।
पृथिवीं लाङ्गलेनैव कृष्ट्वा बीजं वपत्युत ॥ ४५॥
आस्ते स कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ॥ ४६
वृष्टिश्चैवानुगृह्णीयाद् अनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात् कृतं तत् सकलं मया ॥ ४७
तच्चेदं फलमस्माकम् अपराधोऽस्ति नः क्वचित् ।
इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत् ॥ ४८
कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत ।

---

1. अ-घ—भूमि
2. क-ख—अर्धद्वयं नास्ति
3. क—अर्धद्वयं नास्ति
4. ख—इदमर्धद्वयं नास्ति
5. क-ख—बुद्ध्येत

निर्वेदो नात्र गन्तव्यो द्वावेतौ ह्यस्य कर्मणः ॥ ४९
सिद्धिर्वाऽप्यथवाऽसिद्धिर् अप्रवृत्तिरतोऽन्यथा ।
बहूनां समवाये हि भावानां कर्म सिध्यति ॥ ५०
गुणाभावे फलं न्यूनं भवत्यफलमेव वा ।
अनारम्भे तु न फलं न गुणो दृश्यते ह्युत ॥ ५१
देशकालावुपायं च मङ्गलं स्वस्तिसिद्धये ।
युनक्ति मेधया धीरो यथायोगं यथाबलम् ॥ ५२
अप्युपायेन तत्कार्यम् [1]उपदेष्टुं यथाक्रमम् ।
[2]भूयिष्ठं कर्मयोगेषु सर्व एव पराक्रमः ॥ ५३
यत्र धीरोऽन्ववेक्षेत श्रेयांसं बहुभिर्गुणैः ।
साम्नैवार्थं ततो लिप्सेत् कर्म चास्मै प्रयोजयेत् ॥ ५४
व्यसनं नाभिकाङ्क्षेत विनाशं वा युधिष्ठिर ।
अपि सिन्धोर्गिरेर्वाऽपि किं पुनर्मर्त्यधर्मिणः ॥ ५५
उत्थानयुक्तस्सततं परेषामन्तरेक्षणः ।
आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ ५६
न त्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन ।
न ह्यात्मपरिभूतस्य भूतिर्भवति भारत ॥ ५७
एवं [3]सुसंस्मृता बुद्धिर् इयं लोकस्य पाण्डव ।

---

1. क-ख—उपदेष्टा पराक्रमः ; ख—अप्युपायेन + ष्टुः पराक्रमः ।
2. ख-इदमर्धं नास्ति 3. क-ख—हि संस्थिता सिद्धिर्

चित्वा सिद्धिगतिः प्रोक्ता कालावस्थाविभागशः ॥ ५८

ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सर्वं चार्थमिमं प्राह पित्रे मे भरतर्षभ ॥ ५९

नीतिं बृहस्पतिप्रोक्तां भ्रातॄन् मेऽग्राहयत् पुरा ।
तेषां सङ्कथमश्रौषम् अहमेतां तदा गृहे ॥ ६०

स मां राजन् कर्मवतीम् आगतामाह सान्त्वयन् ।
शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ३१ ॥ कैरातपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ६१ श्लोकाः ]

---

## ॥ एकोनत्रिंशोऽध्यायः ॥

---

भीमेन युधिष्ठिरं प्रति नीतिव्युत्पादनपूर्वकं युद्धेन राज्याहरणकर्तव्यत्वोक्तिः ॥

---

वैशम्पायनः—

याज्ञसेन्या वचश्श्रुत्वा भीमसेनोऽत्यमर्षणः ।
निश्वसन्नुपसङ्गम्य क्रुद्धो राजानमब्रवीत् ॥ १

भीमसेनः—

राजन् सत्पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।

धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ २

नैव धर्मेण तद्राज्यं नार्जवेण न चौजसा ।
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन नः ॥ ३

गोमायुनेव सिंहानां दुर्बलेन बलीयसाम् ।
आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतम् ॥ ४

धर्मलेशप्रतिच्छन्नः [1]प्रभवो धर्मकामयोः ।
अर्थानुत्सृज्य किं राजन् दुःखेन परितप्यसे ॥ ५

भवतोऽनुविधानेन राज्यं नः पश्यतां हृतम् ।
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥ ६

[2]कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥ ७

भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।
धर्मकामप्रतीतस्य प्रतिपन्नाःस्म भारत ॥ ८

कर्शयामस्वमित्राणि नन्दयामश्च शात्रवान् ।
आत्मानं भवतश्शास्त्रैर् नियम्य भरतर्षभ ॥ ९

[3]यद्वयं हतदैवाश्च धार्तराष्ट्रान्निहन्महे ।
भवतश्शास्त्रमास्थाय तन्नस्तपति दुष्कृतम् ॥ १०

---

1. क—प्रभवान्; ख-घ—प्रभवं	2. ख—अर्धद्वयं नास्ति
3. क-ख—आददीमहि गां सर्वां तथाऽपि श्रेय एव नः। [अधिकः पाठः]

अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः ।
अवीराचरितां राजन्नबलस्थैर्निषेविताम् ॥ ११

यां न कृष्णो न बीभत्सुर् नाभिमन्युर्न सृञ्जयाः ।
न चाहमभिनन्दामि न च माद्रीसुतावुभौ ॥ १२

भवान् धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिद्राजन्न निर्वेदाद् आपन्नः [1]क्लीबजीविकाम् ॥ १३

दुर्मनुष्या हि निर्वेदम् अफलं सर्वघातिनम् ।
अशक्तश्श्रियमाहर्तुम् आत्मनः कुरुते प्रियम् ॥ १४

स भवान् दृष्टिमाञ्शक्तः पश्यन्नात्मनि पौरुषम् ।
आनृशंस्यपरो राजन्नात्मार्थमवबुध्यसे ॥ १५

अस्मानमी धार्तराष्ट्राः क्षममाणानहिंसतः ।
अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः ॥ १६

तत्र चेद्युध्यमानानाम् अजिह्ममनिवर्तिनाम् ।
सर्वथा हि वधश्श्रेयान् प्रेत्य लोकांल्लभेमहि ॥ १७

अथवा वयमेतान् हि निहत्य भरतर्षभ ।
आददीमहि गां सर्वां तथापि श्रेय एव नः ॥ १८

सर्वथा कार्यमेतन्नस् स्वधर्ममनुतिष्ठताम् ।
काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् ॥ १९

---

1. क—पाप

आत्मार्थे युध्यमानानां जीविते कृत्यलक्षणे ।
अन्यैरपि हृते राज्ये प्रशंसैव न गर्हणा ॥ २०

कर्शनार्थो हि यो धर्मो विप्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन्न स धर्मः कुवर्त्म तत् ॥ २१

सर्वथा धर्मनित्यं तु पुरुषं धनदुर्बलम् ।
जहतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ २२

यस्य धर्मो हि धर्मार्थः क्लेशभाङ् न स पण्डितः ।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥ २३

यस्य चार्थार्थ एवार्थस् स च नार्थस्य कोविदः ।
रक्ष्यते भृतकः पुण्यं यथा स्यात् तादृगेव सः ॥ २४

अतिवेलं तु योऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्यस्सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ २५

सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥ २६

तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
क्रीडतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ २७

तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ॥ २७॥

[1]प्रकृतिस्सा हि कामस्य पावकस्य यथाऽरणिः ॥ २८

---

1. ख—इदमर्धं नास्ति

सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥ २९

द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसङ्कल्पश् शरीरं नात्र दृश्यते ॥ ३०

अर्थार्थी पुरुषो राजन् बृहन्तं धर्ममिच्छति ।
अर्थमृच्छति कामार्थी न कामादन्यमृच्छति ॥ ३१

न हि कामेन कामोऽन्यस् सिध्यते फलमेव तत् ।
उपयोगात् फलस्यैव काष्ठाद्भस्मेव पण्डितः ॥ ३२

इमाञ्शकुनकान्राजन् हन्ति वैतंसिको यथा ।
एतद्रूपमधर्मस्य भूतेषु च विहिंसकः ॥ ३३

कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न गच्छति ।
स वध्यस्सर्वभूतानां प्रेत्य चेह च दुर्गतिः ॥ ३४

व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः ।
[1]प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम् ॥ ३५

तस्य नाशं विनाशं वा जरया मरणेन वा ।
अनर्थमिति मन्यन्ते सोऽयमस्मासु वर्तते ॥ ३६

इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ।
विषये वर्तमानानां या प्रीतिरुपजायते ॥ ३७

---

1. ख—अर्धलयं नास्ति

स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ॥ ३७॥
एवमेव पृथग् दृष्ट्वा धर्मार्थौ काममेव च ।
न धर्मपर एव स्यान्न चार्थपरमो नरः ॥ ३८॥
न कामपरमो वा स्यात् सर्वान् सेवेत सर्वदा ॥ ३९
धर्मं पूर्वं धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यहन्यनुचरेद् एष शास्त्रकृतो विधिः ॥ ४०
[1]कामं पूर्वं धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवम् एष शास्त्रकृतो विधिः ॥ ४१
धर्मं चार्थं च कामं च यथावद्वदतां वर ।
विभज्य काले कालज्ञस् सर्वान् सेवेत पण्डितः ॥ ४२
मोक्षो वा परमं श्रेय एष राजन् सुखार्थिनाम् ।
प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥ ४३
तद्वाऽऽशु क्रियतां राजन् प्राप्तिर्वाप्यधिगम्यताम् ।
जीविका ह्यातुरस्यैव दुःखमन्तरवर्तिनः ॥ ४४
विदितश्चैव मे धर्मस् सततं चरितश्च ते ।
जानन्तस्तु प्रशंसन्ति सुहृदः कर्मचोदनाम् ॥ ४५
दानं यज्ञास्सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन् फलवान् प्रेत्य चेह च ॥ ४६

---

1. ख—अर्धद्वयं नास्ति

एष नार्थविहीनेन शक्यो राजन्निषेवितुम् ।
अखिलाः पुरुषव्याघ्र गुणास्सीदन्ति निर्धने ॥ ४७

धर्ममूलं जगद्राजन् नान्यद्धर्माद्विशिष्यते ।
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ॥ ४८

न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ।
वेत्तुं शक्यस्तदा राजन् केवलं धर्मबुद्धिना ॥ ४९

[1]प्रतिषिद्धा हि ते याच्ञा यया सिध्यन्ति वै द्विजाः ।
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ ॥ ५०

भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका ।
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम् ॥ ५१

उदारमेव विद्वांसो धर्मं प्राहुर्द्विजातयः ।
उदारं प्रतिपद्यस्व ना[2]परैस्स्थातुमर्हसि ॥ ५२

[3]प्रतिपद्यस्व राजेन्द्र वेत्थ धर्मान् सनातनान् ।
क्रूरकर्माऽभिजातोऽसि यस्मादुद्विजते जनः ॥ ५३

प्रजापालनसम्भूतं फलं तव न गर्हितम् ।
एष ते विहितो राजन् धात्रा धर्मस्सनातनः ॥ ५४

तस्माद्विचलितः पार्थ लोके हास्यं गमिष्यसि ।
[4]स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥ ५५

---

1. ख—इदमर्धं नास्ति 2. क—वरे ; ख-घ—परे
3. ख—अर्धद्वयं नास्ति 4. ख—इदमर्धं नास्ति

स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय सहसा धुरमुद्वह धुर्यवत् ॥ ५६

न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो ह्यजयद्राजन् न भूतिं न पुनश्श्रियम् ॥ ५७

[1]जिह्मं दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।
निकृत्या लभते राज्यम् आहारमिव शल्यकः ॥ ५८

भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैर् असुराः पाण्डवर्षभ ॥ ५९

एवं बलवतस्सर्वम् इति बुद्ध्वा महीपते ।
जहि शत्रून् महाबाहो परां निकृतिमास्थितान् ॥ ६०

न ह्यर्जुनसमः कश्चिद् युधि योद्धा धनुर्धरः ।
भविता वा पुमान् कश्चिन्मत्समो वा गदाधरः ॥ ६१

सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि ।
न प्रमाणेन नोत्साहात् सत्त्वस्थो भव पार्थिव । ६२

सत्त्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा ।
न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥ ६३

अर्थत्यागो हि कार्यस्स्याद् अर्थं श्रेयांसमिच्छता ।
बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ॥ ६४

1. ख—अर्धद्वयं नास्ति

अर्थेन तु समोऽनर्थो यत्र लब्धो धनोदयः ।
न तत्र विपणः कार्यः खरकण्डूयनं हि तत् ॥ ६५

एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाऽल्पकं नरः ।
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितम् ॥ ६६

अमित्रं मित्रसम्पन्नं मित्रैर्भिन्दन्ति पण्डिताः ।
भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ॥ ६७

सत्त्वेन कुरुते युद्धं राजन् सुबलवानपि ।
नोद्यमेन न मात्राभिस् सर्वास्स्वीकुरुते प्रजाः ॥ ६८

सर्वथा सहितैरेव दुर्बलैर्बलवानपि ।
अमित्रश्शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ६९

यथा राजन् प्रजास्सर्वास् सूर्यः पाति गभस्तिभिः ।
हन्ति चैव तथैव त्वं सवितुस्सदृशो भव ॥ ७०

[1]एतद्ध्यपि तपो राजन् पुराणमिति नश्श्रुतम् ।
विधिना पालनं भूमेर् यत्कृतं नः पितामहैः ॥ ७१

अपेयात् किल भास्सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।
इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम् ॥ ७२

भवतश्च प्रशंसाभिर् निन्दाभिरितरस्य च ।
कथयन्त्यः परिषदः पृथग्राजन् समागताः ॥ ७३

---

1. ख—इदमर्धं नास्ति

इदमभ्यधिकं राजन् ब्राह्मणाः गुरवश्च ते ।
समेताः कथयन्तीह मुदितास्सत्यसन्धताम् ॥ ७४

यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि ।
अनृतं किञ्चिदुक्तं ते न कामान्नार्थकारणात् ॥ ७५

यदेनः कुरुते किञ्चिद् राजा भूमिमवाप्नुवन् ।
सर्वं नुदति तत् पश्चाद् यज्ञैर्विपुलदक्षिणैः ॥ ७६

ब्राह्मणेभ्यो ददद्ग्रामान् गाश्च राजन् सहस्रशः ।
मुच्यते वीर पापेभ्यस् तमोभिरिव चन्द्रमाः ॥ ७७

पौरजानपदास्सर्वे प्रायशः कुरुनन्दन ।
सवृद्धबालास्सहिताश् शंसन्ति त्वां युधिष्ठिर ॥ ७८

श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ॥ ७९

इति निर्वचनं लोके चिरं चरति भारत ।
अपि चैतास्स्त्रियो बालास् स्वाध्यायमिव कुर्वते ॥ ८०

स भवान् रथमास्थाय प्रतिज्ञाय तथेति नः ।
त्वरमाणोऽभिनिर्यातु चिरमर्थोपपादकः ॥ ८१

वाचयित्वा द्विजश्रेष्ठान् अद्यैव गजसाह्वयम् ।
अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ॥ ८२

आशीविषसमैर्वीरैर् मरुद्भिरिव वृत्रहा ।

अमित्रांस्तेजसा मृद्नन्नसुरेभ्य इवारिहा ॥ ८३

श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान् महाबल ॥ ८३॥

न हि गाण्डीवमुक्तानां शराणां गृध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥ ८४॥

न स वीरो न मातङ्गो न सदश्वोऽस्ति भारत ।
यस्सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ८५॥

सृञ्जयैस्सह कैकेयैर् वृष्णीनामृषभेण च ।
कथंस्विद्युधि कौन्तेय राज्यं न प्राप्नुयामहे ॥ ८६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ३१ ॥ कैरातपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये ८६॥ श्लोकाः]

---

## ॥ त्रिंशोऽध्यायः ॥

---

युधिष्ठिरेण भीमं प्रति स्वेन प्रतिज्ञाया दुस्त्यजत्वोक्तिपूर्वकं प्रतिज्ञाकालावसानप्रतिपालनविधानम् ॥

---

युधिष्ठिरः—

असंशयं भारत सत्यमेतद्
यन्मां तुदन् वाक्यशरैः क्षिणोषि ।

न त्वां विगर्हे प्रतिकूलमेत-
न्ममानयाद्धि व्यसनं [1]व आगात् ॥ १

अहं ह्यक्षानन्वपद्ये जिहीर्षन्
राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् ।
तन्मां शठः कितवः प्रत्यदेवीत्
सुयोधनार्थं सुबलस्य पुत्रः ॥ २

महामायश्शकुनिः पार्वतीयस्
सदा सदा प्रवपन्नक्षपूगान् ।
अमायिनं मायया प्रत्यदेवीत्
ततोऽपश्यं वृजिनं भीमसेन ॥ ३

अक्षांस्तु दृष्ट्वा शकुनेर्यथावत्
कामानुलोमानयुजो युजश्च ।
शक्यो नियन्तुमभविष्यदात्मा
मन्युस्तु हन्ति पुरुषस्य धैर्यम् ॥ ४

यन्तुं नात्मा शक्यते पौरुषेण
मानेन वीर्येण च तात नद्धः ।

न ते वाचं भीमसेनाभ्यसूये
मन्ये तथा तद्भवितव्यमासीत् ॥ ५

1. क—ममागाम् ; ख—समागाः ; घ—समागमत्

स नो राजा धृतराष्ट्रस्य पुत्रो
न्यपातयद्व्यसने राज्यमिच्छन् ;
दास्यं च नोऽगमयद्भीमसेन
यत्राभवच्छरणं द्रौपदी नः ॥ ६

त्वं चापि तद्वेत्थ धनञ्जयश्च
पुनर्द्यूतायागतानां सभां नः ।
यन्माऽब्रवीद्धृतराष्ट्रस्य पुत्र
एवं ग्लहार्थं भारतानां समक्षम् ॥ ७

वने समा द्वादश राजपुत्र
यथाकामं विदितमजातशत्रो ।
अथापरं चाविदितश्चरेथास्
सहैतया भ्रातृभिश्छन्नरूपः ॥ ८

तं चेत्तीर्त्वा तात तथा चरन्तम्
अवबोध्यन्ते भारतानां चरा वै ।
अन्यांश्चरेथास्तावतोऽब्दांस्ततस्त्वं
निश्चित्य तत् प्रतिजानीहि पार्थ ॥ ९

चारैश्चेन्नो विदितः कालमेतं
युक्तो राजन् मोहयित्वा मदीयान् ।
ब्रवीमि सत्यं कुरुसंसदीह
तवैव ता भारत पञ्च नद्यः ॥ १०

वयं चैवं कौरवास्सर्व एव
त्वया जिताः कालमपास्य भोगान् ।
चरेम इत्याह पुरा स राजा
मध्ये कुरूणां स मयोक्तस्तथेति ॥ ११

तत्र द्यूतमभवन्नो जघन्यं
यस्मिञ्जिताः प्रव्रजिताश्च सर्वे ।
इत्थं तु देशाननुसञ्चरामो
वनानि दुर्गाणि च घोररूपान् ॥ १२

सुयोधनश्चापि न शान्तिमृच्छन्
भूयश्च मन्योर्वशमन्वगच्छत् ।
उद्योजयामास कुरूंश्च सर्वान्
ये चास्य केचिद्वशमन्वगच्छन् ॥ १३

तां सिद्धिमास्थाय सतां सकाशे
को नाम जह्यादिह कस्य हेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो
यद्धर्ममुत्क्रम्य महीं प्रशिष्यात् ॥ १४

तथैव चेद्वीर तथा [1]करिष्ये
यदा द्यूते परिघं पर्यमृक्षः ।

---

1. क-ख—गमिष्ये

बाहू दिधक्षन् वारितः फल्गुनेन
किं दुष्कृतं भीम तदाऽकरिष्यत् ॥ १५

प्रागेव चैवं समयक्रियायाः
किं नाब्रवीत् पौरुषं मां विजानन् ।
प्राप्तं तु कालं त्वतिपात्य पश्चात्
किं वा त्विदानीमतिवेलमात्थ ॥ १६

भूयोऽपि दुःखं मम भीमसेन
दूये विषस्येव रसं विदित्वा ।
यद्याज्ञसेनीं परिक्रुष्यमाणां
संदृश्य तां क्षान्तमिति स्म भीम ॥ १७

न त्वद्य शक्यं भरतप्रवीर
कृत्वा यदुक्तं कुरुवीरमध्ये ।
कालं प्रतीक्षस्व सुखोदयस्य
[1]पङ्क्तिं फलानामिव बीजवापः ॥ १८

यदा हि पूर्वं निकृतो निकृत्या
वैरं सपुष्पं सफलं विदित्वा ।
महागुणं हरति हि पौरुषेण
तदा वीरो जीवति जीवलोके ॥ १९

श्रियं च लोके लभते समग्रां
मन्ये चास्मै शत्रवस्सन्नमन्ति ।

---

1. क—पक्तिं

मित्राणि चैनमतिरागाद्भजन्ते
देवा इवेन्द्रमुपजीवन्ति चैनम् ॥ २०

मम प्रतिज्ञां च निबोध सत्यां
वृणे धर्ममममृताज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च
सर्वं न सत्यस्य कलामुपैति ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ३१ ॥ कैरातपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ एकत्रिंशोऽध्यायः ॥

भीमेन युधिष्ठिरं प्रति सोपपत्तिकं वनवासापूरणेनैव दुर्योधननिग्रहचोदना ॥

---

भीमसेनः—

सन्धिं कृत्वैव कालेन ह्यन्तकेन पतत्रिणा ।
अनन्तेनाप्रमेयेण स्रोतसा सर्वहारिणा ॥ १

प्रत्यक्षं मन्यसे कालं मर्त्यस्सन् कालबन्धनः ।
[1]फेनधर्मा महाराज फलधर्मा तथैव च ॥ २

1. ख—इदमर्धं नास्ति

निमेषादपि कौन्तेय यस्यायुरपचीयते ।
सूच्येवाञ्जनचूर्णानि किमिति प्रतिपालयेत् ॥ ३

यो नूनममितायुस्स्याद् अथवाऽऽयुःप्रमाणवित् ।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ ४

प्रतीक्ष्यमाणान् कालो नस् समा राजंस्त्रयोदश ।
आयुषोऽपचयं कृत्वा मरणायोपनेष्यति ॥ ५

शरीरिणां हि मरणं शरीरे नित्यमाश्रितम् ।
प्रागेव मरणात्तस्माद् राज्यायैव घटामहे ॥ ६

यो न याति प्रसंख्यानम् अस्पष्टो भूमिवर्धनः ।
अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ७

यो न यातयते वैरम् अल्पसत्त्वोद्यमः पुमान् ।
अफलं तस्य जन्माहं मन्ये दुर्जातिजीविनः ॥ ८

हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिव ।
हत्वा द्विषन्तं सङ्ग्रामे भुक्त्वा बाह्वार्जितं वसु ॥ ९

हत्वा चेत् पुरुषो राजन्निकर्तारमिमं नृपम् ।
अह्नाय नरकं गच्छेत् स्वर्गेणास्य सुसम्मितः ॥ १०

अमर्षजो हि सन्तापः पावकाद्दीप्तिमत्तरः ।
येनाहमभिसन्तप्तो न नक्तं न दिवा शये ॥ ११

अयं च पार्थो बीभत्सुर् वरिष्ठो ज्याविकर्षणे ।

आस्ते परमसन्तप्तो नूनं सिंह इवाशये ॥ १२
योऽयमेको नुदेत् सर्वाँल्लोके राजन् धनुर्भृतः ।
सोऽयमात्मजमूष्माणं महाहस्तीव यच्छति ॥ १३
नकुलस्सहदेवश्च वृद्धा माता च वीरसूः ।
तवैव प्रियमिच्छन्त आसते जडमूकवत् ॥ १४
सर्वे ते प्रियमिच्छन्ति बान्धवास्सह सृञ्जयैः ।
इयमेका च सन्तप्ता माता च प्रतिविन्ध्यतः ॥ १५
प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किञ्चन ।
सर्वे हि व्यसनं प्राप्तास् सर्वे युद्धाभिनन्दिनः ॥ १६
नातः पापीयसी काचिद् आपद्राजन् भविष्यति ।
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते ॥ १७
शीलदोषाद्घृणाविष्ट आनृशंस्यात् परंतप ।
क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित् प्रशंसति ॥ १८
घृणी ब्राह्मणरूपोऽसि कथं क्षत्रे ह्यजायथाः ।
अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः ॥ १९
अश्रौषीस्त्वं राजधर्मान् यथा वै मनुरब्रवीत् ॥ १९॥
क्रूरान्निकृतिसंयुक्तान् विहितानशमात्मकान् ।
[1]धार्तराष्ट्रान् महाराज क्षमसे किं दुरात्मनः ॥ २०॥

1. ख-घ—नास्तीदमर्धम्

कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ।
बुद्ध्या वीर्येण संयुक्तश्श्रुतेनाभिजनेन च ॥ २१॥

तृणानां मुष्टिनैकेन हिमवन्तं तु पर्वतम् ।
[1]छन्नमिच्छसि कौन्तेय योऽस्मान्संयन्तुमिच्छसि ॥ २२॥

अज्ञातचर्यागूढेन पृथिव्यां विश्रुतेन च ।
दिवीव पार्थ सूर्येण न शक्याऽऽचरितुं त्वया ॥ २३॥

बृहत्साल इवानूपश्शाखापुष्पपलाशवान् ।
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति ॥ २४॥

इमौ हि सिंहसङ्काशौ भ्रातरौ सहितौ शिशू ।
नकुलस्सहदेवश्च कथं पार्थ चरिष्यतः ॥ २५॥

पुण्यकीर्ती राजपुत्री द्रौपदी वीरसूरियम् ।
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति ॥ २६॥

मां चापि राजञ्जानन्ति ह्याकुमारमिमाः प्रजाः ।
[2]अज्ञातचर्यां पश्यन्ति मेरोरिव निगूहनम् ॥ २७॥

तथैव बहवोऽस्माभी राष्ट्रेभ्यो विप्रवासिताः ।
राजानो राजपुत्राश्च धार्तराष्ट्रमनुव्रताः ॥ २८॥

न हि तेऽप्युपशाम्यन्ति निकृता वा निराकृताः ।
अवश्यं तैर्निकर्तव्यम् अस्माकं तत्प्रियैषिभिः ॥ २९॥

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

तेऽप्यस्मासु प्रयुञ्जीरन् प्रच्छन्नान् सुबहूञ्जनान् ।
आचक्षीरंश्च नो ज्ञात्वा ततस्स्यात् सुमहद्भयम् ॥ ३०॥
अस्माभिरुषितास्सत्यं वने मासास्त्रयोदश ।
परिमाणेन तान् पश्य तावतः परिवत्सरान् ॥ ३१॥
अस्ति मासः प्रतिनिधिर् यथा प्राहुर्मनीषिणः ।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ॥ ३२॥
अथवाऽनडुहे राजन् साधवे साधुवाहिने ।
सौहित्यदानादेतस्माद् एनसः प्रतिमुच्यते ॥ ३३॥
तस्माद्रिपुवधो राजन् क्रियतां निश्चयस्त्वया ।
क्षत्रियस्य हि सर्वस्य नान्यो धर्मोऽस्ति संयुगात् ॥ ३४॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ३१ ॥ कैरातपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[अस्मिन्नध्याये ३४॥ श्लोकाः]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

भीमयुधिष्ठिरसंवादसमयसंनिहितेन व्यासेन युधिष्ठिराय प्रतिस्मृति-विद्योपदेशः ॥ १ ॥ युधिष्ठिरेण व्यासवचनात्परिजनैः सह द्वैतवनात् काम्यकवनगमनम् ॥ २ ॥

---

वैशम्पायनः—

भीमसेनवचश्श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
निःश्वस्य पुरुषव्याघ्रस् सम्प्रदध्यौ परन्तपः ॥ १

श्रुता मे राजधर्माश्च वर्णानां च पृथक्पृथक् ।
[1]आयत्यां च तदात्वे च यः पश्यति स पश्यति ॥ २

धर्मस्य जानमानोऽहं गतिमग्र्यां सुदुर्विदाम् ।
कथं बलात्करिष्यामि मेरोरिव विवर्तनम ॥ ३

सुमुहूर्तमिति ध्यात्वा विनिश्चित्येतिकृत्यताम् ।
भीमसेनमिदं वाक्यम् अपदान्तरमब्रवीत् ॥ ४

युधिष्ठिरः—

एवमेतन्महाबाहो यथा वदसि भारत ।
इदमन्यत् समादत्स्व वाक्यं मे वाक्यकोविद ॥ ५

महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ ६

सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते ।
सिद्ध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ॥ ७

त्वं तु केवलचापल्याद् बलदर्पोच्छ्रितस्स्वयम् ।
आरब्धव्यमिदं कार्यं मन्यसे शृणु तत्र मे ॥ ८

भूरिश्रवाश्शलश्चैव जरासन्धश्च वीर्यवान् ।
भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्यवान् ॥ ९

धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः ।

---

1. क-ख—नास्तीदमर्धम्

सर्वे एव कृतास्त्राश्च सततं चाततायिनः ॥ १०

राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः ।
ते श्रिताः कौरवं पक्षं जातस्नेहाश्च साम्प्रतम् ॥ ११

दुर्योधनहिते युक्ता न तथाऽस्मासु भारत ।
पूर्णकोशा बलोपेताः प्रयतिष्यन्ति रक्षणे ॥ १२

सर्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः ।
संविभक्ता हि मात्राभिर् भोगैरपि च सर्वशः ॥ १३

दुर्योधनेन ते वीरा मानिताश्च विशेषतः ।
प्राणांस्त्यक्ष्यन्ति सङ्ग्राम इति मे निश्चिता मतिः ॥ १४

समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।
द्रोणस्य च महाबाहो कृपस्य च महात्मनः ॥ १५

अवश्यं राजपिण्डस्तैर् निर्वेश्य इति मे मतिः ।
तस्मात् त्यक्ष्यन्ति सङ्ग्रामे प्राणानपि सुदुस्त्यजान् ॥ १६

सर्वे दिव्यास्त्रविदुषस् सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिर् अपि देवैस्सवासवैः ॥ १७

अमर्षी नित्यसंहृष्टस् तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्यस् त्वभेद्यकवचावृतः ॥ १८

अनिर्जित्य रणे सर्वान् एतान् पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया ॥ १९

न निद्रामधिगच्छामि चिन्तयामि वृकोदर ।
अति सर्वान् धनुर्ग्राहान सूतपुत्रस्य लाघवम् ॥ २०

वैशम्पायनः—
एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः ।
बभूव शान्तिसंयुक्तो गुरोर्वचनवारितः ॥ २१

तयोस्संवदतोरेवं तदा राजन्ययोर्द्वयोः ।
आजगाम महायोगी व्यासस्सत्यवतीसुतः ॥ २२

सोऽभिगम्य यथान्यायं पाण्डवैरभिपूजितः ।
युधिष्ठिरमिदं वाक्यम् उवाच वदतां वरः ॥ २३

व्यासः—
युधिष्ठिर महाबाहो वेद्मि ते हृदि मानसम् ।
मनीषया ततः क्षिप्रम् आगतोऽस्मि नरर्षभ ॥ २४

भीष्माद्द्रोणात् कृपात् कर्णाद् द्रोणपुत्राच्च भारत ।
[1]दुर्योधनान्नृपसुतात् तथा दुश्शासनादपि ॥ २५

यत्ते भयममित्रघ्न हृदि सम्परिवर्तते ।
तत्ते प्रशमयिष्यामि विधिदृष्टेन हेतुना ॥ २६

तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय ॥ २६॥

वैशम्पायनः—
तत एकान्तमानाय्य पाराशर्यो युधिष्ठिरम् ।

1. ख-घ—इदमर्धं नास्ति

अब्रवीदुपपन्नार्थम् इदं वाक्यविशारदः ॥ २७॥

व्यासः—

श्रेयसस्तेऽपरः कालः प्राप्तो भरतसत्तम ।
येनाभिभविता शत्रून् रणे पार्थो धनञ्जयः ॥ २८॥

गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ॥ २९॥

यामवाप्य महाबाहुर् अर्जुनस्साधयिष्यति ॥ ३०

अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ।
वरुणं च धनेशं च धर्मराजं च पाण्डव ॥ ३१

शक्तो ह्येष सुरान् द्रष्टुं तपसा विक्रमेण च ॥ ३१॥

ऋषिरेव महातेजा नारायणसहायवान् ।
पुराणश्शाश्वतो देवो विष्णोरंशस्सनातनः ॥ ३२॥

अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च ।
समादाय महाबाहुर् महत् कर्म करिष्यति ॥ ३३॥

वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् ।
निवासार्थं तु यद्युक्तं भवेद्वः पृथिवीपते ॥ ३४॥

एकत्र चिरवासो हि न प्रीतिजननो भवेत् ॥ ३५

तापसानां च शान्तानां भवेदुद्वेगकारकः ।

मृगाणामुपरोधश्च वीरुदोषधिसंक्षयः ॥ ३६

[1]बिभर्षि च बहून् विप्रान् वेदवेदाङ्गपारगान् ॥ ३६॥

वैशम्पायनः—

एवमुक्त्वा प्रपन्नाय शुचये भगवान् प्रभुः ।
प्रोवाच योगतत्त्वज्ञो योगी विद्यामनुत्तमाम् ॥ ३७॥

धर्मराजं तथा धीमान् व्यासस्सत्यवतीसुतः ।
अनुज्ञाप्य च कौन्तेयं तत्रैवान्तरधीयत ॥ ३८॥

युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः ।
धारयामास मेधावी काले काले समभ्यसन् ॥ ३९॥

स व्यासवाक्यमुदितो वनाद्वैतवनात् ततः ।
ययौ सरस्वतीकूले काम्यकं काननं महत् ॥ ४०॥

तमन्वयुर्महाराज शिक्षाक्षरविदस्तथा ।
ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ॥ ४१॥

ततः काम्यकमासाद्य पुनस्ते भरतर्षभाः ।
न्यविशन्त महात्मानस् सामात्यास्सपदानुगाः ॥ ४२॥

तत्र ते न्यवसन्राजन् कश्चित् कालं मनस्विनः ।
धनुर्वेदपरा वीराश् [2]श्रृणाना वेदमुत्तमम् ॥ ४३॥

---

1. ख—इदमर्धं नास्ति 2. क-ख—श्रृण्वन्तो

चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः ।
पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ३१ ॥ कैरातपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

युधिष्ठिरेण व्यासोपदिष्टमन्त्रोपदेशपूर्वकमस्त्रग्रहणाय स्वर्गं प्रत्यर्जुनस्य प्रस्थापनम् ॥ १ ॥ स्वर्गं प्रस्थितेनार्जुनेन मध्येपथमिन्द्रकीलगिरौ तपश्चर्या ॥ २ ॥ तत्र मुनिरूपिण इन्द्रस्य दर्शनम् ॥ ३ ॥ दिव्यास्त्रदानं याचितेनेन्द्रेणार्जुनं प्रति तपसा महेश्वरप्रसादनानन्तरमस्त्रलाभाय स्वर्गागमनचोदना ॥ ४ ॥

वैशम्पायनः—
कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
संस्मृत्य मुनिसंदेशम् इदं वचनमब्रवीत् ॥ १

विविक्ते विदितप्रज्ञम् अर्जुनं पुरुषर्षभम् ।
सान्त्वपूर्वं स्मितं कृत्वा पाणिना परिसंस्पृशन् ॥ २

स मुहूर्तमिव ध्यात्वा [1]वनवासमरिंदमः ।
धनञ्जयं धर्मराजो रहसीदमुवाच ह ॥ ३

1. ख—अयं पादोऽनन्तरश्च न स्तः ।

युधिष्ठिरः—

भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत ।
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ॥ ४

ब्राह्मं दैवं चासुरं च सप्रयोगचिकित्सितम् ।
सर्वास्त्राणां प्रयोगं च ते विजानन्ति कृत्स्नशः ॥ ५

ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः ।
संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्तते ॥ ६

सर्वयोधेषु चैवास्य सदा वृत्तिरनुत्तमा ।
शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः ॥ ७

अद्य चेयं मही कृत्स्ना दुर्योधनवशानुगा ।
त्वयि व्यपाश्रयोऽस्माकं त्वयि भारस्समाहितः ॥ ८

तत्र कृत्यं प्रपश्यामि प्राप्तकालमरिंदम ।
कृष्णद्वैपायनात् तात गृहीतोपनिषन्मया ॥ ९

गृहीतया तया सम्यक् जगत् सर्वं प्रकाशते ।
तेन त्वं ब्रह्मणा तात संयुक्तस्सुसमाहितः ॥ १०

देवतानां यथाकालं प्रसादं प्रतिपालय ।
तपसा योजयात्मानम् उग्रेण भरतर्षभ ॥ ११

धनुष्मान् कवची खड्गी मुनिस्सारसमन्वितः ।
न कस्यचिद्ददन् मार्गं गच्छ तातोत्तरां दिशम् ॥ १२

इन्द्रे ह्यस्त्राणि सर्वाणि समस्तानि धनञ्जय ।
वृत्राद्भीतैः पुरा देवैस् [1]तदा शक्रे समर्पितम् ॥ १३
तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे ।
अनेन ब्रह्मणा तात सर्वं सम्प्रतिपद्यते ॥ १४
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरंदरम् ॥ १५

वैशम्पायनः—

एवमुक्त्वा धर्मराजस् तमध्यापयत प्रभुः ।
दीक्षितं विधिना तेन यतवाक्कायमानसम् ॥ १६
अनुजज्ञे तदा वीरं भ्राता भ्रातरमग्रजः ।
निदेशाद्धर्मराजस्य द्रष्टुं देवं पुरंदरम् ॥ १७
धनुर्गाण्डीवमादाय तथाऽक्षय्यौ महेषुधी ।
कवची सतलत्राणः खड्गगोधाङ्गुलित्रवान् ॥ १८
हुताग्निर्ब्राह्मणान्निष्कैस् स्वस्ति वाच्य महाभुजः ।
प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः ॥ १९
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदीक्ष्य च ॥ १९॥
तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनम् ।
अब्रुवन् ब्राह्मणास्सिद्धा भूतान्यन्तर्हितानि च ॥ २०॥
सिद्धचारणसङ्घाश्च गन्धर्वाश्च तमब्रुवन् ॥ २१

1. ख-घ—र्बलमिन्द्रे समर्पितम् ।

सिद्धचारणादयः—

स्वस्ति व्रतं समाधत्स्व सङ्कल्पस्तत्र सिद्ध्यताम् ।
मनोरथाश्च ते सर्वे समृद्ध्यन्तां महारथ ॥ २२

वैशम्पायनः—

एवमुक्तोऽभिवाद्यैतान् बद्धाञ्जलिपुटस्तथा ।
तपोयोगमना: पार्थः पुरोहितमवन्दत ॥ २३

[1]ततः प्रीतमना जिष्णुस् तावुभावभ्यवन्दत ॥ २३॥

सहोदरावतिरथौ युधिष्ठिरवृकोदरौ ।
संक्रान्तमनसौ तूर्णम् अभिगम्य महारथौ ॥ २४॥

यमौ गाण्डीवधन्वानम् अभ्यवादयतामुभौ ।
अभिवाद्य तु तौ वीरावूचतुः पाकशासनिम् ॥ २५॥

यमौ—

अवाप्तव्यानि सर्वाणि दिव्यान्यस्त्राणि वासवात् ।
अस्त्राण्याप्नुहि कौन्तेय मनसा यद्यदिच्छसि ॥ २६॥

[2]गिरो ह्यशिथिलास्सर्वा निर्दोषास्सम्मतास्सताम् ।
त्वमेकः पाण्डवेष्वद्य सम्प्राप्तोऽसि धनञ्जय ॥ २७॥

न चाधर्मविदं देवा नासिद्धं नातपस्विनम् ।
द्रष्टुमिच्छन्ति कौन्तेय चलचित्तं शठं न च ॥ २८॥

---

1. ख—इदमर्धं नास्ति
2. ख—धीरो ह्यशिथिलः सम्यङ्‌निर्दोषः संमतः सताम् । [पाठान्तरम्]

[1]रोरूयमाणः कटुकम् ईर्ष्यकः कटुकाक्षरः ।
शठकश्श्लाघकः क्षेप्ता हन्ता च विचिकित्सिता ॥ २९॥

विश्वस्तहन्ता मायावी क्रोधनोऽनृतभाषिता ।
अत्याशी नास्तिकोऽदाता मित्रध्रुक्सर्वकर्कशः ॥ ३०॥

आक्रोष्टा चातिमानी च रौद्रो लुब्धोऽथ लोलुपः ।
स्तेनश्च मद्यपश्चैव भ्रूणहा गुरुतल्पगः ॥ ३१॥

सम्भावितात्मा चात्यर्थं नृशंसः पुरुषश्च यः ।
नैते लोकानाप्नुवन्ति निर्लोकास्ते धनञ्जय ॥ ३२॥

आनृशंस्यमनुक्रोशस् सत्यं करुणवेदिता ।
दमस्स्थितिर्धृतिर्धर्मः क्षमा रूपमनुत्तमम् ॥ ३३॥

दया शमश्च धर्मश्च गुरुपूजा कृतज्ञता ।
मैत्रता द्विजभक्तिश्च वसन्ति त्वयि फल्गुन ॥ ३४॥

[2]व्यपेक्षा सर्वभूतेषु कृपा दानं मतिस्स्मृतिः ।
तस्मात् कौरव्य शक्रेण समेष्यासि धनञ्जय ॥ ३५॥

त्वादृशेन हि देवानां श्लाघनीयस्समागमः ॥ ३६

सुहृदां सोदराणां च सर्वेषां भरतर्षभ ।
[3]त्वं गतिः परमा तात वृत्रहा मरुतामिव ॥ ३७

---

1. ख—अर्धद्वयं नास्ति
2. ख—नेदमर्धमस्ति
3. ख—नेदमर्धमस्ति

तस्मिंस्त्रयोदशे वर्षे भ्रातरस्सुहृदश्च ते ।
सर्वे हि संश्रयिष्यन्ति बाहुवीर्यं महाबल ॥ ३८

स पार्थ पितरं गच्छ सहस्राक्षमरिन्दमम् ।
मुष्टिग्रहणमादत्स्व सर्वाण्यस्त्राणि वासवात् ॥ ३९

शतशृङ्गे महाबाहो मघवानिदमब्रवीत् ।
शृण्वतां सर्वभूतानां त्वामुपाघ्राय मूर्धनि ॥ ४०

विदितस्सर्वभूतानां दिवं तात गमिष्यसि ।
[1]प्राप्य पुण्यकृतां लोकान् रंस्यसे जयतां वर ॥ ४१

मानितस्त्रिदशैः पार्थ विहृत्य सुसुखं दिवि ।
अवाप्य परमास्त्राणि पृथिवीं पुनरेष्यसि ॥ ४२

गुणांस्ते वासवस्तात [2]खाण्डवं दहति त्वयि ।
शृण्वतां सर्वभूतानां पुनः पुनरभाषत ॥ ४३

तां प्रतिज्ञां नरश्रेष्ठ कर्तुमर्हसि वासवीम् ।
कञ्चिद्देशमितः प्राप्य तपोयोगमना भव ॥ ४४

कर्तुमर्हसि कौरव्य मघवद्वचनं हितम् ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टासि त्वं पुरन्दरम् ॥ ४५

वैशम्पायनः—

तौ परिष्वज्य बीभत्सुः कृष्णामामन्त्र्य चाभि भो ।

---

1. ख—नेदमर्धमस्ति 2. ख-घ—खाण्डवे दह्यति त्वया

अभ्यवादयत प्रीतस् तपस्विप्रवरानपि ॥　　४६
मनांस्यादाय सर्वेषां प्रयातः पुरुषर्षभः ॥　　४६॥
तं सिंहमिव गच्छन्तं सिंहस्कन्धोरसं तदा ।
प्राञ्जलिः पाण्डवं कृष्णा देवानां कुर्वती नमः ॥　　४७॥
वाग्भिः परम[1]शक्ताभिर् मङ्गलाभिरभाषत ॥　　४८

द्रौपदी—

नमो धात्रे विधात्रे च स्वस्ति गच्छ वनाद्वनम् ॥　　४८॥
धर्मस्त्वां जुषतां पार्थ भास्करश्च विभावसुः ।
ब्रह्मा त्वां ब्राह्मणाश्चैव पालयन्तु धनञ्जय ॥　　४९॥
ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्वचनमास्थितः ।
प्रपद्येथा वसून्रुद्रान् आदित्यान् समरुद्गणान् ॥　　५०॥
विश्वेदेवांस्तथाऽऽदित्यान् शान्त्यर्थं भरतर्षभ ॥　　५१
[2]स्वस्ति तेऽस्त्वान्तरिक्षेभ्यो दिव्येभ्यो भरतर्षभ ।
पार्थिवेभ्यश्च सर्वेभ्यो ये केचित् परिपन्थिनः ॥　　५२
अवरोधाद्वने वासात् सर्वस्वहरणादपि ।
इदं दुःखतरं मन्ये पुत्रेभ्यश्च विवासनात् ॥　　५३
मास्माहं क्षत्रियकुले जातुचित्पुनराभवम् ।
ब्राह्मणेभ्यो नमस्यामि येषां नायुधजीविका ॥　　५४

---

1. क-ख—शुक्लाभिर्; घ—शक्याभिर्　　2. ख—इदमर्धं नास्ति

ध्वंसितस्स्वगृहेभ्यश्च राष्ट्राच्च भरतर्षभ ।
वने प्रतिष्ठितो भूत्वा सौहार्दादवतिष्ठसे ॥ ५५

जेता यस्सर्वशत्रूणां यः पावकमतर्पयत् ।
जनस्त्वां पश्यतीदानीं गच्छन्तं भरतर्षभ ॥ ५६

अस्मिन्नूनं महारण्ये भ्रातरस्सुहृदश्च ते ।
त्वत्कथाः कथयिष्यन्ति चारणा ऋषयस्तथा ॥ ५७

यत्तत् कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय ।
तत्ते सर्वं तथैवास्तु यथा च मनसेच्छसि ॥ ५८

वसुदेवस्वसा देवी त्वामार्या पुनरागतम् ।
सा पश्यतु पृथा पार्थ सहस्राक्षमिवादितिः ॥ ५९

नूनं ते भ्रातरस्सर्वे त्वत्कथाभिः प्रजागरे ।
रंस्यन्ते तव कर्माणि कीर्तयन्तः पुनः पुनः ॥ ६०

नैव नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टा बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि ॥ ६१

[1]आशा सञ्जायते वीर त्वय्यरण्यं प्रपद्यति ।
त्वयि नः पार्थ सर्वेषां सुखदुःखे प्रतिष्ठते ॥ ६२
जीवितं मरणं चैव स्वर्गोऽथ नरकस्तथा ॥ ६२॥

[2]आपृष्टो मेऽसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव । ६३

---

1. ख—नेदमर्धमस्ति 2. ख—अर्धमिदं नास्ति

कृतास्त्रं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥ ६३॥

वैशम्पायनः—

प्रदक्षिणं पुनः कृत्वा भ्रातॄन् धौम्यं च पाण्डवः ।
प्रातिष्ठत महाबाहुस् सुमनाः प्रीतिमांस्तदा । ६४॥

शनैरिव दिशं वीर उदीचीं भरतर्षभ ।
संहरंस्तरसा वृक्षाँल्लता वल्लीश्च भारत ॥ ६५॥

असज्जमानो वृक्षेषु जगाम सुमहाबलः ॥ ६६

तस्य मार्गादपाक्रामन् सर्वभूतानि गच्छतः ।
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः ॥ ६७

सोऽगच्छत् पर्वतं पुण्यम् एकाह्ना सुमहामनाः ।
मनोजवगतिर्भूत्वा योगयुक्तो यथाऽनिलः ॥ ६८

हिमवन्तमतिक्रम्य गन्धमादनमेव च ।
अत्यक्रामत्सुदुर्गाणि दिवारात्रमनिन्दितः ॥ ६९

इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनञ्जयः ।
अन्तरिक्षे स शुश्राव तिष्ठेति च वचस्तदा ॥ ७०

गत्वा स षडहोरात्रान् सप्तमेऽहनि पार्थिवः ।
प्रस्थेन्द्रकीलस्य शुभे तपोयोगपरोऽभवत् ॥ ७१

ऊर्ध्वबाहुर्न चाङ्गानि प्रास्पन्दयत किञ्चन ।
समाहितात्मा नियतः सहस्राक्षसुतोऽर्जुनः ॥ ७२

ततोऽपश्यत् सव्यसाची वृक्षमूले तपस्विनम् ।
ब्राह्मया श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ॥ ७२

सोऽब्रवीदर्जुनं तत्र स्थितं दृष्ट्वा महातपाः ॥ ७३॥

तपस्वी—

कस्त्वं तातेह सम्प्राप्तो धनुष्मान् कवची शरी ।
निबद्धासितलत्राणः क्षत्रधर्ममनुव्रतः ॥ ७४॥

नेह शस्त्रेण कर्तव्यं शान्तानामयमालयः ।
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम् ॥ ७५॥

नेहास्ति धनुषा कार्यं न[1]सङ्ग्रामोऽत्र कर्हिचित् ।
निक्षिपैतद्धनुस्तात प्राप्तोऽसि परमां गतिम् ॥ ७६॥

वैशम्पायनः—

इत्यनन्तौजसं वीरं यथा चान्यं पृथग्जनम् ।
तथा वाचमथाभीक्ष्णं ब्राह्मणोऽर्जुनमब्रवीत् ॥ ७७॥

न चैनं चालयामास धैर्यात् सुदृढनिश्चयम् ।
तमुवाच ततः प्रीतस् स द्विजः प्रहसन्निव ॥ ७८॥

तपस्वी—

वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन ॥ ७९

वैशम्पायनः—

एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः ।

---

1. ख–घ—सङ्ग्रामेण

प्राञ्जलिः प्रणतो भूत्वा शूरः कुरुकुलोद्वहः ॥　　८०

अर्जुनः—

ईप्सितो ह्येष वै कामो वरं चैव प्रयच्छ मे ।
त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुम् ॥　　८१

वैशम्पायनः—

प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव ॥　　८१॥

इन्द्रः—

इह प्राप्तस्य किं कार्यम् अस्त्रैस्तव धनञ्जय ।
कामान् वृणीष्व लोकांश्च प्राप्तोऽसि परमां गतिम् ॥　　८२॥

वैशम्पायनः—

एवमुक्तः प्रत्युवाच सहस्राक्षं धनञ्जयः ॥　　८३

अर्जुनः—

न लोकान् न पुनः कामान् न देवत्वं कुतस्सुखम् ।
न च सर्वामरैश्वर्यं कामये त्रिदशाधिप ॥　　८४

भ्रातृंस्तान् विपिने त्यक्त्वा वैरमप्रतियात्य च ।
अकीर्तिं सर्वलोकेषु गच्छेयं शाश्वतीस्समाः ॥　　८५

वैशम्पायनः—

एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम् ।
सान्त्वयञ्श्लक्ष्णया वाचा सर्वलोकनमस्कृतः ॥　　८६

इन्द्रः

यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम् ।
तदा दातास्मि ते तात दिव्यान्यस्त्राणि सर्वशः ॥　　८७

क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः ।
दर्शनात् तस्य कौन्तेय संसिद्धस्स्वर्गमेष्यसि ॥ ८८

वैशम्पायनः—

इत्युक्त्वा फल्गुनं शक्रो जगामादर्शनं ततः ।
अर्जुनोऽप्यथ तत्रैव तस्थौ योगसमन्वितः ॥ ८९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ३१ ॥ कैरातपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[ अस्मिन्नध्याये ८९ श्लोकाः ]

---

## ॥ चतुस्त्रिंशोऽध्यायः ॥

अर्जुनेन हिमवच्छिखरे तपश्चरणम् ॥ १ ॥ पार्थतपोभीरुभिर्महर्षिभिः प्रार्थितेन महादेवेनाश्वासनपूर्वकमृषीणां प्रति निवर्तनम् ॥ २ ॥

---

जनमेजयः—

भगवञ्श्रोतुमिच्छामि पार्थस्याक्लिष्टकारिणः ।
विस्तरेण कथामेतां यथाऽस्त्राण्युपलब्धवान् ॥ १

कथं स पुरुषव्याघ्रो दीर्घबाहुर्धनञ्जयः ।
वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् ॥ २

किञ्चानेन कृतं तत्र वसता ब्रह्मवित्तम ।
कथं च भगवान् रुद्रो देवराजश्च तोषितः ॥ ३

एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद् द्विजोत्तम ।
त्वं हि सर्वज्ञ दिव्यं च मानुषं चैव वेत्थ ह ॥ ४

अत्यद्भुतं महाप्राज्ञ रोमहर्षणमर्जुनः ।
भवेन सह सङ्ग्रामं चकाराप्रतिमं किल ॥ ५

पुरा प्रहरतां श्रेष्ठस् सङ्ग्रामेष्वपराजितः ॥ ५॥

तच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ।
शूराणामपि पार्थानां हृदयानि चकम्पिरे ॥ ६॥

यद्यच्च कृतवानन्यत् पार्थस्तदखिलं वद ॥ ७

न ह्यस्य निन्दितं जिष्णोस् सुसूक्ष्ममपि लक्षये ।
चरितं तस्य शूरस्य तन्मे सर्वं प्रकीर्तय ॥ ८

वैशम्पायनः—

कथयिष्यामि ते तात कथामेतां महात्मनः ।
दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ॥ ९

गात्रसंस्पर्शसम्बद्धां त्र्यम्बकेण महाहवे ।
पार्थस्य देवदेवेन शृणु सम्यक्समागमम् ॥ १०

युधिष्ठिरनियोगात् स जगामामितविक्रमः ।
शक्रं सुरेश्वरं द्रष्टुं देवदेवं च शङ्करम् ॥ ११

दिव्यं तद्धनुरादाय खड्गं च पुरुषर्षभः ।
महाबलो महाबाहुर् अर्जुनः कार्यसिद्धये ॥ १२

दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ।
ऐन्द्रिः स्थिरमना राजन् सर्वलोकमहारथः ॥ १३

त्वरया परया युक्तस् तपसे धृतनिश्चयः ।
वनं कण्टकिनं घोरम् एक एवान्वपद्यत ॥ १४

नानापुष्पफलोपेतं नानापक्षिनिनादितम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ १५

ततः प्रयाते बीभत्सौ वनं मानुषवर्जितम् ।
शङ्खानां पटहानां च शब्दस्समभवद् दिवि ॥ १६

पुष्पवर्षं च सुमहन्निपपात महीतले ।
मेघजालं च सततं छादयामास सर्वतः ॥ १७

सोऽतीत्य वनदुर्गाणि सन्निकर्षे महागिरेः ।
शुशुभे हिमवत्पृष्ठे वसमानोऽर्जुनस्तदा ॥ १८

तत्र पुण्यद्रुमान्पुष्पान् विहगैर्वल्गुनादितान् ।
नदीश्च विपुलावर्ता नीलवैडूर्यसंनिभाः ॥ १९

हंसकारण्डवोद्गीतास् सारसाभिरुतास्तथा ।
पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः ॥ २०

[1]मनोहरवनोपेतास् तस्मिन्नतिरथोऽर्जुनः ।
पुण्यशीलामलजलाः पश्यन् प्रीतमनाऽभवत् ॥ २१

1. ख—इदमर्धं नास्ति

रमणीये वनोद्देशे रममाणोऽर्जुनस्तदा ।
तपस्युग्रे वर्तमान उग्रतेजा महामनाः ॥　　२२

दर्भचीरं निवस्याथ दण्डाजिनविभूषितः ।
पूर्णे पूर्णे त्रिरात्रे तु मासमेकं फलाशनः ॥　　२३
द्विगुणेनैव कालेन द्वितीयं मासमत्यगात् ॥　　२३॥

तृतीयमपि मासं स पक्षेणाहारमाचरत् ।
जीर्णं च पतितं भूमौ पर्णं समुपयुक्तवान् ॥　　२४॥
चतुर्थे त्वथ सम्प्राप्ते मासि पूर्णे ततः परम् ।
वायुभक्षो महाबाहुर् अभवत् पाण्डुनन्दनः ॥　　२५॥
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रविष्ठितः ॥　　२६
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः ।
विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥　　२७
ततो महर्षयस्सर्वे जग्मुर्देवं पिनाकिनम् ॥　　२७॥
शितिकण्ठं महादेवम् अभिवाद्य प्रणम्य च ।
सर्वे निवेदयामासुः कर्म तत् फल्गुनस्य ह ॥　　२८॥

महर्षयः—

एकः पार्थो महातेजा हिमवत्पृष्ठमाश्रितः ।
उग्रे तपसि दुष्पारे स्थितो धूमापयन् दिशः ॥　　२९॥
तस्य देवेश न वयं विद्मस्सर्वे चिकीर्षितम् ।
सन्तापयति नस्सर्वान् असौ साधु निवार्यताम् ॥　　३०॥

श्रीमहेश्वरः—

शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः ।
अहमस्य विजानामि सङ्कल्पं मनसि स्थितम् ॥ ३१॥

नास्य स्वर्गस्पृहा काचिन्नैश्वर्यस्य न चायुषः ।
यत्तस्य काङ्क्षितं प्राप्तुं तत् करिष्येऽहमद्य वै ॥ ३२॥

वैशम्पायनः—

ते श्रुत्वा तस्य वचनम् ऋषयस्सत्यवादिनः ।
प्रहृष्टमनसो जग्मुर् यथास्वं पुनराश्रमान् ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ ३१ ॥ कैरातपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ पञ्चत्रिंशोऽध्यायः ॥

---

किरातरूपिणा हरेणार्जुनस्य पराजयः ॥ १ ॥ तथा पार्थपूजास्तुतिसंतुष्टेन तेन तदाश्वासनम् ॥ २ ॥ महादेवेन पार्थाय स्वग्रस्तगाण्डीवादि प्रत्यर्पणपूर्वकं पाशुपतास्त्रप्रदानम् ॥ ३ ॥

---

वैशम्पायनः—

गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान् सर्वपापहरो हरः ॥ १

कैरातं वेषमास्थाय काञ्चनद्रुमसन्निभम् ।

विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः ॥ २

श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् ।

निष्पपात महार्चिष्मान् दहनः कक्षवानिव ॥ ३

देव्या सहोमया श्रीमान समानव्रतवेषया ।

नानावेषधरैर्हृष्टैर् भूतैरनुगतस्तथा ॥ ४

किरातवेषसञ्छन्नस् स्त्रीभिश्चानु सहस्रशः ।

अशोभत महाराज स देवोऽतीव भारत ॥ ५

क्षणेन तद्वनं सर्वं निःशब्दमभवत् तदा ।

नादः प्रस्रवणानां च पक्षिणामप्युपारमत् ॥ ६

स सन्निकर्षमागम्य पार्थस्याक्लिष्टकारिणः ।

मूकं नाम दितेः पुत्रं ददर्शाद्भुतविक्रमम् ॥ ७

वाराहं रूपमास्थाय तर्जयन्तमिवार्जुनम् ।

हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ॥ ८

गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् ।

[1]सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ॥ ९

अर्जुनः—

यन्मां प्रार्थयसे हन्तुम् अनागसमिहागतम् ।

तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् ॥ १०

वैशम्पायनः—

दृष्ट्वा तं प्रहरिष्यन्तं फल्गुनं दृढधन्विनम् ।

---

1. ख—इदमर्धं नास्ति ।

किरातरूपी सहसा वारयामास शङ्करः ॥ ११
मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः ।
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः ॥ १२
किरातश्च समं तस्मिन्नेकलक्षे महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ॥ १३
तौ मुक्तौ सायकौ तत्र समवेगौ निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलपृष्ठनिभे तदा ॥ १४
[1]यथाऽशनेर्विनिष्पेषो वज्रस्येव च पर्वते ।
तथा तयोस्सन्निपातश् शरयोरभवत् तदा ॥ १५
स विद्धो बहुभिर्बाणैर् दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं [2]भयं कृत्वा सुदारुणम् ॥ १६
ददर्शाथ ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषप्रच्छन्नं स्त्रीसहायममित्रहा ॥ १७
तमब्रवीत् प्रीतमनाः कौन्तेयः प्रहसन्निव ॥ १७॥

अर्जुनः—

को भवानटते शून्ये वने स्त्रीगणसंवृतः ।
न त्वमस्मिन् वने घोरे बिभेषि कनकप्रभ ॥ १८॥
किमर्थं च त्वया विद्धो मृगोऽयं मत्परिग्रहः ।

---

1. ख—इदमर्धं नास्ति
2. क-ख—भूयः

मयाऽभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ॥　　१९॥

कामात् परिभवाच्चापि न मे जीवन् विमोक्ष्यसे ॥　　२०

न ह्येष मृगयाधर्मो यस्त्वयाऽद्य कृतो मयि ।

तेन त्वां भ्रंशयिष्यामि जीवितात् पर्वताश्रयम् ॥　　२१

वैशम्पायनः—

इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव ।

उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनम् ॥　　२२

किरातः—

ममैवायं लक्ष्यभूतः पूर्वमेव परिग्रहः ।

ममैव च प्रहारेण जीविताद्व्यपरोपितः ॥　　२३

दोषान् स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः ।

[1]अभियुक्तोऽस्मि मन्दात्मन् न मे जीवन् विमोक्ष्यसे ॥　　२४

स्थिरो भव विमोक्ष्यामि सायकानशनीनिव ।

घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ॥　　२५

वैशम्पायनः—

ततस्तौ तत्र संरब्धौ गर्जमानौ मुहुर्मुहुः ।

शरैराशीविषाकारैस् ततक्षाते परस्परम् ॥　　२६

ततोऽर्जुनश्शरवर्षं किराते समवासृजत् ।

तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः ॥　　२७

मुहूर्तं शरवर्षं तु प्रतिगृह्य पिनाकधृक् ।

---

1. क-ख—अभिषिक्तोऽस्मि

अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥ २८

स दृष्ट्वा बाणवर्षं तु मोघीभूतं धनञ्जयः ।
परमं विस्मयं चक्रे साधु साध्विति चाब्रवीत् ॥ २९

अर्जुनः—

अहोऽयं सुकुमाराङ्गो हिमवच्छिखरालयः ।
गाण्डीवमुक्तान्नाराचान् प्रतिगृह्णात्यविह्वलः ॥ ३०

कोऽयं देवो भवेत् साक्षाद् रुद्रो यक्षोऽसुरेश्वरः ।
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥ ३१

न हि मद्बाणजालानाम् उत्सृष्टानां सहस्रशः ।
शक्तोऽन्यस्सहितुं वेगम् ऋते देवं पिनाकिनम् ॥ ३२

देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः ।
अहमेनं शरैस्तीक्ष्णैर् नयामि यमसादनम् ॥ ३३

वैशम्पायनः—

ततो हृष्टमना जिष्णुर् नाराचान् मर्मभेदिनः ।
व्यसृजच्छतधा राजन् मयूखानिव भास्करः ॥ ३४

तान् प्रसन्नेन मनसा भगवाँल्लोकभावनः ।
शूलपाणिः प्रत्यगृह्णाच् छिलावर्षमिवाचलः ॥ ३५

क्षणेन क्षीणबाणोऽथ संवृत्तः फल्गुनस्तदा ।
वित्रासं च जगामाथ तं दृष्ट्वा शरसङ्क्षयम् ॥ ३६

चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम् ।

अर्जुनः—

पुरस्ताद्क्षयौ दत्तौ तूणौ मे येन खाण्डवे ।

किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः ॥ ३७॥

अयं च पुरुषः कोऽपि बाणान् ग्रसति सर्वशः ॥ ३८

अहमेनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम् ।

नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ३९

वैशम्पायनः—

सम्प्रयुद्ध्यन् धनुष्कोट्या कौन्तेयः परवीरहा ।

[1]अतुलं देवमीशानं ललाटे प्रजहार च ॥ ४०

तदप्यस्य धनुर्दिव्यं जग्राह गिरिगोचरः ॥ ४०॥

ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत ।

युद्धस्यान्तमभीप्सन् वै वेगेनाभिजगाम तम् ॥ ४१॥

तस्य मूर्ध्नि शितं खड्गम् असक्तं पर्वतेष्वपि ।

मुमोच भुजवीर्येण विक्रम्य कुरुनन्दनः ॥ ४२॥

तस्य मूर्धानमासाद्य पफालासिवरोऽथ सः ॥ ४३

ततो वृक्षैश्शिलाभिश्च योधयामास फल्गुनः ।

यथा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः ॥ ४४

किरातरूपी भगवांस् ततः पार्थो महाबलः ।

मुष्टिभिर्वज्रसंस्पर्शैर् धूममुत्पादयन् मुखे ॥ ४५

प्रजहार दुराधर्षे किरातसमरूपिणि ॥ ४५॥

1. क-ख—नास्तीदमर्धम्

ततश्शक्राशनिसमैर् मुष्टिभिर्भृशदारुणैः ।
किरातरूपी भगवान् अर्दयामास फल्गुनम् ॥　　४६॥

ततश्चटचटाशब्दस् सुघोरस्समजायत ।
पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ॥　　४७॥

सुमुहूर्तं तयोर्युद्धम् आसील्लोकप्रहर्षणम् ।
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥　　४८॥

महाराज ततो जिष्णुः किरातं तरसा बली ।
पाण्डवं च विचेष्टन्तं किरातोऽप्यहनद्बलात् ॥　　४९॥

तयोर्भुजविनिष्पेषात् सङ्घर्षेणोरसोस्तदा ।
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥　　५०॥

तत एनं महादेवः पीडच गात्रैस्सुपीडितम् ।
तेजसाऽऽयाक्रमद्रोषाच् चेतस्तस्य विमोहयन् ॥　　५१॥

ततो निष्पीडितैर्गात्रैः पिण्डीकृत इवाबभौ ।
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥　　५२॥

निरुच्छ्वासोऽभवच्चैव सन्निरुद्धो महामनाः ।
ततः पपात सम्मूढस् ततः प्रीतोऽभवद्धरः ॥　　५३॥

सुमुहूर्तं ततो भूत्वा सचेताः पुनरुत्थितः ।
रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः ॥　　५४॥

शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम् ।

मृण्मयं स्थण्डिले कृत्वा माल्येनापूजयद्भवम् ॥ ५५॥

तच्च माल्यं तदा पार्थः किरातशिरसि स्थितम् ।
अपश्यत् पाण्डवश्रेष्ठो हर्षेण प्रकृतिं गतः ॥ ५६॥

पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः ॥ ५७

श्रीमहेश्वरः—

भो भो फल्गुन तुष्टोऽस्मि कर्मणाऽप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ५८

[1]समं तेजश्च वीर्यं च ममाद्य तव चानघ ।
प्रीतस्तेऽहं महाबाहो पश्य मां पुरुषर्षभ ॥ ५९

ददामि ते विशालाक्ष चक्षुः पूर्वं मुनिर्भवान् ।
विजेष्यसि रणे शत्रून् अपि देवान् दिवौकसः ॥ ६०

वैशम्पायनः—

ततो देवं महादेवं गिरिशं शूलपाणिनम् ।
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ६१

स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च ।
प्रसादयामास हरं पार्थः परपुरञ्जयः ॥ ६२

अर्जुनः—

कपर्दिन् सर्वभूतेश भगनेत्रनिपातन ।
व्यतिक्रमं मे भगवन् क्षन्तुमर्हसि शङ्कर ॥ ६३

---

1. क—अर्धचतुष्टयं नास्ति

भगवद्दर्शनाकाङ्क्षी प्राप्तोऽस्मीमं महागिरिम् ।
दयितं तव देवेश तापसालयमुत्तमम् ॥ ६४

प्रसादये त्वां भगवन् सर्वलोकनमस्कृतम् ।
न मे स्यादपराधोऽयं महादेवातिसाहसात् ॥ ६५

कृतो मया यदज्ञानाद् विमर्दो यस्त्वया सह ।
शरणं मे प्रपन्नाय तत् क्षमस्वाद्य शङ्कर ॥ ६६

वैशम्पायनः—

तमुवाच महातेजाः प्रहस्य वृषभध्वजः ।
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम् ॥ ६७

परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवान् हरः ।
पुनः पार्थं सान्त्वपूर्वम् उवाच वृषभध्वजः ॥ ६८

[1]गङ्गाङ्कितजटश्शर्वः पार्थस्यामिततेजसः ।
प्रगृह्य रुचिरं बाहुं वृत्तं ताम्रतलाङ्गुलिम् ॥* ६९

श्रीमहेश्वरः—

नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान् बहून् ॥ ७०

त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे ।
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत् ॥ ७१

---

1. ख—इदमर्धं नास्ति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

शक्राभिषेके सुमहद् धनुर्जलदनिस्स्वनम् ।
प्रगृह्य दानवाऽशस्तास् त्वया कृष्णेन च प्रभो ॥ ७२

एतत्तदेव गाण्डीवं तव पार्थ करोचितम् ।
मायामास्थाय यद्ग्रस्तं मया पुरुषसत्तम ॥ ७३

तूणौ चाप्यक्षयौ भूयस् तव पार्थ यथोचितौ ।
भविष्यति शरीरं च नीरुजं कुरुनन्दन ॥ ७४

प्रीतिमानस्मि वै पार्थ तव सत्यपराक्रम ।
गृहाण वरमस्मत्तः काङ्क्षितं यन्नरर्षभ ॥ ७५

न त्वया सदृशः कश्चित् पुमान् मर्त्येषु भारत ।
दिवि वा विद्यते क्षत्रं त्वत्प्रधानमरिन्दम ॥ ७६

अर्जुनः—

भवान् ददाति चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यमस्त्रं तद् घोरं पाशुपतं प्रभो ॥ ७७

यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥ ७८

जयेयं येन सङ्ग्रामे दानवान् राक्षसांस्तथा ।
राज्ञश्चैव पिशाचांश्च गन्धर्वानथ पन्नगान् ॥ ७९

यस्मिञ्शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ।
शराश्चाशीविषाकारास् सम्भवन्त्यनुमन्त्रिताः ॥ ८०

युध्येयं येन भीष्मेण द्रोणेन च कृपेण च ।
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ॥ ८१

एष मे प्रथमः कामो भगवन् भगनेत्रहन् ।
त्वत्प्रसादाद्विनिर्वृत्तस् समर्थस्स्यामहं यथा ॥ ८२

श्रीमहेश्वरः—

ददामि तेऽस्त्रं दयितम् अहं पाशुपतं महत् ।
समर्थो धारणे मोक्षे संहारे चासि पाण्डव ॥ ८३

न तद्वेद महेन्द्रोऽपि न यमो न च यक्षराट् ।
वरुणो वाऽथवा वायुः कुतो वेत्स्यन्ति मानवाः ॥ ८४

न त्वया सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् ।
जगद्विनिर्दहेत् सर्वम् अल्पतेजसि पातितम् ॥ ८५

अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे ।
मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ ८६

वैशम्पायनः—

तच्छ्रुत्वा सहसा पार्थश् शुचिर्भूत्वा समाहितः ।
उपसङ्गृह्य विश्वेशम् अधीष्वेति च सोऽब्रवीत् ॥ ८७

ततस्त्वध्यापयामास सरहस्यनिवर्तनम् ।
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् ॥ ८८

उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम् ॥ ८८॥

प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ ८९

ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ससागरवनोद्देशा सग्रामनगराकरा ॥ ९०

शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः ।
तस्मिन् मुहूर्ते सम्प्राप्ते निर्घातश्च महानभूत् ॥ ९१

अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः ।
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः ॥ ९२

[1]स्पृष्टस्य च त्र्यम्बकेण फल्गुनस्यामितौजसः ।
यत् किञ्चिदशुभं देहे तत् सर्वं नाशमीयिवत् ॥ ९३

स्वर्गं गच्छेत्यनुज्ञातस् त्र्यम्बकेण तथाऽर्जुनः ।
प्रणम्य शिरसा राजन् प्राञ्जलिर्हरमैक्षत ॥ ९४

ततः प्रभुस्त्रिदिवनिवासिनां वशी
महामतिर्गिरिश उमापतिश्शिवः ।
धनुर्महद्दितिजपिशाचसूदनं
ददौ पुनः पुरुषवराय गाण्डिवम् ॥ ९५

ततश्शुभं गिरिवरमीश्वरस्तदा
सहोमयाऽसिततटसानुकन्दरम् ।

1. ख—अर्धद्वयं नास्ति

विहाय तं पतगमहर्षिसेवितं
जगाम खं पुरुषवरस्य पश्यतः ॥ ९६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ३१ ॥ कैरातपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये ९६ श्लोकाः ]

---

## ॥ षट्त्रिंशोऽध्यायः ॥

---

यमवरुणकुबेरैरर्जुनायास्त्रदानम् ॥ १ ॥ अर्जुनं प्रति शक्रेण स्वर्गागमनचोदना ॥ २ ॥

---

वैशम्पायनः—

पार्थस्य पश्यतश्चैव पिनाकी गोवृषध्वजः ।
जगामादर्शनं भानुर् लोकस्येवास्तमीयिवान् ॥ १

ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ।
मया साक्षान्महादेवो दृष्ट इत्यसकृत् प्रभुः ॥ २

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मया त्र्यम्बको हरः ।
पिनाकी वरदो रूपी दृष्टस्स्पृष्टश्च पाणिना ॥ ३

कृतार्थं चावगच्छामि परमात्मानमात्मना ।
शत्रूंश्च विजितान् सर्वान् निर्वृत्तं च प्रयोजनम् ॥ ४

[1]इत्येवं चिन्तयानस्य पार्थस्यामिततेजसः ।
ततो वैडूर्यवर्णाभो द्योतयन् सर्वतो दिशः ॥ ५
यादोगणवृतश्श्रीमान् आजगाम जलेश्वरः ॥ ५॥
[2]नागैर्नदैर्नदीभिश्च दैत्यैस्साध्यैर्मरुद्गणैः ।
वरुणो यादसां भर्ता वशी तं देशमागमत् ॥ ६॥
अथ जाम्बूनदवपुर् विमानेन महार्चिषा ।
कुबेरस्समनुप्राप्तो यक्षैरनुगतः प्रभुः ॥ ७॥
विद्योतयन्निवाकाशम् अद्भुतोपमदर्शनः ।
[3]धनानामधिपश्श्रीमान् अर्जुनं द्रष्टुमागतः ॥ ८॥
तथा लोकान्तकश्श्रीमान् यमस्साक्षात् प्रतापवान् ।
मर्त्यमूर्तिधरैस्सार्धं पितृभिर्लोकपावनैः ॥ ९॥
दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत् ।
वैवस्वतो धर्मराजो विमानेनावभासयन् ॥ १०॥
[4]त्रींल्लोकान् गुह्यकांश्चैव गन्धर्वांश्च सपन्नगान् ।
द्वितीय इव मार्ताण्डो युगान्ते समुपस्थिते ॥ ११॥
भानुमन्ति विचित्राणि शिखराणि महागिरेः ।
[5]समास्थायार्जुनं तत्र ददृशुस्तपसान्वितम् ॥ १२॥

---

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. क—नास्तीदमर्धम्
4. ख—इदमर्धं नास्ति
5. ख—इदमर्धं नास्ति

ततो मुहूर्ताद्भगवान् ऐरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रस्सुरगणैर्वृतः ॥ १३॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे नागराजस्थस् सितमभ्रमिवास्थितः ॥ १४॥

[1]संस्तूयमानो गन्धर्वैर् ऋषिभिश्च तपोधनैः ।
शृङ्गं गिरेस्समासाद्य तस्थौ सूर्य इवोदितः ॥ १५॥

अथ मेघस्वनो धीमान् व्याजहार शुभां गिरम् ।
यमः परमधर्मज्ञो दक्षिणां दिशमास्थितः ॥ १६॥

यमः—

अर्जुनार्जुन पश्यास्माँल्लोकपालान् समागतान् ।
दृष्टिं ते वितरामोऽद्य भवानर्हो हि दर्शनम् ॥ १७॥

पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः ॥ १८॥

*त्वया वसुषु सम्भूतो महावीर्यः पितामहः ।
क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् ॥ १९॥

दानवाश्च महावीर्या ये मनुष्यत्वमागताः ।
निवातकवचाश्चैव संसाध्याः कुरुनन्दन ॥ २०॥

पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः ।

1. ख—अर्धमिदं नास्ति * "संसाध्याः" इत्युत्तरेणान्वयः स्यात्

कर्णस्स सुमहावीर्यस् त्वया वध्यो धनञ्जय ॥ २१॥

अंशाश्च क्षत्रतां प्राप्ता देवगन्धर्वरक्षसाम् ।
त्वया निपातिता युद्धे स्वकर्मफलनिर्जिताम् ॥ २२॥

[1]गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन ॥ २३

अक्षया तव कीर्तिश्च लोके स्थास्यति फल्गुन ।
त्वया साक्षान्महादेवस् तोषितो हि महामृधे ॥ २४

लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ २४॥

गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् ।
अनेनास्त्रेण सुमहत् त्वं हि कर्म करिष्यसि ॥ २५॥

वैशम्पायनः—

प्रतिजग्राह तत् पार्थो विधिवत् कुरुनन्दनः ।
समन्त्रं [2]सोपहारं च समोक्षं संनिवर्तनम् ॥ २६॥

ततो जलधरश्यामो वरुणो यादसां पतिः ।
[3]पश्चिमां दिशमास्थाय गिरमुच्चारयन् प्रभुः ॥ २७॥

वरुणः—

पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः ।
पश्य मां पृथुताम्राक्ष वरुणोऽस्मि जलेश्वरः ॥ २८॥

मया समुद्यतान् पाशान् वारुणानतिदारुणान् ।

---

1. ख—इदमर्धं नास्ति
2. क-ख—सोपचारं च + सनिवर्तनम
3. ख—इदमर्धं नास्ति

प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्तनान् ॥ २९॥

एभिस्तदा मया वीर सङ्ग्रामे तारकामये ।
दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥ ३०॥

[1]तस्मादिमान् महासत्त्व मत्प्रसादसमुत्थितान् ।
गृहाण न हि ते मुच्येद् अन्तकोऽप्याततायिनः ॥ ३१॥

अनेन त्वं यदाऽस्त्रेण सङ्ग्रामे विचरिष्यसि ।
तदा निःक्षत्रिया भूमिर् भविष्यति न संशयः ॥ ३२॥

वैशम्पायनः—

ततस्तान् वारुणान् दिव्यान अस्त्रानस्त्रविदां वरः ।
प्रतिजग्राह विधिवद् वरुणाद्वासविस्तदा ॥ ३३॥

ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत ।
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ॥ ३४॥

कुबेरः—

सव्यसाचिन् महाबाहो पूर्वदेव सनातन ।
[2]सहास्माभिर्भवाञ्श्रान्तः पुराकल्पेषु नित्यशः ॥ ३५॥

मत्तोऽपि त्वं गृहाणास्त्रम् अन्तर्धानं प्रियं मम ।
ओजस्तेजोद्युतिकरं प्रस्वापनमथारिहन् ॥ ३६॥

वैशम्पायनः—

ततोऽर्जुनो महाबाहुर् विधिवत् कुरुनन्दनः ।

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

[1]कौबेरमपि जग्राह दिव्यमस्त्रं महाबलः ॥　३७॥

ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम् ।
सान्त्वयञ्श्लक्ष्णया वाचा दिव्यदुन्दुभिनिःस्वनः ॥　३८॥

इन्द्रः—

कुन्ती[2]पुत्र महाबाहो त्वमीशानः पुरातनः ।
परां सिद्धिमनुप्राप्तस् साक्षाद्देवगतिं गतः ॥　३९॥

देवकार्यं हि सुमहत् त्वया कार्यमरिन्दम ।
आरोढव्यस्त्वया स्वर्गस् सज्जीभव महाद्युते ॥　४०॥

रथो मातलिसंयुक्त आगतस्त्वत्कृते मम ।
तत्र तेऽहं प्रदास्यामि सर्वाण्यस्त्राणि कौरव ॥　४१॥

वैशम्पायनः—

तान् दृष्ट्वा लोकपालांस्तु समेतान् गिरिमूर्धनि ।
जगाम विस्मयं धीमान् कुन्तीपुत्रो धनञ्जयः ॥　४२॥

ततोऽर्जुनो महाराज लोकपालान् समागतान् ।
पूजयामास विधिवद् वाग्भिरद्भिः फलैरपि ॥　४३॥

ततः प्रतिययुर्देवाः प्रतिपूज्य धनञ्जयम् ।
यथागतेन विबुधास् सर्वे कामं मनोजवाः ॥　४४॥

---

1. अ-घ—करस्थमपि
2. क—मातर् ; ख—सुत

ततोऽर्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः ।
कृतार्थ इति चात्मानं स मेने पूर्णमानसम् ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

॥ ३१ ॥ कैरातपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[अस्मिन्नध्याये ४५॥ श्लोकाः]

[ कैरातपर्व समाप्तम् ]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥

( इन्द्रलोकाभिगमनपर्व )

पार्थेन मातलिसमानीतरथारोहणेन स्वर्गगमनम् ॥

---

वैशम्पायनः—

गतेषु लोकपालेषु पार्थश्शत्रुनिबर्हणः ।
चिन्तयामास राजेन्द्र देवराजरथागमम् ॥ १

तस्य चिन्तयमानस्य गुडाकेशस्य धीमतः ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ २

नभो वितिमिरं कुर्वञ् जलदान् पाटयन्निव ।
दिशस्सम्पूरयन्नादैर् महामेघरवोपमैः ॥ ३

असयश्शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः ।
दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥ ४

तथैवाशनयस्तत्र चक्रयुक्ता हुलाहुलाः ।
वायुस्फोटास्सनिर्घाताश् शङ्खमेघनिभास्तथा ॥ ५

तत्र नागा महाकाया ज्वलितास्यास्सुदारुणाः ।
[1]सिताभ्रकूटप्रतिमास् संहताश्च यथोपलाः ॥ ६

दशवाजिसहस्राणि हरीणां वातरंहसाम् ।
वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ॥ ७

तत्रापश्यन् महीपालो वैजयन्तं महाप्रभम् ।
ध्वजमिन्दीवरश्यामं वंशं कनकभूषितम् ॥ ८

तस्मिन् रथे स्थितं सूतं हेमजालविभूषितम् ।
दृष्ट्वा पार्थो महाबाहुर् देवराजमतर्कयत् ॥ ९

तथा तर्कयतस्तस्य फल्गुनस्य स मातलिः ।
सन्नतः प्रश्रितो भूत्वा वाक्यमर्जुनमब्रवीत् ॥ १०

मातलिः—

भो भो शक्रात्मज श्रीमञ् शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवाञ्शीघ्रं रथमिन्द्रस्य सम्मतम् ॥ ११

आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः ॥ १२

एष शक्रः परिवृतो देवैस्सर्षिगणैस्तथा ।

---

1. ख—इदमर्धं नास्ति

गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥ १३

अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
आरोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि ॥ १४

अर्जुनः—
मातले गच्छ शीघ्रं त्वम् आरोहस्व रथोत्तमम् ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् ॥ १५

पार्थिवैस्सुमहाभागैर् यज्वभिर्भूरिदक्षिणैः ।
दैवतैर्वा समारोढुं दानवैर्वा महारथम् ॥ १६

[1]नातप्ततपसा शक्यो ह्येष दिव्यो महारथः ।
[2]द्रष्टुं वाऽप्यथवा स्प्रष्टुम् आरोढुं कुत एव तत् ॥ १७

त्वयि प्रतिष्ठिते साधो रथस्थे स्थितवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ १८

वैशम्पायनः—
तस्य तद्वचनं श्रुत्वा मातलिश्शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयाञ्जग्राह रश्मिभिः ॥ १९

ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतश्शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत् कुरुनन्दनः ॥ २०

ततः पितॄन् यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजं तम् आप्रष्टुमुपचक्रमे ॥ २१

---

1. अ-क-ब—नास्तीदमर्धम्   2. क—अर्धं द्वयं नास्ति

अर्जुनः—

साधूनां पुण्यशीलानां मुनीनां पुण्यकर्मणाम् ।
त्वं सदा संश्रयश्शैल स्वर्गमार्गाभिकाङ्क्षिणाम् ॥ २२

त्वत्प्रसादान्महाशैल ब्राह्मणाः क्षत्रिया विशः ।
स्वर्गं प्राप्ताश्चरन्ति स्म देवैरपि गतव्यथाः ॥ २३

अद्रिराज महाशैल मुनिसंश्रय तीर्थवन् ।
गच्छाम्यामन्त्रयित्वा त्वां सुखमस्म्युषितस्त्वयि ॥ २४

तव सानूनि कुञ्जाश्च नद्यः प्रस्रवणानि च ।
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥ २५

फलानि च सुगन्धीनि भक्षितानि ततस्ततः ।
सुसुगन्धाश्च वार्योघास् त्वच्छरीरविनिस्सृताः ॥ २६
अमृतास्वादनीया मे पीताः प्रस्रवणोद्भवाः ॥ २६॥

शिशुर्यथा पितुश्चाङ्के सुखं शेते नगे तथा ।
मया तवाङ्के ललितं शैलराज महाप्रभो ॥ २७॥

[1]अप्सरोगणसङ्कीर्णे ब्रह्मघोषानुनादिते ।
सुखमध्युषितश्शैल तव सानूनि नित्यदा ॥ २८॥

वैशम्पायनः—

एवमुक्त्वाऽर्जुनश्शैलम् आमन्त्रयत शत्रुहा ।

1. ख—अर्धद्वयं नास्ति

आरुरोह रथं दिव्यं द्योतयन्निव [1]पावकः ॥ २९॥

स तेनादित्यवर्णेन दिव्येनाद्भुतकर्मणा ।
ऊर्ध्वमाचक्रमे धीमान् प्रहृष्टः कुरुनन्दनः ॥ ३०॥

सोऽदर्शनपथं यातो मर्त्यानां भूमिचारिणाम् ।
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ॥ ३१॥

[2]तत्र सूर्यस्ततस्सोमो द्योतते नोत पावकः ।
स्वयैव प्रभया युक्ता द्योतन्ते पुण्यलक्षणाः ॥ ३२॥

तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ।
आकाशे विप्रकृष्टत्वाद् अणूनि सुमहान्त्यपि ॥ ३३॥

तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः ।
ददर्श तेषु धिष्ण्येषु दीप्तिमन्ति स्वयाऽर्चिषा ॥ ३४॥

तत्र राजर्षयस्सिद्धा वीराश्च निहता युधि ।
तपसा च जितस्वर्गाः सम्पेतुश्शतसङ्घशः ॥ ३५॥

गन्धर्वाणां सहस्राणि सूर्यज्वलिततेजसाम् ।
गुह्यकानामृषीणां च तथैवाप्सरसां गणाः ॥ ३६॥

लोकानात्मप्रभान् पश्यन् फल्गुनो विस्मयान्वितः ।
पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह ॥ ३७॥

---

1. क-ख—भास्करः ; अ—पावकम्
2. क-ख—न तत्र सूर्यस्सोमो वा

मातलिः—
एते सुकृतिनः पार्थ स्वेषु धिष्ण्येषु विष्ठिताः ।
यान् दृष्टवानसि विभो तारारूपाणि भूतले ॥ ३८॥

वैशम्पायनः—
ततोऽपश्यत् स्थितं द्वारि मत्तं विजयिनं गजम् ।
ऐरावतं चतुर्दन्तं कैलासमिव शृङ्गिणम् ॥ ३९॥

स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ।
व्यरोचत यथापूर्वं मान्धाता पार्थिवोत्तमः ॥ ४०॥

अतिचक्राम लोकान् स राज्ञां राजीवलोचनः ।
ततो ददर्श शक्रस्य पुरींताममरावतीम् ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

---

## ॥ अष्टात्रिंशोऽध्यायः ॥

---

इन्द्रेणार्जुनस्य सबहुमानं स्वार्धासनारोपणम् ॥

---

वैशम्पायनः—
स ददर्श पुरीं रम्यां सिद्धचारणसेविताम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ १

तत्र सौगन्धिकानां स द्रुमाणां पुण्यगन्धिनाम् ।
उपवीज्यमानो मिश्रेण वायुना पुण्यगन्धिना ॥ २

नन्दनं च वनं पुण्यम् अप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमैर् आह्वयद्भिरिव द्रुमैः ॥ ३

नातप्ततपसा शक्यो [1]नापि चानाहिताग्निना ।
स लोकः पुण्यकृतिनां नापि युद्धपराङ्मुखैः ॥ ४

नायज्वभिर्नानृतकैर् न वेदश्रुतिवर्जितैः ।
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ॥ ५

नापि यज्ञहनैः क्षुद्रैर् द्रष्टुं शक्यः कथञ्चन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥ ६

स तद्दिव्यं वनं पश्यन् दिव्यगीतनिनादितम् ।
प्रविवेश महाबाहुश् शक्रस्य दयितां पुरीम् ॥ ७

तत्र देवविमानानि कामगानि सहस्रशः ।
स्थितान्यभिप्रयातानि ददर्शायुतशस्तदा ॥ ८

[2]संस्तूयमानो गन्धर्वैर् अप्सरोभिश्च पाण्डवः ।
पुष्पगन्धवहैः पुण्यैर् वायुभिश्चानुवीजितः ॥ ९

ततो देवास्सगन्धर्वास् सिद्धाश्च परमर्षयः ।
हृष्टास्सम्पूजयामासुः पार्थमक्लिष्टकारिणम् ॥ १०

1. अ—द्रष्टुं नानाहिताग्निना 2. ख-अर्धद्वयं नास्ति

आशीर्वादैस्स्तूयमानो दिव्यवादित्रनिःस्वनैः ।
प्रतिपेदे महाबाहुश् शङ्खदुन्दुभिनादितम् ॥ ११

नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतम् ।
इन्द्राज्ञया ययौ पार्थस् स्तूयमानस्समन्ततः ॥ १२

तत्र साध्यास्तथा विश्वे मरुतश्चाश्विनौ तथा ।
आदित्या वसवो रुद्रास् तथा ब्रह्मर्षयोऽमलाः ॥ १३

राजर्षयश्च तत्रासन् इक्ष्वाकुप्रमुखा नृपाः ।
तुम्बुरुर्नारदश्चैव गन्धर्वाश्च हहाहुहू ॥ १४

तान् स सर्वान् समागम्य विधिवत् कुरुनन्दनः ।
ततोऽपश्यद्देवराजं मध्ये नाकसतां नृप ॥ १५

ततः पार्थो महाबाहुर् अवतीर्य रथोत्तमात् ।
ददर्श साक्षाद्देवेशं पितरं पाकशासनम् ॥ १६

पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा ।
दिव्यगन्धाधिवासेन व्यजनेन च वीजितम् ॥ १७

विश्वावसुप्रभृतिभिर् गन्धर्वैस्स्तुतिवन्दनैः ।
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसंस्तवैः ॥ १८

ततोऽभिगम्य कौन्तेयश् शिरसा प्राणमद्बली ।
स चैनमनुवृत्ताभ्यां भुजाभ्यां प्रत्यगृह्णत ॥ १९

ततश्शक्रासने पुण्ये देवराजर्षिसेविते ।

शक्रः पाणौ गृहीत्वैनम् उपावेशयदन्तिके ॥ २०
मूर्ध्नि चैनमुपाघ्राय [1]परिरभ्य दृढं हरिः ।
अङ्कमारोपयामास प्रश्रयावनतं तदा ॥ २१

सहस्राक्षनियोगात् स पार्थश्शक्रासनं तदा ।
[2]अध्यरुक्षदमेयात्मा द्वितीय इव वासवः ॥ २२

ततः प्रेम्णा वृत्रशत्रुर् अर्जुनस्य शुभं मुखम् ।
पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन् ॥ २३

परिमार्जंश्च शनकैर् [3]बाहू चास्यायतौ शुभौ ।
ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ ॥ २४

वज्रग्रहणचिह्नेन करेण बलसूदनः ।
मुहुर्मुहुर्वज्रधरो बाहू संस्फालयञ्शनैः ॥ २५

स्मयन्निव गुडाकेशं प्रेक्षमाणस्सहस्रदृक् ।
विस्मयोत्फुल्लनयनो न ततर्प च वृत्रहा ॥ २६

एकासनोपविष्टौ तौ शोभयांचक्रतुस्सभाम् ।
सूर्याचन्द्रमसौ व्योम्नि पौर्णमास्यामिवोदितौ ॥ २७

तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना ।
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥ २८

---

1. क-ख—देवेन्द्रः परवीरहा
2. क-ख—आरुरुक्षुर
3. क—बहुज्याघातलाञ्छनौ। ख—बाहू ज्याघातलोहितौ।

घृताची मेनका रम्भा पूर्वचित्तिस्स्वयंप्रभा ।
उर्वशी मिश्रकेशी च डुण्डुर्भेरी वरूथिनी ॥ २९

गोपाली सहजन्या च कुम्भयोनिः प्रजागरा ।
चित्रसेना चित्रलेखा सहा च मधुरस्वना ॥ ३०

एताश्चान्याश्च ननृतुस् तत्र तत्र शुचिस्मिताः ।
[1]चित्तप्रमथनार्थाय पुंसां च विधिना कृताः ॥ ३१

महाकटितटश्रोण्यः कम्पमानैः पयोधरैः ।
कटाक्षभावमाधुर्यैश् चेतोबुद्धिमनोहराः ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३२ श्लोकाः]

---

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

उर्वश्यामर्जुनस्य दृष्टिविशेषेण तस्य तस्यामनुरागोत्प्रेक्षिणा शक्रेण चित्रसेनद्वारा तस्यास्तं प्रति प्रेषणम् ॥ १ ॥ तया स्वप्रार्थनां व्यर्थीकृतवते पार्थाय क्लीबो भवेति शापदानम् ॥ २ ॥ शक्रेण तच्छापस्य भाव्यज्ञातवासमात्रोपयोगितया व्यवस्थापनम् ॥ ३ ॥

---

वैशम्पायनः—

कदाचित् स हि देवेन्द्रश् चित्रसेनं रहोऽब्रवीत् ।
पार्थस्य तस्य विज्ञाय सक्तं चक्षुः प्रसङ्गतः ॥ १

---

1. क-ख—चित्तप्रमथने युक्तास् सिद्धानां पद्मलोचनाः । [पाठान्तरम्]

इन्द्रः—

गन्धर्वराजाद्य मया [1]प्रहिताऽप्सरसां वरा ।
उर्वशी पुरुषव्याघ्रं उपतिष्ठतु फल्गुनम् ॥ २

यथा च तामभिसृतां विद्यादस्मन्नियोगतः ।
तथा त्वया विधातव्यं स्त्रीसंसर्गविशारद ॥ ३

वैशम्पायनः—

एवमुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात् ।
गन्धर्वराजोऽप्सरसम् अभ्यगादुर्वशीं वराम् ॥ ४

तां दृष्ट्वा विदितो हृष्टस् स्वागतेनार्चितस्तया ।
सुखासीनां सुखासीनः स्मितपूर्वं वचोऽब्रवीत् ॥ ५

चित्रसेनः—

विदितं तेऽस्तु सुश्रोणि प्रेषितोऽहमुपागतः ।
त्रिदिवस्यैकराजेन त्वत्प्रसादाभिनन्दिना ॥ ६

यस्य देवमनुष्येषु प्रख्यातस्सहजैर्गुणैः ।
श्रिया शीलेन रूपेण श्रुतेन च बलेन च ॥ ७

प्रख्यातश्शौर्यवीर्याभ्यां सम्पन्नः प्रतिभानवान् ।
तेजस्वी सौम्यशीलश्च क्षमावाञ्जितमत्सरः ॥ ८

[2]साङ्गोपनिषदान् वेदान् गुरुशुश्रूषुरात्मवान् ।
योऽधीते चतुरस्सर्वान् मेधावी गुणवानिह ॥ ९

---

1. अ-क—प्रहिताऽप्सरसां वराम् 2. ख—नेदमर्धं मस्ति

ब्रह्मचर्येण दाक्ष्येण प्रसवैस्स्वधया च यः ।
एकश्च रक्षिता चैव त्रिदिवं मघवानिव ॥ १०

[1]अकत्थनो मानयिता स्थूललक्षः प्रियंवदः ।
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ॥ ११

[2]सत्यवागूर्जितो वक्ता रूपवाननहङ्कृतः ।
भक्तानुकम्पी कान्तश्च प्रियोऽद्य स्थिरसङ्गरः ॥ १२

प्रार्थनीयैर्गुणगणैर् महेन्द्रवरुणोपमः ।
विदितस्तेऽर्जुनो वीरस् स स्वर्गफलमाप्तवान् ॥ १३

तव शक्राभ्यनुज्ञातः पादावद्य प्रपद्यताम् ।
तदेवं कुरु कल्याणि प्रपन्नस्त्वां धनञ्जयः ॥ १४

वैशम्पायनः—

एवमुक्ता स्मितं कृत्वा सन्मानं बहुमान्य च ।
प्रत्युवाचोर्वशी प्रीता चित्रसेनमनिन्दिता ॥ १५

उर्वशी—

यस्तस्य कथितस्सत्यो गुणोद्देशस्त्वयाऽनघ ।
तं श्रुत्वाऽद्य प्रियं नारी घृणुयात् किमतोऽर्जुनम् ॥ १६

महेन्द्रस्य नियोगेन त्वत्तस्सम्प्रणयेन च ।
तस्य चाहं गुणौघेन फल्गुने जातमन्मथा ॥ १७

---

1. ख—इदमर्धं नास्ति	2. ख—अर्धद्वयं नास्ति

गच्छ त्वं हि यथाकामम् आगमिष्याम्यहं सखे ॥ १७॥

वैशम्पायनः—

ततो विसृज्य गन्धर्वं कृतकृत्या शुचिस्मिता ।
उर्वशी साऽकरोन्मानं पार्थप्रार्थनलालसा ॥ १८॥

स्नानालङ्कारनेपथ्यैर् गन्धमाल्यैश्च शोभनैः ।
धनञ्जयस्य रूपेण शक्रस्याभ्यर्थनेन च ॥ १९॥

वाक्यैश्च चित्रसेनस्य मन्मथेन च पीडिता ।
दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ॥ २०॥

[1]चित्तसङ्कल्पभावेन सुचित्ताऽनन्यमानसा ।
मनोरथेन सम्प्राप्तं रमयन्तीव फल्गुनम् ॥ २१॥

निशाम्य चन्द्रोदयनं विगाढे रजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं महत् ॥ २२॥

मृदुकुञ्चितदीर्घेण कुसुमोत्तमधारिणा ।
केशपाशेन ललना गच्छमाना व्यराजत ॥ २३॥

भ्रूक्षेपालापमाधुर्यैः कान्त्या सौम्यतयाऽपि च ।
शशिनं वक्त्रचन्द्रेण आह्वयन्तीव गच्छती ॥ २४॥

दिव्याङ्गरागौ रुचिरौ दिव्यचन्दनरूषितौ ।
गच्छन्त्या हारविकचौ स्तनौ तस्या ववल्गतुः ॥ २५॥

1. क-ख—नास्तीदमर्धम्

स्तनोद्वहनसंक्षोभात् ताम्यमाना पदे पदे ।
त्रिवलीदामचित्रेण मध्येनातीव शोभिता ॥ २६॥

रथकूबरविस्तीर्णं नितम्बोन्नतपीवरम् ।
मन्मथायतनं शुभ्रं रशनादामशोभितम् ॥ २७॥

ऋषीणामपि दिव्यानां मनोव्याघातकारणम् ।
सूक्ष्मवस्त्रधरं भाति जघनं चानवद्यया ॥ २८॥

[1]गूढगुल्फचरौ पादौ ताम्रायततलाङ्गुली ।
कूर्मपृष्ठोन्नतौ चास्याश् शोभेते किङ्किणीकिणौ ॥ २९॥

शीधुपानेन चाल्पेन तुष्टा च मदनेन च ।
विलासितैश्च विविधैः प्रेक्षणीयतराऽभवत् ॥ ३०॥

सिद्धचारणगन्धर्वैस् सा प्रैर्याति विलासिनी ॥ ३१

सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तन्वभ्रप्रावृता व्योम्नि चन्द्रलेखेव गच्छति ॥ ३२

ततः प्राप्ताऽतिदुष्प्रापा मनसाऽपि विकर्मभिः ।
भवनं पाण्डुपुत्रस्य फल्गुनस्य गुणाधिका ॥ ३३

तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता ।
अर्जुनस्य नरश्रेष्ठ उर्वशी परमाप्सराः ॥ ३४

तत्र चोत्थाय शयनाद् वासविर्वासवोपमः ।

---

1. क—गूढगुल्फसिरौ ; ख-घ—गूढगुल्फतरौ

अशङ्कितमना राजन् प्रत्यगच्छत तां निशि ॥ ३५

दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः ।
पादाभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥ ३६

अर्जुनः—

अभिवादये त्वां शिरसा प्रमदेऽप्सरसां वरे ।
किं चागमनकृत्यं ते ब्रूहि सर्वं यथातथम् ॥ ३७

वैशम्पायनः—

अकामं फल्गुनं ज्ञात्वा इङ्गितज्ञा तदोर्वशी ।
गन्धर्ववचनं सर्वं श्रावयामास फल्गुनम् ॥ ३८

उर्वशी—

यथा मे चित्रसेनेन कथितं मनुजोत्तम ।
तत्तेऽहं सम्प्रवक्ष्यामि यथा चाहमिहागता ॥ ३९

उपस्थाने महेन्द्रस्य वर्तमाने मनोरमे ।
त्वदागमनतुष्ट्या च स्वर्गस्य परमोत्सवे ॥ ४०

रुद्राणां चैव सान्निध्यम् आदित्यानां च सर्वशः ।
समागमेऽश्विनोश्चापि वसूनां च नरोत्तम ॥ ४१

महर्षीणां च सङ्घेषु राजर्षिप्रवरेषु च ।
सिद्धचारणयक्षेषु महोरगगणेषु च ॥ ४२

उपविष्टेषु हृष्टेषु स्थानमानप्रभावतः ।
ऋद्ध्या प्रज्वलमानेषु अग्नीषोमार्कवर्त्मसु ॥ ४३

वीणासु वाद्यमानासु गन्धर्वैश्शक्रनन्दन ।
दिव्ये मनोरमे गीते प्रवृत्ते पृथुलोचन ॥ ४४

सर्वाप्सरस्समस्थासु प्रवृत्तासु कुरूत्तम ।
त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ॥ ४५

तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसाम् ।
तव पित्राऽभ्यनुज्ञाता गतास्स्वनिलयान् सुराः ॥ ४६

तथैवाप्सरसस्सर्वा विसृष्टा निलयं गताः ।
अपि चान्याश्च शत्रुघ्न तव पित्रा विसर्जिताः ॥ ४७

ततश्शक्रेण सन्दिष्टश् चित्रसेनो ममान्तिकम् ।
प्राप्तः कमलपत्राक्ष स च मामब्रवीत् स्वयम् ॥ ४८

त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्णिनि ।
प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ॥ ४९

शक्रतुल्यं रणे शूरं रूपौदार्यगुणान्वितम् ।
पार्थं प्रार्थय सुश्रोणि त्वमित्येवं स माऽब्रवीत् ॥ ५०

ततोऽहं समनुज्ञाता तेन पित्रा च तेऽनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिन्दम ॥ ५१

न केवलं हि शक्रेण प्रेषिता चाहमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ॥ ५२

वैशम्पायनः—

तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जान्वितोऽर्जुनः ।

उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशोपमः ॥ ५३

अर्जुनः—

अश्रुतं मेऽस्तु सुभगे यन्मां वदसि भामिनि ।
गुरुदारैस्समाना हि निश्चयेन वरानने ॥ ५४

यच्चेष्टिताऽसि विस्पष्टं विशेषेण मया शुभे ।
तच्च मे कारणं सर्वं शृणु सत्येन सुस्मिते ॥ ५५

इयं पौरववंशस्य जननी सुदतीति ह ।
त्वामहं दृष्टवांस्तत्र विस्मयोत्फुल्ललोचनः ॥ ५६

न मामर्हसि कल्याणि अन्यथा गन्तुमङ्गने ।
गुरोर्गुरुतरी त्वं मे मम वंशविवर्धिनी ॥ ५७

उर्वशी—

अनावृता वयं सर्वा देववारा वराङ्गनाः ।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥ ५८

पितरस्सोदराः पुत्रा नप्तारो वा [1]मता इह ।
तपसा रमयन्त्यस्मान् न चास्त्येषां व्यतिक्रमः ॥ ५९

तत् प्रसीद न मामार्तां विसर्जयितुमर्हसि ।
हृच्छयेन सुसम्प्राप्तां भक्तां च भज माऽनघ ॥ ६०

अर्जुनः—

शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते ।

---

[1] क-ख—गता इह

शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥ ६१

यथा कुन्ती च माद्री च शची चैव समा इह ।
तथा स्ववंशजननी त्वं हि मेऽद्य गरीयसी ॥ ६२

गच्छ मूर्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि ।
त्वं हि मे मातृवत् पूज्या रक्ष्योऽहं पुत्रवत् त्वया ॥ ६३

वैशम्पायनः—

ततोऽवधूता पार्थेन उर्वशी क्रोधमूर्च्छिता ।
वेपन्ती भ्रुकुटीः कृत्वा शशापाथ धनञ्जयम् ॥ ६४

उर्वशी—

तव पित्राऽभ्यनुज्ञातां स्वयं च गृहमागताम् ।
यस्मान्मां नाभिनन्देथाः कामबाणवशं गताम् ॥ ६५

तस्मात्त्वं नर्तकः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुंस्त्वेन च विख्यातः षण्डवाद्विचरिष्यसि ॥ ६६

वैशम्पायनः—

एवं दत्त्वाऽर्जुने शापं स्फुरितोष्ठी श्वसन्त्यपि ।
पुनः प्रत्यागता शीघ्रम् उर्वशी स्वं निवेशनम् ॥ ६७

पार्थोऽपि लब्ध्वा शापं तं तां निशां दुःखितोऽवसत् ।
विवक्षुश्चित्रसेनाय प्रातस्सर्वमहृष्टवत् ॥ ६८

ततः प्रभाते विमले [1]गन्धर्वस्य यथातथम् ।

---

1. अ-क—गन्धर्वाय

निवेदयामास तदा चित्रसेनस्य फल्गुनः ॥ ६९

तच्च सर्वं यथावृत्तं शापं चैव यथातथम् ।
अवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ॥ ७०

तदा त्वानाय्य तनयं विविक्ते हरिवाहनः ।
सान्त्वयित्वा शुभैर्वाक्यैस् स्मयमानोऽभ्यभाषत ॥ ७१

इन्द्रः—

सुपुत्राद्य पृथा तात त्वया पुरुषसत्तम ।
ऋषयोऽपि हि धैर्येण जिता वै ते महाभुज ॥ ७२

यं च दत्तवती शापम् उर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ॥ ७३

अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ।
वर्षे त्रयोदशे वीर तत्र त्वं गमयिष्यसि ॥ ७४

तेन नर्तकवेषेण अपुंस्कत्वेन चैव हि ।
वर्षमेकं विहृत्यैव ततः पुंस्त्वमवाप्स्यसि ॥ ७५

वैशम्पायनः—

एवमुक्तस्तु शक्रेण फल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापमचिन्तयत् ॥ ७६

चित्रसेनेन सहितो गन्धर्वेण यशस्विना ।
रतवान् शक्रसदने पाण्डुपुत्रो धनञ्जयः ॥ ७७

य इमां शृणुयान्नित्यं धृतिं पाण्डुसुतस्य वै ।
न तस्य कामः कामेषु पापकेषु प्रवर्तते ॥ ७८

[1]धृतिममरवरात्मजस्य घोरां
[2]परमचलां च धनञ्जयस्य श्रुत्वा ।
व्यपगतभयदम्भरागदोषास्
त्रिदिवगता रमयन्ति मानवेन्द्राः ॥ ७९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ७९ श्लोकाः ]

---

## ॥ चत्वारिंशोऽध्यायः ॥

शक्रेण स्वर्गमागतं लोमशं प्रति पार्थमहिमानुवर्णनपूर्वकं युधिष्ठिराय तद्वृत्तान्तकथनप्रार्थना ॥

---

वैशम्पायनः—

ततो देवास्सगन्धर्वास् समादायार्घ्यमुत्तमम् ।
शक्रस्य मत[3]माज्ञाय पार्थमानर्चुरञ्जसा ॥ १

पाद्यमाचमनीयं च प्रति[4]गृह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरन्दरनिवेशनम् ॥ २

---

1. अ—इमा; क-व—इद. 2. अ-क-व—धृति
3. ख-व—मास्थाय 4. क-ख—ग्राह्य

एवं सम्पूजितो जिष्णुर् उवास भवने पितुः ।
उपशिक्षन् महास्त्राणि ससंहाराणि पाण्डवः ॥ ३

शक्रस्य हस्ताद्दयितं वज्रमस्त्रं दुरुत्सहम् ।
अशनिं च महानादां मेघबर्हणलक्षणाम् ॥ ४

गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन् सस्मार पाण्डवः ।
[1]पञ्चाब्दमवसत् तत्र पाकशासनशासनात् ॥ ५

ततश्शक्रोऽब्रवीत् पार्थं कृतास्त्रं काल आगते ।
नृत्तं गीतं च वाद्यं च चित्रसेनादवाप्नुहि ॥ ६

वादित्रं दैवविहितं त्रिलोके यन्न विद्यते ।
तदाज्ञाय च कौन्तेय श्रेयो वै ते भविष्यति ॥ ७

सखायं प्रददौ चास्य चित्रसेनं पुरन्दरः ।
स तेन सह सङ्गम्य रेमे पार्थो [2]धनञ्जयः ॥ ८

कदाचिदटमानस्तु महर्षिरथ लोमशः ।
जगाम शक्रभवनं पुरन्दरदिदृक्षया ॥ ९

स समेत्य नमस्कृत्य देवराजं महामुनिः ।
ददर्शार्धासनगतं पाण्डवं वासवस्य ह ॥ १०

ततश्शक्राभ्यनुज्ञात आसने चास्तृतोत्तरे ।

1. क-ख—पुरन्दरनियोगाच्च पञ्चाब्दमवसत् सुखी ।
2. क-ख—निरामयः

निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ॥　　११

तस्य दृष्ट्वाऽभवद्बुद्धिः पार्थमिन्द्रासने स्थितम् ।
कथं नु क्षत्रियः पार्थश् शक्रासनमवाप्तवान् ॥　　१२

किं तस्य सुकृतं कर्म लोका वा के विनिर्जिताः ।
य एवमुपसम्प्राप्तस् स्थानं देवनमस्कृतम् ॥　　१३

तस्य विज्ञाय सङ्कल्पं शक्रो वृत्रनिषूदनः ।
लोमशं प्रहसन् वाक्यम् इदमाह शचीपतिः ॥　　१४

इन्द्रः—

देवर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम् ।
नायं केवलमर्त्योऽभूत् क्षत्रियत्वमुपागतः ॥　　१५

महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुजः ।
अस्त्रहेतोरिह प्राप्तः कस्माच्चित् कारणान्तरात् ॥　　१६

अहो नैनं भवान् वेत्ति पुराणमृषिसत्तमम् ।
शृणु मे वदतो ब्रह्मन् योऽयं यच्चास्य कारणम् ॥　　१७

नरनारायणावेतौ पुराणावृषिसत्तमौ ।
ताविमावभिजानीहि हृषीकेशधनञ्जयौ ॥　　१८

स न शक्यस्सुरैर्द्रष्टुम् ऋषिभिर्वा महात्मभिः ।
तदाश्रमपदं पुण्यं बदरीनाम विश्रुतम् ॥　　१९

स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च ।

यतः प्रवधृते गङ्गा सिद्धचारणसेविता ॥ २०

तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती ।
भूमेर्भारावतरणं महावीर्यौ करिष्यतः ॥ २१

उद्धता ह्यसुराः केचिन्निवातकवचा इति ।
विप्रियेष्वास्थिताऽस्माकं वरदानेन मोहिताः ॥ २२

तर्कयन्ते सुरान् हन्तुं बलदर्पसमन्विताः ।
देवान्न गणयन्ते च तथा दत्तवरा हि ते ॥ २३

पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः ।
[1]तथा सर्वे निकाया हि नालं योधयितुं स्म तान् ॥ २४

योऽसौ भूमिगतश्श्रीमान् विष्णुर्मधुनिषूदनः ।
कपिलो नाम देवोऽसौ भगवानजितो हरिः ॥ २५

येन पूर्वं महात्मानः खनमाना रसातलम् ।
दर्शनादेव निहतास् सगरस्यात्मजा विभो ॥ २६

तेन कार्यं महत् कार्यम् अस्माकं हि द्विजोत्तम ।
पार्थेन च महायुद्धे समेताभ्यामसंशयम् ॥ २७

अयं तेषां समस्तानां शक्तः प्रतिनिवारणे ।
तान्निहत्य रणे शूरः पुनर्यास्यति मानुषम् ॥ २८

भवांश्चास्मन्नियोगेन यातु तावन्महीतलम् ।

---

1. क-ख—सर्वे देव

काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् ॥　　२९

स वाच्यो मम सन्देशाद् धर्मात्मा सत्यसङ्गरः ।
नोत्कण्ठा फल्गुने कार्या कृतास्त्रश्शीघ्रमेष्यति ॥　　३०

नाशुद्धबाहुवीर्येण नाकृतास्त्रेण वा रणे ।
भीष्मद्रोणादयश्शक्या युद्धे प्रतिसमासितुम् ॥　　३१

गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः ।
नृत्तवादित्रगीतानां दिव्यानां पारमीयिवान् ॥　　३२

भवानपि विविक्तानि तीर्थानि मनुजेश्वर ।
भ्रातृभिस्सहितस्सर्वैर् द्रष्टुमर्हत्यरिन्दम ॥　　३३

तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः ।
राज्यं भोक्ष्यसि धर्मेण सुखी विगतकल्मषः ॥　　३४

भवांश्चैनं द्विजश्रेष्ठ पर्यटन्तं महीतले ।
त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः ॥　　३५

गिरिदुर्गेषु च सदा देशेषु विषमेषु च ।
वसन्ति राक्षसा रौद्रास् तेभ्यो रक्षेत् सदा भवान् ॥　　३६

वैशम्पायनः—

तथेत्यथ प्रतिज्ञाय लोमशस्सुमहातपाः ।
काम्यकं वनमुद्दिश्य समुपायान्महीतलम् ॥　　३७

दर्दश तत्र कौन्तेयं धर्म[1]राजमरिन्दमम् ।
तापसैर्भ्रातृभिश्चैव सर्वतः परिवारितम् ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ३८ श्लोकाः]

---

## ॥ एकचत्वारिंशोऽध्यायः ॥

---

अर्जुनस्य पाशुपतास्त्रलाभस्वर्लोकगमनादिश्रवणेन परिखिद्यता धृत-राष्ट्रेण सञ्जयाग्रे स्वपुत्रान् प्रति परिशोचनम् ॥

---

जनमेजयः—

[2]अत्यद्भुतमिदं कर्म पार्थस्यामिततेजसः ।
धृतराष्ट्रो महाप्राज्ञश् श्रुत्वा तत्र किमब्रवीत् ॥ १

वैशम्पायनः—

पार्थं श्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
द्वैपायनादृषिश्रेष्ठात् सञ्जयं वाक्यमब्रवीत् ॥ २

धृतराष्ट्रः—

श्रुतं मे सूत कार्त्स्न्येन कर्म पार्थस्य धीमतः ।
कच्चित् तवापि विदितं याथातथ्येन सारथे ॥ ३

---

1. क-ख—राजं युधिष्ठिरम्  2. ख—अर्धद्वयं नास्ति

[1]प्रवृत्तो ग्राम्यधर्मेषु मन्दात्मा पापनिश्चयः ।
मम पुत्रस्सुदुर्बुद्धिः पृथिवीं घातयिष्यति ॥ ४

यस्य नित्यमृता वाचस् स्वैरेष्वपि महात्मनः ।
त्रैलोक्यमपि तस्य स्याद् योद्धा यस्य धनञ्जयः ॥ ५

अस्यतः कर्णिनाराचांस् तीक्ष्णाग्रांश्च शिलाशितान् ।
नार्जुनस्याग्रतस्तिष्ठेद् अपि मृत्यु[2]र्जरान्तगः ॥ ६

मम पुत्रा दुरात्मानस् सर्वे मृत्युवशं गताः ।
येषां युद्धं दुराधर्षैः पाण्डवैस्समुपस्थितम् ॥ ७

तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि य एनमुदियाद्युधि ॥ ८

द्रोणकर्णौ प्रतीयातां यदि भीष्मो[3]निवारणे ।
महान् स्यात् संशयो लोके न तु पश्यामि नो जयम् ॥ ९

घृणी कर्णः प्रमादी च आचार्यस्स्थविरो गुरुः ।
अमर्षी बलवान् पार्थस् संरम्भी दृढविक्रमः ॥ १०

भवेत् सुतुमुलं युद्धं सर्वस्याप्यपराजितम् ।
सर्वे ह्यस्त्रविदश्शूरास् सर्वे प्राप्ता महद्यशः ॥ ११

अपि सर्वेश्वरत्वं हि न वाञ्छेरन् पराजिताः ।

---

1. क-ख—प्रमत्तो    2. क—जराधिकः; घ—जरन्तिगः
3. क-ख—ऽपि वा रणे

वधे नूनं भवेच्छान्तिस् तेषां वा फल्गुनस्य वा ॥ १२

न तु हन्ताऽर्जुनस्यास्ति जेता वाऽस्य न विद्यते ।
मन्युस्तस्य कथं शाम्येन्मन्दान् प्रति समुत्थितः ॥ १३

त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत् ।
जिगाय पार्थिवान् सर्वान् राजसूये महाक्रतौ ॥ १४

शेषं कुर्याद्गिरिर्वज्रं निपतन् मूर्ध्नि सञ्जय ।
न तु कुर्युश्शराश्शेषं क्षिप्तास्तात किरीटिना ॥ १५

यथा हि किरणा भानोस् तपन्तीह चराचरम् ।
तथा पार्थकरोत्सृष्टाश् शरा[1]स्तप्स्यन्ति मत्सुतान् ॥ १६

अपि वा रथघोषेण भयार्ता सव्यसाचिनः ।
[2]प्रतिभाति विदीर्णेव सर्वतो भारती चमूः ॥ १७

समुद्धरन् प्रवपंश्चैव बाणान्
तथाऽऽततायी समरे किरीटी ।
सृष्टोऽन्तकस्सर्वहरो विधात्रा
भवेद्यथा तद्वदवारणीयः ॥ १८

सञ्जयः—

यदेतत् कथितं राजंस् त्वया दुर्योधनं प्रति ।
सर्वमेतद्यथावृत्तं न तु मिथ्या महीपते ॥ १९

---

1. अ—तप्यन्ति; ख—तप्स्यन्ति मेदिनीम्;
2. क—अर्धद्वयं नास्ति

मन्युनापि समाविष्टाः पाण्डवास्त्वमितौजसः ।
दृष्ट्वा नीतां सभां कृष्णां धर्मपत्नीं यशस्विनीम् ॥ २०

दुःशासनस्य ता वाचश् श्रुत्वा वै [1]दारुणोदयाः ।
कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः ॥ २१

श्रुतं हि ते महाराज यथा पार्थेन संयुगे ।
एकादशतनुस्स्थाणुर् धनुषा परितोषितः ॥ २२

कैरातं वेषमास्थाय योधयामास फल्गुनम् ।
जिज्ञासुस्सर्वदेवेशः कपर्दी भगवान् स्वयम् ॥ २३

लेभे पाशुपतं चापि परमास्त्रं महाद्युतिः ॥ २३॥

तत्रैनं लोकपालास्ते दर्शयामासुरर्जुनम् ।
अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् ॥ २४॥

[2]नैतदुत्पत्स्यतेऽन्यो हि लब्धुमन्यत्र फल्गुनात् ।
साक्षाद्दर्शनमेतेषाम् ईश्वराणां नरो भुवि ॥ २५॥

महेश्वरेण यो राजन्न जीर्णो ग्रस्तमूर्तिमान् ।
कस्तमुत्सहते वीरो युद्धे [3]न जयितुं पुमान् ॥ २६॥

आसादितमिदं घोरं तुमुलं रोमहर्षणम् ।
द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् ॥ २७॥

---

1. क-ख—कटुकोदमूः
2. क-ख—नैतदुत्सहते
3. क-ख—जरयितुं ; घ—जनयितुं

यत्र विस्फुरमाणौष्ठो भीमः प्राह वचो महत् ।
दृष्ट्वा दुर्योधनेनोरू द्रौपद्या दर्शितावुभौ ॥ २८॥

ऊरुं भेत्स्यामि ते पाप गदया वज्रकल्पया ।
त्रयोदशानां वर्षाणाम् अन्ते दुर्द्यूतदेविनः ॥ २९॥

सर्वे प्रहरतां श्रेष्ठास् सर्वे चामिततेजसः ।
सर्वास्त्र[1] निपुणास्सर्वे देवैरपि सुदुर्जयाः ॥ ३०॥

मन्ये मन्युसमुद्भूताः पुत्राणां तव संयुगे ।
अन्तं पार्थाः करिष्यन्ति वीर्यामर्षसमन्विताः ॥ ३१॥

धृतराष्ट्रः—

किं कृतं सूत कर्णेन वदता परुषं वचः ।
पर्याप्तं वैरमेतावद् यत् कृष्णा सा सभां गता ॥ ३२॥

अपीदानीं मम सुतास् तिष्ठेरन् मन्दचेतसः ।
येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ॥ ३३॥

ममापि वचनं सूत न शुश्रूषति मन्दभाक् ।
दृष्ट्वा मां चक्षुषा हीनं निर्विचेष्टमचेतसम् ॥ ३४॥

ये चास्य सचिवा मन्दाः कर्णसौबलकादयः ।
ते तस्य भूयसो दोषान् वर्धयन्ति विचेतसः ॥ ३५॥

स्वैरं मुक्ता ह्यपि शराः पार्थेनामिततेजसा ।

1. क-ख—विदुषस्सर्वे

निर्दहेयुर्मम सुतान् किम्पुनर्मन्युनेरिताः ॥ ३६॥

पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः ।
दिव्यास्त्रमन्त्रमुदितास् सादयेयुस्सुरानपि ॥ ३७॥

यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः ।
हरिस्त्रैलोक्यनाथस्स किंनु तस्य न निर्जितम् ॥ ३८॥

इदं च सुमहच्चित्रम् अर्जुनस्येह सञ्जय ।
महादेवेन बाहुभ्यां यत्समेत इति [1]श्रुतम् ॥ ३९॥

प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा ।
फल्गुनेन सहायार्थे वह्नेर्दामोदरेण च ॥ ४०॥

सर्वथा नास्ति मे पुत्रस् सहामात्यस्सबान्धवः ।
क्रुद्धे पार्थे च भीमे च वासुदेवे च सात्त्वते ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

## ॥ द्विचत्वारिंशोऽध्यायः ॥

वैशम्पायनेन जनमेजयं प्रति पाण्डवानां वने भोज्यवस्तुकथनम् ॥

जनमेजयः—

यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने ।
प्रव्राज्य पाण्डवान् वीरान् सर्वमेतन्निरर्थकम् ॥ १

1. क-ख—श्रुतिः

कथं हि राजा पुत्रं स्वम् उपेक्षेताल्पचेतसम् ।
दुर्योधनं पाण्डुपुत्रान् कोपयानं महारथान् ॥ २

किमासीत् पाण्डुपुत्राणां वने भोजन[1]मुच्यताम् ।
वन्यं वाऽप्यथवा कृष्टम् एतदाख्यातु [2]मे भवान् ॥ ३

वैशम्पायनः—
वानेयांश्च मृगांस्ते तु शुद्धैर्बाणैर्निपातितान् ।
ब्राह्मणानां [3]निवेद्याग्रे भुञ्जते ते महारथाः ॥ ४

तांस्तु शूरान् महेष्वासांस् तदा निवसतो वने ।
अन्वयुर्ब्राह्मणा राजन् साग्नयोऽनग्नयस्तथा ॥ ५

ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् ।
दश मोक्षविदां तद्वद् यान् बिभर्ति युधिष्ठिरः ॥ ६

रुरून् कृष्णमृगांश्चैव मेध्यांश्चान्यान् मनोरमान् ।
बाणैरुन्मथ्य विधिवद् ब्राह्मणेभ्यो न्यवेदयत् ॥ ७

न तत्र कश्चिद्दुर्वर्णो व्याधितो वाऽपि दृश्यते ।
कृशो वा दुर्बलो वाऽपि दीनो भीतोऽपि वा [4]नरः ॥ ८

न तत्राविनयः कश्चिद् अदृश्यत तदा द्विजः ॥ ८॥

पुत्रानिव प्रियान् ज्ञातीन् भ्रातॄनिव सहोदरान् ।

---

1. क-ख—मिच्छताम् 2. क-ख—मर्हसि
3. ख—निवेद्याग्रं भुञ्जते ते ; निवेद्याग्रमभुञ्जत
4. क-ख—पुनः

पुपोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ९॥

पतींश्च द्रौपदी सर्वान् द्विजातींश्च यशस्विनी ।
मातेव भोजयित्वाऽग्रे शिष्टमाहारयत् तदा ॥ १०॥

प्राचीं राजा दक्षिणां भीमसेनो
यमौ प्रतीचीमथवाऽप्युदीचीम् ।
धनुर्धरा मांसहेतोर्मृगाणां
क्षयं चक्रुर्नित्यमेवोपगम्य ॥ ११॥

तथा तेषां वसतां काम्यके वै
विहीनानामर्जुनेनोत्सुकानाम् ।
पञ्चैव वर्षाणि तदा व्यतीयुर्
अधीयतां जपतां जुह्वतां च ॥ १२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये १२॥ श्लोकाः]

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

धृतराष्ट्रेण सञ्जयाग्रे पाण्डवपराक्रमस्मरणेन पुत्रान् प्रति परिशोचनम् ॥ १ ॥ सञ्जयेन धृतराष्ट्रं प्रति स्वस्य चारमुखात् पाण्डवदिदृक्षया वनं गतानां कृष्णादीनां दुर्योधनादिवधप्रतिज्ञाश्रवणकथनम् ॥ २ ॥

वैशम्पायनः—

दीर्घमुष्णं विनिःश्वस्य धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत् सञ्जयं सूतम् आमन्त्र्य भरतर्षभ ॥ १

धृतराष्ट्रः—

देवपुत्रौ महाभागौ देवराजसमद्युती ।
नकुलस्सहदेवश्च पाण्डवौ युद्धदुर्मदौ ॥ २

दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ ।
शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ रथे स्थितौ ॥ ३

भीमार्जुनौ पुरोधाय यदा तौ रणमूर्धनि ।
स्थास्येते सिंहविक्रान्तावश्विनाविव दुस्सहौ ॥ ४
न शेषमनुपश्यामि मम सैन्यस्य सञ्जय ॥ ४॥

तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ।
द्रौपद्यास्तं परिक्लेशं न क्षंस्येतेऽत्यमर्षिणौ ॥ ५॥

धृष्णयोऽथ महेष्वासाः पाञ्चाला[1]श्चामितौजसः ।
युधि सत्याभिसन्धेन वासुदेवेन रक्षिताः ॥ ६॥

1. क-ख—वा महौजसः

प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ॥　　७

रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन ।
न शक्यस्सहितुं वीरः पर्वतैरपि दुस्सहः ॥　　८

तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः ।
शैक्यया वीरघातिन्या गदया विचरिष्यति ॥　　९

तथा गाण्डीवनिर्घोषं विष्फूर्जितमिवाशनेः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥　　१०

ततोऽहं सुहृदां वाचो दुर्योधनवशानुगः ।
स्मरणीयास्स्मरिष्यामि मया या न कृताः पुरा ॥　　११

सञ्जयः—

व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः ।
समर्थेनापि यन्मोहात् पुत्रस्ते न निवारितः ॥　　१२

श्रुत्वाऽयं निर्जितान् द्यूते पाण्डवान् मधुसूदनः ।
त्वरितः काम्यके पार्थान् समभावयदच्युतः ॥　　१३

द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः ।
विराटो धृष्टकेतुश्च केकयाश्च महारथाः ॥　　१४

तैश्च यत्कथितं दृष्ट्वा तत्र पार्थांस्तथागतान् ।
[1]चारेण विदितं सर्वं तन्मया वेदितं च ते ॥　　१५

---

1. ख—कृष्णाजिनोत्तरासङ्गान् पाण्डवान् पृथुलोचनान् । [अधिकः पाठः]

समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः ।
सारथ्ये फल्गुनस्याजौ तथेत्याह च तान् हरिः ॥ १६

[1]अमर्षी सह कृष्णोऽपि दृष्ट्वा पार्थांस्तदा गतान् ।
कृष्णाजिनोत्तरासङ्गान् अब्रवीच्च युधिष्ठिरम् ॥ १७

श्रीभगवान्—

या सा समृद्धिः पार्थानाम् इन्द्रप्रस्थे बभूव ह ।
राजसूये मया दृष्टा नृपैरन्यैस्सुदुर्लभा ॥ १८

यत्र सर्वान् महीपालाञ् शस्त्रतेजोभयार्दितान् ।
[2]कलिङ्गाङ्गमरून् पौण्ड्रान् सचोलद्रमिलान्ध्रकान् ॥ १९

सागरानूपकांश्चैव ये च पत्तनवासिनः ।
सिंहलान् बर्बरान् म्लेच्छान् ये च जाङ्गलवासिनः ॥ २०

पश्चिमानि च राज्यानि शतशस्सागरान्तिकान् ।
पप्लवान् दरदान् सर्वान् किरातान् यवनाञ्शकान् ॥ २१

हारहूणांश्च चीरांश्च तुषारान् सैन्धवांस्तथा ।
[3]वङ्गांश्च मगधान् पुण्ड्रान् स्त्रीराज्यानथ तङ्कणान् ॥ २२

एते चान्ये च बहवो ये च ते भरतर्षभ ।
[4]आगतानहमद्राक्षं यज्ञे ते परिवेषकात् ॥ २३

---

1. ख—अमर्षी स च कृष्णोऽपि चाब्रवीत्तं युधिष्ठिरम्। [मध्ये अर्धं नास्ति]
2. क—सवङ्गाङ्ग; ख—सवङ्गाङ्गवरान् पौण्ड्रान्
3. ख—इदमर्धं नास्ति
4. अ-घ—अर्धपञ्चकं नास्ति

सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ।
आदत्त्वा जीवितं तेषाम् आहरिष्यामि तामहम् ॥ २४

रामेण सह कौरव्य भीमार्जुनयमैस्तथा ।
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च ॥ २५

धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ।
दुर्योधनं रणे हत्वा सद्यः कर्णं च भारत ॥ २६

दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यति ॥ २६॥

ततस्त्वं हास्तिनपुरे भ्रातृभिस्सहितो वसन् ।
धार्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमाम् ॥ २७॥

युधिष्ठिरः—

अथैनमब्रवीद्राजा तस्मिन् वीरसमागमे ।
शृण्वत्सु तेषु सर्वेषु धृष्टद्युम्नमुखेषु च ॥ २८॥

[1]अभिगृह्णामि ते वाचं सत्यामभिहितो ह्यसि ।
अमित्रान् मे महाबाहो सानुबन्धान् हनिष्यसि ॥ २९॥

वर्षात् त्रयोदशादूर्ध्वं सत्यं मां कुरु केशव ।
प्रतिज्ञातो वने वासो राज्ञां मध्ये मया च तत् ॥ ३०॥

सञ्जयः—

धर्मराजस्य वचनं श्रुत्वा सत्यं सभासदः ।
धृष्टद्युम्नपुरोगास्ते शमयामासुरञ्जसा ॥ ३१॥

---

1. क-ख—प्रति

केशवं मधुरैर्वाक्यैः काल[1]युक्तममर्षितम् ।
[2]पाञ्चालीं [3]चाह्वयामास वासुदेवस्तु शृण्वताम् ॥ ३२॥

श्रीभगवान्—
दुर्योधनस्तव क्रोधाद् देवि त्यक्ष्यति जीवितम् ।
प्रतिजानामि ते सत्यं मा शुचो वरवर्णिनि ॥ ३३॥

ये स्म ते कुरवः कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा ।
मांसानि तेषां खादन्तो हरिष्यन्ति मृगद्विजाः ॥ ३४॥

पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा ।
उत्तमाङ्गानि कर्षन्तो यैस्त्वं नीता सभां पुरा ॥ ३५॥

तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले ।
क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् ॥ ३६॥

परिक्लिष्टाऽसि यैस्तत्र यैश्चासि समुपेक्षिता ।
तेषा[4]मुत्कृष्टशिरसां भूमिः पास्यति शोणितम् ॥ ३७॥

सञ्जयः—
एवं बहुविधा वाचस् तदोचुः पुरुषर्षभाः ।
सर्वे तेजस्विनश्शूरास् सर्वे चाहितलक्षणाः ॥ ३८॥

ते धर्मराजेन वृता वर्षादूर्ध्वं त्रयोदशात् ।
पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ॥ ३९॥

---

1. क-ख—युक्तैरमर्षितम्
2. ख—इत्यारण्यपर्वणि सप्तचत्वारिंशोऽध्यायः ।
 वैशम्पायनः—
 ततस्सर्वे महात्मानो राजानस्सत्यविक्रमाः । [अधिकः पाठः]
3. क-ख—चाहुरक्लिष्टां + वासुदेवस्य शृण्वतः ।
4. क-ख—मुत्कृत्त

रामश्च कृष्णश्च धनञ्जयश्च
प्रद्युम्नसाम्बौ युयुधानभीमौ ।
माद्रीसुतौ केकयराजपुत्राः
पाञ्चालपुत्रास्सह मद्रराज्ञा ॥ ४०॥

एतान् सर्वाँल्लोकधीरानजेयान्
महात्मनस्सानुबन्धान् ससैन्यान् ।
को जीवितार्थी समरे[1]ऽभ्युदीयात्
क्रुद्धान् सिंहान् केसरिणो यथैव ॥ ४१॥

धृतराष्ट्रः—
यन्माऽब्रवीद्विदुरो द्यूतकाले
त्वं पाण्डवाञ्जेष्यसि चेन्नरेन्द्र ।
ध्रुवं कुरूणामयमन्तकालो
महाभयो भविता शोणितौघः ॥ ४२॥

मन्ये तथा तद्भवितेति सूत
यथा क्षत्ता प्राह वचः पुरा माम् ।
असंशयं भविता युद्धमेतद्
गते काले पाण्डवानां यथोक्तम् ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिचत्वारिंशोऽध्यायः ॥४३॥
॥ ३२ ॥ इन्द्रलोकाभिगमनपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

[ इन्द्रलोकाभिगमनपर्व समाप्तम् ]

---

1. ख-घ—प्रत्युदीयात्

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

(तीर्थयात्रापर्व)

भीमयुधिष्ठिरसंवादसमये बृहदश्वागमनम् ॥ १ ॥ युधिष्ठिरं प्रति बृहदश्वेन नलोपाख्यानकथनम् ॥ २ ॥

---

जनमेजयः—

[1]अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
युधिष्ठिरप्रभृतयः किमकुर्वत पाण्डवाः ॥ १

वैशम्पायनः—

अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
न्यवसन् कृष्णया सार्धं काम्यके पुरुषर्षभाः ॥ २

ततः कदाचिदेकान्ते विविक्ते मृदुशाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुस्सह कृष्णया ॥ ३

धनञ्जयं शोचमानास् सास्रनेत्रास्सुदुःखिताः ।
तद्वियोगार्दितान् सर्वाञ् शोकस्समभिपुप्लुवे ॥ ४

धनञ्जयवियोगाच्च राज्यनाशाच्च दुखिताः ।
अथ भीमो महाबाहुर् युधिष्ठिरमभाषत ॥ ५

भीमसेनः—

निदेशात्ते महाराज गतोऽसौ पुरुषर्षभः ।

---

1. अ—अर्धद्वयं नास्ति

अर्जुनः पाण्डुपुत्राणां यस्मिन् प्राणाः प्रतिष्ठिताः ॥ ६
यस्मिन् विनष्टे पाञ्चालास् सह पुत्रैस्तथा वयम् ।
सात्यकिर्वासुदेवोऽपि विनश्येयुरसंशयः ॥ ७
योऽसौ गच्छति तेजस्वी बहून् क्लेशान् विचिन्तयन् ।
भवन्नियोगाद्बीभत्सुस् ततो दुःखतरं नु किम् ॥ ८
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान् प्राप्तां च मेदिनीम् ॥ ९
यस्य प्रभावाद्धि वयं सभामध्ये धनुष्मतः ।
हतान् मन्यामहे सर्वान् धार्तराष्ट्रान् ससौबलान् ॥ १०
यस्य प्रभावान्न मया सभामध्ये महाबलाः ।
नीता लोकममुं सर्वे धार्तराष्ट्रास्ससौबलाः ॥ ११
ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ १२
वयं हि सह कृष्णेन हत्वा कर्णमुखान् परान् ।
स्वबाहुविजितां कृत्स्नां [1]प्रशासेम वसुंधराम् ॥ १३
भवतो द्यूतदोषेण सर्वे वयमुपप्लुताः ।
अहीनपौरुषा राजन् बलिभिर्बलवत्तमाः ॥ १४
क्षात्रं धर्मं महाराज समवेक्षितुमर्हसि ।

1. अ-क—प्रशाधीमा

न हि धर्मो महाराज क्षत्रियस्य वनाश्रयः ॥ १५
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ।
स क्षात्रधर्मविद्राजन् मा [1]धर्मार्थी व्यनीनशः ॥ १६
प्राग्द्वादश समा राजन् धार्तराष्ट्रान्निहन्महि ।
निवर्त्य च वनात् पार्थम् आनाय्य च जनार्दनम् ॥ १७
व्यूढानीका महाराज जवेनैव महाहवे ।
धार्तराष्ट्रानमुं लोकं गमयाम विशांपते ॥ १८
[2]सर्वानहं हनिष्यामि धार्तराष्ट्रान् ससौबलान् ।
दुर्योधनं च कर्णं च यो वाऽन्यः प्रतियोत्स्यते ॥ १९
मया प्रशासिते पश्चात् त्वमेष्यसि वनात्ततः ।
एवं कृते न ते दोषो भविष्यति विशांपते ॥ २०
यज्ञैश्च विविधैस्तात कृतं पापमरिन्दम ।
अवधूय महाराज गच्छेम स्वर्गमुत्तमम् ॥ २१
एवमेतद्भवेद्राजन् यदि राजा न बालिशः ।
अस्माकं दीर्घसूत्रस्स्याद् भवान् धर्मपरायणः ॥ २२
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चितम् ।
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते ॥ २३
तथा भारतधर्मेषु धर्मज्ञैरिह दृश्यते ।

---

1. क-ख—धर्माद्विनशः पथः    2. ख—अर्धचतुष्टयं नास्ति

अहोरात्रं महाराज तुल्यं संवत्सरेण हि ॥ २४

तथैव वेदवचनं दृश्यते नित्यदा विभो ।

संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः ॥ २५

यदि वेदाः प्रमाणं ते दिवसादूर्ध्व[1]मच्युत ।

त्रयोदशादितः कालो ज्ञायतां परिनिष्ठितः ॥ २६

कालो दुर्योधनं हन्तुं सानुबन्धमरिन्दम ।

एकाग्रां पृथिवीं कृत्स्नां पुरा राजन् करोति सः ॥ २७

वैशम्पायनः—

एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः ।

उवाच सान्त्वयन् राजा मूर्ध्न्युपाघ्राय पाण्डवम् ॥ २८

युधिष्ठिरः—

असंशयं महाबाहो हनिष्यसि सुयोधनम् ।

वर्षात् त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना ॥ २९

यत्त्वमाभाषसे पार्थ प्राप्तः काल इति प्रभो ।

अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ ३०

अन्तरेणापि कौन्तेयं [2]निकृतं पापनिश्चयम् ।

हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम् ॥ ३१

वैशम्पायनः—

एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे ।

---

1. अ-घ—मुच्यते	2 क-ख—निकृतिं

आजगाम महाभागो बृहदश्वो महानृषिः ॥ ३२

तमभिप्रेक्ष्य धर्मात्मा सम्प्राप्तं धर्मचारिणम् ।
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ॥ ३३

आश्वस्तं चैवमासीनम् उपासीनो युधिष्ठिरः ।
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ३४

युधिष्ठिरः—

अक्षद्यूतेन भगवन् धनं राज्यं च मे हृतम् ।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ३५

अनक्षज्ञस्य हि [1]ततो निकृत्या पापनिश्चयैः ।
भार्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी ॥ ३६

पुनर्द्यूतेन मां जित्वा वनवासं सुदारुणम् ।
प्राव्राजयन् महारण्यम् अजिनैः परिवारितम् ॥ ३७

सोऽहं वने दुर्वसतिं [2]वसन् परमदुःखितः ।
अक्षद्यूतानुषङ्गेण गिरश्शृण्वन् सुदारुणाः ॥ ३८

सम्प्राप्तानां च सुहृदां शृण्वन् सत्याभिसंश्रिताः ।
द्यूतात् प्रभृति धर्मज्ञ रात्रीस्सर्वा विचिन्तयन् ॥ ३९

यस्मिंश्च वयमायत्तास् सदा गाण्डीवधन्वनि ।
महात्मना तेन विना गतसत्त्वा इवास्महे ॥ ४०

---

1. क-ख—सतो 2. क-ख-घ—शये

कदा द्रक्ष्याम बीभत्सुं कृतास्त्रं पुनरागतम् ।
इति सर्वे महेष्वासं चिन्तयाना धनञ्जयम् ॥　　४१

अनेन तु विषण्णोऽहं कारणेन सहानुजः ।　　४१॥

वनवासान्निवृत्तं मां पुनस्ते पापबुद्धयः ।
जानन्तः प्रीयमाणा वै देवने भ्रातृभिस्सह ॥　　४२॥

द्यूतेनैवाह्वयिष्यन्ति बलादक्षेपु तद्विदः ॥　　४३

आहूतश्च पुनर्द्यूते नास्मि शक्तो निवर्तितुम् ।
पणे च मम नात्यर्थं विद्यते वसु किञ्चन ॥　　४४

एतत् सर्वमनुध्यायंश् चिन्तयामि दिवानिशम् ।
न मत्तो दुःखिततरः पुमानस्तीह कश्चन ॥　　४५

नास्ति राजा मया कश्चिद् अल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा भवेत् ॥　　४६

[1]न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥　　४६॥

एवं ब्रुवन्तं राजानम् उवाच भगवानृषिः ।
शोकं व्यपनुदन् राज्ञो धर्मराजस्य धीमतः ॥　　४७॥

बृहदश्वः—

न विषादे मनः कार्यं त्वया बुद्धिमतां वर ।
आगमिष्यति बीभत्सुर् अमित्रांश्च विजेष्यति ॥　　४८॥

1. ख—इदमर्धं नास्ति

यद्ब्रवीषि महाराज न मत्तो विद्यते क्वचित् ।
अल्पभाग्यतरः कश्चित् पुमानस्तीति पाण्डव ॥ ४९॥

अत्र ते कथयिष्यामि यदि शुश्रूषसे नृप ।
यस्त्वत्तो दुःखिततरो राजाऽऽसीत् पृथिवीपते ॥ ५०॥

वैशम्पायनः—

[1]अथैनमब्रवीद्राजा ब्रवीतु भगवानिति ।
इमामवस्थां सम्प्राप्तं श्रोतुमिच्छामि पार्थिवम् ॥ ५१॥

बृहदश्वः—

शृणु राजन्नवहितस् सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजाऽऽसीत् पृथिवीपते ॥ ५२॥

निषधेषु महीपालो वीरसेन इति स्म ह ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थदर्शिवान् ॥ ५३॥

स निकृत्या जितो राजा पुष्करेणेति नश्श्रुतम् ।
वनवासमदुःखार्हो भार्यया न्यवसत् सह ॥ ५४॥

न तस्य दासा न रथो न भ्राता न च बान्धवाः ।
वने निवसतो राजन्नश्रूयन्त कदाचन ॥ ५५॥

भवान् हि संवृतो वीरैर् भ्रातृभिर्देवसम्मितैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मा[2]न्नार्हति शोचितुम् ॥ ५६॥

1. अ-घ—अर्धचतुष्टयं नास्ति
2. ख-घ—न्नार्हसि

युधिष्ठिरः—

[1]विस्तरेणाहमिच्छामि नलस्य च महात्मनः ।
चरितं वदतां श्रेष्ठ तदाख्यातुमिहार्हसि ॥ ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये ५७॥ श्लोकाः ]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥*

दमयन्त्यां समुत्कण्ठितेन नलेन वने विहरत्सु हंसेष्वेकतमस्य ग्रहणम् ॥ १ ॥ प्रतिक्रियाप्रतिज्ञानेन आत्मानं मोचितवता हंसेन नलगुणानुवर्णनेन दमयन्त्या नले रागोत्पादनम् ॥ २ ॥

---

बृहदश्वः—

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ १

यज्वा दानपतिर्दक्षस् सदा शीलपुरस्कृतः ।
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ॥ २
उपर्युपरि सर्वेषाम् आदित्या इव तेजसा ॥ २॥

---

1. ख—इदमर्धद्वयं न

* पञ्चचत्वारिंशादध्यायादारभ्य त्रिषष्टितमाध्यायान्तं ख—कोशो नोपलभ्यते

ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियस्सत्यवादी महानक्षौहिणीपतिः ॥ ३॥

ईप्सितो वरनारीणाम् उदारस्संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठस् साक्षादिव मनुस्स्वयम् ॥ ४॥

तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरस्सर्वगुणोपेतः प्रजाकामस्स चाप्रजाः ॥ ५॥

स प्रजार्थे परं यत्नम् अकरोत् सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर् दमनो नाम [1]नामतः ॥ ६॥

तं स भीमः प्रजाकामस् तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥ ७॥

तस्मै प्रसन्नो दमनस् सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान् महायशाः ॥ ८॥

दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान् गुणैस्सर्वैर् भीमान् भीमपराक्रमान् ॥ ९॥

दमयन्ती तु रूपेण तेजसा वपुषा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ १०॥

अथ तां वयसि प्राप्ते दासीनां समलङ्कृतम् ।
शतं सखीनां च तथा पर्युपास्ते शचीमिव ॥ ११॥

---

1. क-घ—भारत

ततस्सा भ्राजते ताभिस् सर्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामनी यथा ॥ १२॥

अतीव रूपसम्पन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ॥ १३॥

मानुषेष्वपि नैवान्या दृष्टपूर्वा श्रुताऽपि वा ।
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी ॥ १४॥

नलश्च राजशार्दूलो रूपेणाप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत् स्वयम् ॥ १५॥

तस्यास्समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनःपुनः ॥ १६॥

तयोरदृष्टः कामोऽभूच् छृण्वतोस्सततं गुणान्।
अन्योन्यं प्रति कौन्तेय सोऽभ्यवर्धत हृच्छयः ॥ १७॥

अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।
अन्तःपुरसमीपस्थो वन आस्ते रहोगतः ॥ १८॥

स ददर्श तदा हंसाञ् जातरूपपरिच्छदान् ।
वने विचरतां तेषाम् एकं जग्राह पक्षिणम् ॥ १९॥
ततोऽन्तरिक्षगो वाचं व्याजहार तदा नलम् ॥ २०

न हन्तव्योऽस्मि ते राजन् करिष्यामि तव प्रियम् ।
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ॥ २१

यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ।
तव चैव यथा भार्या भविष्यति तथाऽनघ ॥ २२

विधास्यामि नरव्याघ्र सोऽनुजानातु मां भवान् ॥ २२॥

एवमुक्तस्ततो हंसम् उत्ससर्ज महीपतिः ॥ २३

ते तु हंसास्समुत्पत्य विदर्भानगमंस्ततः ॥ २३॥

विदर्भनगरीं गत्वा दमयन्त्यास्तदाऽन्तिके ।
निपेतुस्ते गरुत्मन्तस् सा ददर्शाथ तान् खगान् ॥ २४॥

सा तानद्भुतरूपान् वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस् त्वरमाणोपचक्रमे ॥ २५॥

अथ हंसा विससृपुस् सर्वतः प्रमदावने ।
एकैकशस्तदा कन्यास् तान् हंसान् समुपाद्रवन् ॥ २६॥

दमयन्ती तु यं हंसं समुपाधावदन्तिकम् ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ २७॥

हंसः—

दमयन्ति नलो नाम निषधेषु महीपतिः ।
अश्विनोस्सदृशो रूपे न समोऽस्त्यस्य मानुषः ॥ २८॥

तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ २९॥

वयं हि देवगन्धर्वमनुष्योरगराक्षसान् ।

दृष्टवन्तो न चास्माभिर् दृष्टपूर्वस्तथाविधः ॥ ३०॥
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन सङ्गमो गुणवान् भवेत् ॥ ३१॥

बृहदश्वः—
एवमुक्ता तु हंसेन दमयन्ती विशांपते ।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नलं वद ॥ ३२॥
तथेत्युक्त्वा [1]ततः कन्यां विदर्भस्य विशांपतेः ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ षट्चत्वारिंशोऽध्यायः ॥

नारदेनेन्द्रादीन् प्रति दमयन्तीगुणानुवर्णनपूर्वकं तत्स्वयंवरप्रवृत्तिकथनम् ॥ १ ॥ तत्स्वयंवरार्थमागच्छद्भिरिन्द्रादिभिः पथि दृष्टस्य नलस्य दमयन्तीघटनायां दूतत्वेन वरणम् ॥ २ ॥ नलेन दमयन्त्यामिन्द्रादिनिदेशनिवेदनम् ॥ ३ ॥

बृहदश्वः—
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ।
तदा प्रभृति न स्वस्था नलं प्रति बभूव सा ॥ १

---
1. क—ऽण्डजः

ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥ २
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ॥ ३
न नक्तं न दिवा शेते हाहेति वदती मुहुः ॥ ३॥
तामस्वस्थां तदाकारां सख्यस्ता [1]जग्मुरिङ्गितैः ॥ ४
ततो विदर्भपतये दमयन्त्यास्सखीगणः ।
न्यवेदयत चास्वस्थां दमयन्तीं नरेश्वर ॥ ५
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ।
चिन्तयामास तत् कार्यं सुमहत् स्वां सुतां प्रति ॥ ६
किमस्मद् दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते ॥ ६॥
स समीक्ष्य महीपालस् स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मनः कार्यं दमयन्त्यास्स्वयंवरम् ॥ ७॥
स सन्निपातयामास महीपालान् विशांपते ।
एषोऽनुभूयतां वीरास् स्वंयवर इति प्रभो ॥ ८॥
श्रुत्वा तु पार्थिवास्सर्वे दमयन्त्यास्स्वयंवरम् ।
अभिजग्मुस्तदा वीरा राजानो भीमशासनात् ॥ ९॥
हस्त्यश्वरथघोषेण नादयन्तो वसुन्धराम् ।

1. क—जज्ञिरेङ्गितैः

विचित्रमाल्याभरणैर् ध्वजैश्चित्रैस्स्वलङ्कृतैः ॥ १०॥

एतस्मिन्नेव काले तु पुराणावृषिसत्तमौ ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ॥ ११॥

नारदः पर्वतश्चैव महाप्राज्ञौ महा[1]व्रतौ ।
देवराजस्य भवनं विविशाते सुपूजितौ ॥ १२॥

तावर्चयित्वा मघवा ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोस्सर्वगतं विभुः ॥ १३॥

नारदः—

आवयोः कुशलं देव सर्वत्रगतमीश्वर ।
लोके च भगवन् कृत्स्ना नृपाः कुशलिनो विभो ॥ १४॥

बृहदश्वः—

नारदस्य वचश्श्रुत्वा पप्रच्छ बलवृत्रहा ॥ १५

इन्द्रः—

धर्मज्ञाः पृथिवीपालास् त्यक्तजीवितयोधिनः ।
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ॥ १६
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् ॥ १६॥

क नु ते क्षत्रियाश्शूरा न हि पश्यामि तानहम् ।
आगच्छतो महीपालान् अतिथीन् दयितान् मम ॥ १७॥

---

1. क-घ—द्युती

बृहदश्वः—

एवमुक्तस्तु शक्रेण नारदः [1]प्रत्युवाच ह ॥ १८

नारदः—

भगवञ् शृणु मे येन न दृश्यन्ते महीक्षितः ॥ १८॥

विदर्भराजतनया दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ १९॥

तस्यास्स्वयंवरश्शक्र भविता न चिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २०॥

तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन ॥ २१॥

बृहदश्वः—

एतेषु कथ्यमानेषु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २२॥

ततस्ते शुश्रुवुस्सर्वे नारदस्य वचो महत् ।
श्रुत्वा चैवाब्रुवन् सर्वे गच्छाम वयमप्युत ॥ २३॥

ततस्सर्वे महाराज सगणास्सहवाहनाः ।
विदर्भानभितो जग्मुर् यथा सर्वे महीक्षितः ॥ २४॥

नलोऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छदमेयात्मा दमयन्तीमनुव्रतः ॥ २५॥

---

1. क-ख—प्रत्यभाषत

अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसम्पदा ॥　　२६॥

तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसङ्कल्पा विस्मिता रूपसम्पदा ॥　　२७॥

ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्स्थलात् ॥　　२८॥

देवाः—

भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान् ।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥*　　२९॥

बृहदश्वः—

तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
अथैतान् परिपप्रच्छ कृताञ्जलिरुपास्थितः ॥　　३०॥

नलः—

के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ।
किञ्च तत्र मया कार्यं कथयध्वं यथातथम् ॥　　३१॥

बृहदश्वः—

एवमुक्तो नैषधेन [1]भगवानभ्यभाषत ॥　　३२

इन्द्रः—

अमरान् वै निबोधास्मान् दमयन्त्यर्थमागतान् ॥　　३२॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क—मघवान् प्रत्यभाषत

अहमिन्द्रोऽयमग्निश्च तथैवायमपाम्पतिः ।
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ३३॥

स वै त्वमागतानस्मान् दमयन्त्यै निवेदय ॥ ३४

लोकपालास्सहेन्द्रास्त्वां दमयन्ति दिदृक्षवः ।
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः ॥ ३५
तेषामन्यतमं देवं पतित्वे वरयेति ह ॥ ३५॥

बृहदश्वः—

एवमुक्तस्स शक्रेण नलः प्राञ्जलिरब्रवीत् ॥ ३६

नलः—

एकार्थसमवेतं मां न प्रेषयितुमर्हथ ॥ ३६॥

कथं हि जातसङ्कल्पस् स्त्रियमुत्सहते नरः ।
परार्थमीदृशं वक्तुं तद्वै पश्यामरेश्वर ॥ ३७॥

बृहदश्वः—

एवमुक्तो नैषधेन भगवान् पुनरब्रवीत् ॥ ३८

इन्द्रः—

करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध मा चिरम् ॥ ३९

स वै त्वमागतानस्मान् दमयन्त्यै निवेदय ।
श्रेयसा योक्ष्यसे हि त्वं कुर्वन्नमरशासनम् ॥ ४०

बृहदश्वः—

एवमुक्तस्स देवैस्तैर् नैषधः पुनरब्रवीत् ॥ ४०॥

नलः—

सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ ४१

बृहदश्वः—

प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत ।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ ४२

ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ ४३

अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव च तां शशिनं स्वेन तेजसा ॥ ४४

तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस्तु [1]वारयामास हृच्छयम् ॥ ४५

ततस्ता नैषधं दृष्ट्वा सम्भ्रान्ताः परमाङ्गनाः ।
आसनेभ्यस्समुत्पेतुस् तेजसा तस्य धर्षिताः ॥ ४६

प्रशशंसुश्च सुप्रीता नलं तं विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यचिन्तयन् ॥ ४७

अहो रूपमहो धैर्यम् अहो कान्तिर्महात्मनः ।

---

1. क—धार

कोऽयं देवोऽथवा यक्षो गन्धर्वो नु भविष्यति ॥ ४८

न त्वेव शक्नुवन्ति स्म व्याहर्तुमपि किञ्चन ।
तेजसा धर्षितास्सर्वा लज्जावत्यो वराङ्गनाः ॥ ४९

अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरम् अभ्यभाषत विस्मिता ॥ ५०

दमयन्ती—

कस्त्वं सर्वानवद्याङ्ग मम [1]हर्षविवर्धन ।
प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामहेऽनघ ॥ ५१

कथमागमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं च मे वेश्म राजा चैवोग्रशासनः ॥ ५२

बृहदश्वः—

एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्यभाषत ॥ ५२॥

नलः—

नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥ ५३

देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ॥ ५४

तेषामेव प्रभावेण प्रविष्टोऽहमलक्षितः ।
प्रविशन्तं हि मां कश्चिन् नापश्यन्नाप्यवारयत् ॥ ५५

---

1. क—हृच्छय

एतदर्थमहं भद्रे प्रेषितस्सुरसत्तमैः ।
एतच्छ्रुत्वा तु मे वाक्यं प्रकुरुष्व यथेप्सितम् ॥　५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ५६ श्लोकाः ]

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

नलदमयन्तीसंवादः ॥ १ ॥ नलेनेन्द्रादीन् प्रति दमयन्तीवचननिवेदनम् ॥ २ ॥

बृहदश्वः—

सा नमस्कृत्य देवेभ्यः प्रहसन्तीदमब्रवीत् ॥　॥

दमयन्ती—

प्रणयस्व यथाश्रद्धं राजन् किं करवाणि ते ॥　१

अहं चैव हि यच्चान्यन्ममास्ति वसु किञ्चन ।
सर्वं तत् तव विस्रब्धं कुरु प्रणयमीश्वर ॥　२

हंसानां वचनं यत्तत् तन्मां दहति पार्थिव ।
त्वत्कृते हि [1]महाराज राजानस्सन्निपातिताः ॥　३

यदि चेद् भजमानां मां प्रत्याख्यास्यसि मानद ।

1. घ—मया वीर

विषमग्निं जलं रज्जुम् आस्थास्ये तव कारणात् ॥ ४

बृहदश्वः—

एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ॥ ४॥

नलः—

तिष्ठत्सु लोकपालेषु कथं मानुषमर्हसि ॥ ५

येषामहं लोककृताम् ईश्वराणां महात्मनाम् ।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ६

विप्रियं ह्याचरन् मर्त्यो देवानां मृत्युमृच्छति ।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ७

बृहदश्वः—

ततो बाष्पाकुलां वाचं दमयन्ती शुचिस्मिता ।
प्रव्याहरन्ती शनकैर् नलं राजानमब्रवीत् ॥ ८

दमयन्ती—

अस्त्युपायो मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन् कथञ्चन ॥ ९

त्वं चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः ।
आयान्तु सहितास्सर्वे मम यत्र स्वयंवरः ॥ १०

ततोऽहं लोकपालानां सन्निधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ ११

बृहदश्वः—

एवमुक्तस्तु वैदर्भ्या नलो राजा विशांपते ।
आजगाम पुनस्तत्र यत्र देवास्समागताः ॥　१२

तमपश्यन्नथायान्तं लोकपाला महेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन् वृत्तान्तं सर्वमेव तत् ॥　१३

देवाः—

कच्चिद्दृष्टा त्वया राजन् दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नस्सर्वान् वद भूमिपतेऽनघ ॥　१४

नलः—

भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टस्सुमहाकक्ष्यं दण्डिभिस्स्थविरैर्वृतम् ॥　१५

प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥　१६

सख्यश्चास्या मया दृष्टास् ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन् दृष्ट्वा सर्वा मां विबुधेश्वराः ॥　१७

वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसङ्कल्पा वृणीते सुरसत्तमाः ॥　१८

अब्रवीच्चैव मां बाला आयान्तु सुरसत्तमाः ।
त्वया सह नरश्रेष्ठ मम यत्र स्वयंवरः ॥　१९

तेषामहं संनिधौ त्वां वरयिष्ये नरोत्तम ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ २०

एतावदेव विबुधा यथावृत्तमुदाहृतम् ।
मया शेषं प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

स्वयंवरमण्डपे इन्द्राग्नियमवरुणैर्नलसारूप्येण तत्पार्श्वे समुपवेशनम् ॥ १ ॥ दमयन्त्या स्वगुणसंतुष्टेन्द्रादिप्रसादेन नलस्यैव वरणम् ॥ २ ॥

---

बृहदश्वः—

अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान् भीमो राजा स्वयंवरे ॥ १

तच्छ्रुत्वा पृथिवीपालास् सर्वे हृच्छयपीडिताः ।
त्वरितास्समुपाजग्मुर् दमयन्तीमभीप्सवः ॥ २

कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते महारङ्गं नृपास्सिंह इवाचलम् ॥ ३

तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धरास्सर्वे प्रमृष्टमणिकुण्डलाः ॥ ४

तां राजसमितिं पूर्णां नागैर्भोगवतीमिव ।
सम्पूर्णाम् ऋषभस्कन्धैर् व्याघ्रैर्गिरिगुहामिव ॥ ५

तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवर्णसुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ६

सुकेशान्तानि चारूणि सुनासानि शुभानि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ७

दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ८

तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताऽभून् न चचाल च पश्यताम् ॥ ९

ततस्सङ्कीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान् पञ्च तुल्याकृतीनिह ॥ १०

तान् समीक्ष्य ततस्सर्वान् निर्विशेषाकृतीन् स्थितान् ।
सन्देहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥ ११

निर्विशेषं वयोवेषरूपाणां तत्र सा शुभा ।
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ॥ १२

सा चिन्तयन्ती बुद्ध्याऽथ तर्कयामास भामिनी ।

कथं नु देवान् जानीयां कथं विद्यां नलं नृपम् ॥ १३

एवं सञ्चिन्तयन्ती सा वैदर्भी तनुमध्यमा ।
श्रुतानि देवलिङ्गानि चिन्तयामास भारत ॥ १४

देवानां यानि लिङ्गानि स्थविरेभ्यश्श्रुतानि मे ।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ॥ १५

एवं विचिन्त्य बहुधा विचार्य च पुनः पुनः ।
शरणं प्रति देवानां प्राप्तकालममन्यत ॥ १६

वाचा च मनसा चैव नमस्कारं प्रयुज्य च ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ॥ १७

दमयन्ती—

हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ १८

मनसा वचसा चैव यथा नातिचराम्यहम् ।
तेन सत्येन विबुधास् तमेव प्रदिशन्तु मे ॥ १९

[1]यथा देवैस्स मे भर्ता विहितो निषधाधिपः ।
तेन सत्येन मे देवास् तमेव प्रदिशन्तु मे ॥ २०

स्वं चैव रूपं पुष्यन्तु लोकपाला महेश्वराः ।
यथाऽहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ २१

---

1. अ—अर्धद्वयं नास्ति

बृहदश्वः—

निशम्य दमयन्त्यास्तत् करुणं प्रतिदेवितम् ।
निश्चयं परमं तथ्यम् अनुरागं च नैषधे ॥ २२

मनो विशुद्धां बुद्धिं च भक्तिं रागं च भारत ।
यथोक्तं चक्रिरे देवास् सामर्थ्यं लिङ्गधारणे ॥ २३

साऽपश्यद्विबुधान् सर्वान् अस्वेदान् स्तब्धलोचनान् ।
हृषितस्रग्रजोहीनान् स्थितानस्पृशतः क्षितिम् ॥ २४

छायाद्वितीयो म्लानस्रग्रजस्स्वेदसमन्वितः ।
भूमिष्ठं नैषधं चैव निमेषेण च सूचितम् ॥ २५

सा समीक्ष्य तदा देवान् पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण भारत ॥ २६

विलज्जमाना वस्त्रान्ते जग्राहायतलोचना ।
स्कन्धदेशेऽसृजच्चास्य स्रजं परमशोभनाम् ॥ २७

वरयामास चैवैनं पतित्वे वरवर्णिनी ।
ततो हाहेति सञ्जज्ञे शब्दो मुक्तो नरोत्तमैः ॥ २८

देवैर्महर्षिभिश्चैव साधुसाध्विति भारत ।
विस्मितैरीरितश्शब्दः प्रशंसद्भिर्नलं नृपम् ॥ २९

वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसस्सर्वे नलायाष्टौ वरान् ददुः ॥ ३०

प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।

नैषधाय ददौ शक्रः प्रीयमाणश्शचीपतिः ॥ ३१

अग्निरात्मभवं प्रादाद् यत्र वाञ्छति नैषधः ।
लोकानात्मभवांश्चैव ददौ तस्मै हुताशनः ॥ ३२

यमस्त्वन्नरसं प्रादाद् धर्मे च परमां स्थितिम् ।
[1]अपांपतिरपां भावं यत्र वाञ्छति नैषधः ॥ ३३

स्रजश्चोत्तमगन्धाढ्यास् सर्वे च मिथुनं ददुः ।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ३४

एतत् सर्वं नलोऽपश्यद् दमयन्ती च भारत ।
यथा स्वप्नं महाराज तथैव ददृशुर्जनाः ॥ ३५

ततस्स्वयंवरं चक्रे भीमो राजाऽतिमानुषम् ।
समागतेषु सर्वेषु भूपालेषु विशांपते ॥ ३६

दमयन्त्यपि तत्रैषा राजमण्डलमृद्धिमत् ।
[2]अभिवीक्ष्य नैषधं वव्रे भैमी धर्मेण भारत ॥ ३७

वृते च नैषधे भैम्या निवृत्ते च स्वयंवरे ।
सर्व एव महीपालाः प्रतिजग्मुर्यथागतम् ॥ ३८

गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ॥ ३९

अवाप्य नारीरत्नं तु पुण्यश्लोकोऽपि पार्थिवः ।
रेमे सह तया राजञ् शच्येव बलवृत्रहा ॥ ४०

---

1. अ—अर्धलयं नास्ति 2. क—अन्वीक्ष्य; ब—अभीक्ष्य

अतीव मुदितो राजा भ्राजमानोंऽशुमानिव ।
अरञ्जयत् प्रजा वीरो धर्मेण परिपालयन् ॥ ४१

ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।
अन्यैश्च बहुभिश्श्रीमान् क्रतुभिश्चाप्तदक्षिणैः ॥ ४२

पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ४३

एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसम्पूर्णां वसुधां वसुधाधिपः ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥

दमयन्तीस्वयंवरादनन्तरं दिवं गच्छतामिन्द्रादीनां मध्येमार्गं कलिद्वापरयोर्दर्शनम् ॥ १ ॥ तैः स्वयंवरे दमयन्त्या नलवरणं निवेदितेन द्वापरद्वितीयेन कलिना नलपराभवप्रतिज्ञानम् ॥ २ ॥ कलिचोदनया पुष्करेण नलाह्वानम् ॥ ३ ॥ नलपुष्करयोरक्षदेवनम् ॥ ४ ॥

---

बृहदश्वः—
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १

अथाब्रवीत् कलिं शक्रस् सम्प्रेक्ष्य बलवृत्रहा ॥ १॥

इन्द्रः—

द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ २

बृहदश्वः—

ततोऽब्रवीत् कलिश्शक्रं दमयन्त्यास्स्वयंवरम् ।
गत्वा हि वरयिष्ये तां मनो हि मम तद्गतम् ॥ ३

तमब्रवीत् प्रहस्येन्द्रो निर्वृत्तस्स स्वयंवरः ।
नलो राजा पतिस्तस्या बभूव सुमहाद्युतिः ॥ ४

एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान् सर्वान उवाचेदं वचस्तदा ॥ ५

कलिः—

देवानां मानुषं मध्ये यत् सा पतिमविन्दत ।
ननु तस्या भवेन् न्याय्यं विपुलं दण्डधारणम् ॥ ६

बृहदश्वः—

एवमुक्तास्तु कलिना प्रत्यूचुस्ते दिवौकसः ॥ ६॥

देवाः—

अस्माभिस्समनुज्ञातो दमयन्त्या नलो वृतः ।
यो वेद धर्मानखिलान् यथावच्चरितव्रतः ॥ ७॥

कश्च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
योऽधीते चतुरो वेदान् सर्वानाख्यानपञ्चमान् ॥ ८॥

नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ।
अहिंसायां रतो यश्च सत्यवादी दृढव्रतः ॥ ९॥

यस्मिन् सत्यं धृतिर्दानं तपश्शौचं सदा क्षमा ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ १०॥

आत्मानं स शपेन्मूढो हन्याच्चात्मानमात्मना ॥ ११

एवंगुणं नलं यो वै कामयेच्छासितुं कले ।
असकृन्नरके मज्जेद् अगाधे विपुले प्लवे ॥ १२

बृहदश्वः—

एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ।
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ॥ १३

कलिः—

संयन्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ।
भ्रंशयिष्यामि तं राज्यान् न भैम्या सह रंस्यते ॥ १४

त्वमप्यक्षान् समाविश्य कर्तुं मे साह्यमर्हसि ।
[1]मम प्रियकृते तस्मिन् कृतवांश्च भविष्यसि ॥* १५

बृहदश्वः—

एवं स समयं कृत्वा द्वापरेण कलिस्तदा ।
आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ १६

1. क—नास्तीदमर्धम्
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ १७

कृत्वा मूत्रमुपस्पृश्य सन्ध्यामास्ते स्म नैषधः ।
अकृत्वा पादयोश्शौचं तत्रैनं कलिराविशत् ॥ १८

स समाविश्य च नलं समयं पुष्करस्य च ।
गत्वा पुष्करमाहेदम् एहि दीव्य नलेन वै ॥ १९

अक्षद्यूते नलं जेता भवान् हि सहितो मया ।
निषधान् प्रतिपद्यस्व जित्वा राजन् नलं नृपम् ॥ २०

एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा तं वै पुष्करमन्वयात् ॥ २१

आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति पुनः पुनः ॥ २२

न चक्षमे ततो राजा समाह्वानं महायशाः ।
वैदर्भ्याः प्रेक्षमाणायाः प्राप्तकालममन्यत ॥ २३

ततस्स राजा सहसा देवितुं सम्प्रचक्रमे ॥ २३॥

भ्रात्रा देवाभिभूतेन दैवाविष्टो जनाधिपः ।
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ॥ २४॥

आविष्टः कलिना द्यूते [1]जीयते स्म नलस्तदा ॥ २५

---

1. घ—दीव्यन्ते स्म

तमक्षमदसम्मत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमचेतसम् ॥　　२६
ततः पौरजनास्सर्वे मन्त्रिभिस्सह भारत ।
राजानं द्रष्टुमागच्छन् निवारयितुमातुरम् ॥　　२७
ततस्सूत उपागम्य दमयन्त्यै न्यवेदयत् ॥　　२७॥

सूतः—

पौरजानपदस्सर्वो द्वारि तिष्ठति कार्यवान् ॥　　२८
निवेद्यतां नैषधाय सर्वाः प्रकृतयस्स्थिताः ।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥　　२९

बृहदश्वः—

ततस्सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥　　३०
राजन् पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिस्सहितस्सर्वै राजभक्तिपुरस्कृतः ॥　　३१
वृद्धैर्ब्राह्मणमुख्यैश्च वणिग्भिश्च समन्वितः ।
आगतं सहितं राजंस् त्वत्प्रसादावलम्बिनम् ॥　　३२
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ॥　　३२॥
तां तथा रुचिरापाङ्गीं विलपन्तीं शुचिस्मिताम् ।
आविष्टः कलिना राजा नाभ्यभाषत किञ्चन ॥　　३३॥
ततस्ते मन्त्रिणस्सर्वे ते चैव पुरवासिनः ।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयम् ॥　　३४॥

तथा तदभवद् द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर बहून् मासान पुण्यश्लोकस्त्वजीयत ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि षष्ठोऽध्यायः ॥ ६ ।
[अस्मिन्नध्याये ३५॥ श्लोकाः]

---

## ॥ पञ्चाशोऽध्यायः ॥

---

द्यूते नलपराजयमुत्पश्यन्त्या दमयन्त्या चोदितेन सारथिना तत्पुत्रमिथुनस्य रथारोपणेन भीमनगरप्रापणम् ॥ १ ॥ द्यूते पुष्करजितेन नलेन दमयन्त्या सह वनप्रवेशः ॥ २॥ अन्तरिक्षे पक्षिरूपेण समुत्पतद्भिरक्षैरात्मजिघृक्षोर्नलस्य अन्तरीयवस्त्रापकर्षणेन पलायनम् ॥ ३ ॥ नलेन स्वपन्त्या दमयन्त्या वस्त्रार्धच्छेदनपूर्वकं परित्यागेनापयानम् ॥ ४ ॥

---

बृहदश्वः—

दमयन्ती तु तं दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता दैवेन गतचेतसम् ॥ १

भयशोकसमाविष्टा राजन् भीमसुता ततः ।
चिन्तयामास तत् कार्यं सुमहापार्थिवं प्रति ॥ २

सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वम् उपलभ्येदमब्रवीत् । ३

दमयन्ती—

बृहत्सेने व्रजामात्यान् आनाय्य नलशासनात् ।

आचक्ष्व यद्धृतं द्रव्यम् अवशिष्टं च यद्वसु ॥ ४

बृहदश्वः—

इत्येवं सा समादिष्टा बृहत्सेना नरेश्वर ।
उवाच देव्या वचनं मन्त्रिणां सा समीपतः ॥ ५

ततस्ते मन्त्रिणस्सर्वे विज्ञाय नलशासनम् ।
अपि नो भागधेयं स्याद् इत्युक्त्वा पुनराव्रजन् ॥ ६

प्रकृतीस्तास्तथा दृष्ट्वा द्वितीयमुपसंस्थिताः ।
न्यवेदयद्भीमसुता न च तत् प्रत्यनन्दत ॥ ७

वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा ।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ॥ ८

निशाम्य सततं चाक्षान् पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ९

दमयन्ती—

बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत् कार्यमुपस्थितम् ॥ १०

बृहदश्वः—

बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ११

वार्ष्णेयं तु ततो भैमी श्लक्ष्णया मधुरया गिरा ।

उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ १२

दमयन्ती—

जानीषे त्वं यथा राजा सम्यग्वृत्तस्सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥ १३

यथा यथा हि नृपतिः पुष्करेण हि जीयते ।
तथा तथाऽस्य वै द्यूते रागो भूयोऽभिवर्धते ॥ १४

यथा च पुष्करस्याक्षाः पतन्ति वशवर्तिनः ।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ १५

सुहृत्स्वजनवाक्यानि यथाऽयं न शृणोति च ।
ममापि च तथा वाक्यं नाभिनन्दति मोहितः ॥ १६

तथा राज्ञां प्रदीप्तानां भाग्यानामद्य सारथे ।
नूनं मन्ये न शेषोऽस्ति नैषधस्य महात्मनः ॥ १७

यत्तु मे वचनं राजा नाभिनन्दति मोहितः ।
शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः ॥ १८

न हि मे शुध्यते भावो विनाशं प्रति सारथे ॥ १८॥

नलस्य दयितानश्वान् योजयित्वा महाजवान् ।
रथमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥ १९॥

मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चैव यथाकामं वस वाऽन्यत्र गच्छ वा ॥ २०॥

बृहदश्वः—

दमयन्त्यास्तु तच्छ्रुत्वा वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ २१॥

तैस्समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥ २२॥

हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्याम् इन्द्रसेनं च बालकम् ॥ २३॥

आमन्त्र्य भीमं राजानम् आर्तश्शोचन्नलं नृपम् ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ २४॥

ऋतुपर्णं स राजानम् उपतस्थे सुदुःखितः ।
भृतिं च स ददौ चास्य सारथ्येन नियोजितः ॥* २५॥

बृहदश्वः—

ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चापि वसु किञ्चन ॥ २६॥

हृतराज्यं नलं राजन् प्रहसन् पुष्करोऽब्रवीत् ॥ २७

पुष्करः—

द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव ॥ २७॥

शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया ।
दमयन्त्याः पणस्साधु वर्ततां यदि मन्यसे ॥ २८॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

बृहदश्वः—

पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किञ्चिदब्रवीत् ॥ २९॥

ततः पुष्करमालोक्य नलः परममन्युमान् ।
उवाच विद्यतेऽन्यच्च धनं मम नराधम ॥ ३०॥

[1]पणान्निव च निक्षिप्य पुण्यश्लोकस्तु दुर्मनाः ।
उत्तरीयं तथा वस्त्रं तस्याश्चाभरणानि च ॥ ३१॥

उद्धृत्य सर्वगात्रेभ्यो [2]भूषणानि महायशाः ।
[3]एकवासो हि संवीतः सुहृदां शोकवर्धनः ॥ ३२॥

निश्चक्राम नलो राजा त्यक्त्वा तु विपुलं धनम् ।
दमयन्त्येकवस्त्रा तं गच्छन्तं पृष्ठतोऽन्वियात् ॥ ३३॥
स तया नगराभ्याशे तां रात्रिं नैषधोऽवसत् ॥ ३४

पुष्करस्तु महाराज घोषयामास वै पुरे ।
नले यस्सम्यगातिष्ठेत् स गच्छेद्वध्यतामिति ॥ ३५

पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्मिन् सत्कारं कृतवन्तो युधिष्ठिर ॥ ३६

स तया नगराभ्याशे सत्कारार्हो न सत्कृतः ।

---

1. अ-ब—पणं यत्र विक्षिप्य 2. अ-ब—भूणैर्नैषधोऽवसत्
3. अ-ब—अर्धचतुष्टयं नास्ति

त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ॥ ३७

क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान् कांश्चिद्धिरण्यसदृशच्छदान् ॥ ३८

स चिन्तयामास तदा निषधाधिपतिर्नृपः ।
अस्ति भक्षो ममाद्यापि वसु चेदं भविष्यति ॥ ३९

तत[1]स्तानुत्तरीयेण वाससा समवास्तृणोत् ।
तस्योत्तरीयमादाय सर्वे जग्मुर्विहायसा ॥ ४०

उत्पतन्तः खगास्ते तु वाक्यमाहुस्तदा नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ ४१

खगाः—

वयमक्षास्सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिस् सवाससि गते त्वयि ॥ ४२

बृहदश्वः—

तान् समीक्ष्य गतानक्षान् आत्मानं च विवाससम् ।
पुण्यश्लोकोऽपि वै राजा दमयन्तीमथाब्रवीत् ॥ ४३

नलः—

येषां प्रकोपादैश्वर्यात् प्रच्युतोऽहमनिन्दिते ।
प्राणयात्रां न विन्दे च दुःखितः क्षुधितोऽर्दितः ॥ ४४

---

1. क—स्तानन्तरीयेण

येषां कृते न सत्कारम् अकुर्वन् मम नैषधाः ।
त इमे शकुना भूत्वा वासश्चापहरन्ति मे ॥ ४५

वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेऽसौ निबोधेदं वचनं हितमात्मनः ॥ ४६

एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ ४७

एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।
आश्रमाश्च महर्षीणां बहुमूलफलान्विताः ॥ ४८

एष पन्था विदर्भाणाम् एष यास्यति कोसलान् ।
[1]ततःपरमदेशोऽयं दक्षिणो दक्षिणापथः ॥ ४९

बृहदश्वः—

ततस्सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ ५०

दमयन्ती—

उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव सङ्कल्पं चिन्तयन्त्याः पुनःपुनः ॥ ५१

हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयम् अहं त्वां निर्जने वने ॥ ५२

1. क—अतः परं च

श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्याम्यहं क्लमम् ॥ ५३

न च भार्यासमं किञ्चिद् विद्यते भेषजं मतम् ।
नित्यं हि सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ ५४

नलः—

एवमेतद्यथाऽऽत्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ ५५

न चाहं त्यक्तुकामस्त्वां किमलं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न चैव त्वामनिन्दिते ॥ ५६

दमयन्ती—

यदि मां त्वं महाराज न विहातुमिहेच्छसि ।
तत्किमर्थं विदर्भाणां पन्थास्समुपदिश्यते ॥ ५७

अवैमि चाहं नृपते न तु मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टस्त्वं मां त्यजेथा महीपते ॥ ५८

पन्थानं त्वं ममाभीक्ष्णम् आख्यासि नरसत्तम ।
अतो निमित्तं शोकं मे वर्धयस्यमरप्रभ ॥ ५९

यदि चायमभिप्रायस् तव राजन् भविष्यति ।
सहितावेव गच्छावो विदर्भान् यदि मन्यसे ॥ ६०

ततस्स राजा त्वां दृष्ट्वा पूजयिष्यति मानद ।

तेन त्वं पूजितो राजन् सुखं वत्स्यसि नो गृहे ॥* ६१

बृहदश्वः—

इत्युक्तस्स तदा देव्या नलो वचनमब्रवीत् ॥ ६१॥

नलः—

यथा राज्यं पितुस्ते तत् तथा मम न संशयः ।
न तु तत्र गमिष्यामि विषमस्थः कथञ्चन ॥ ६२॥

कथं समृद्धो गत्वाऽहं तव हर्षविवर्धनः ।
[1]परिहीनो गमिष्यामि तव शोकविवर्धनः ॥ ६३॥

बृहदश्वः—

इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः ।
सान्त्वयामास कल्याणीं वाससोऽर्धेन संवृतः ॥ ६४॥

तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां काञ्चिदुपेयतुः ॥ ६५॥

तां सभामुपसम्प्राप्य [2]वनमध्ये खिलीकृताम् ।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ६६॥

स वै विवस्त्रो विकचो मलिनः पांसुगुण्ठितः ।
दमयन्त्या सह श्रान्तस् सुष्वाप धरणीतले ॥ ६७॥

दमयन्त्यपि कल्याणी निद्रया पतिता ततः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. अ—नास्तीदमर्धम्    2. क—तदा स निषधाधिपः

सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ६८॥
सुप्तायां दमयन्त्यां तु नलो राजा विशां पते ।
शोकोन्मथितचित्तस्सन् न स्म शेते यथा पुरा ॥ ६९॥

स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ७०॥

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ ७१॥

मामियं त्वनुरक्तेयं दुःखमाप्नोति मत्कृते ।
मद्विहीना स्वयं गच्छेत् कदाचित् स्वजनं प्रति ॥ ७२॥

मया निःसंशयं दुःखम् इयं प्राप्स्यत्यनुत्तमा ।
उत्सर्गे संशयस्स्यात्तु विन्देतापि सुखं क्वचित् ॥ ७३॥

स विनिश्चित्य बहुधा विचार्य च पुनःपुनः ।
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिपः ॥ ७४॥

सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।
चिन्तयित्वाऽध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ ७५॥

कथं वासोऽवकर्तेयं न च बुद्ध्येत मे प्रिया ।
चिन्त्यैवं नैषधो राजा सभां पर्यचरन्नृपः ॥ ७६॥

परिधावन्नथ नल इतश्चेतश्च सत्वरः ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ ७७॥

तेनार्धं वाससश्छित्त्वा निवस्य च परन्तपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः ॥ ७८॥

ततो निबद्धहृदयः पुनरागम्य तां सभाम् ।
[1]दमयन्तीं तथा दृष्ट्वा रुरोद स नराधिपः । ७९॥

नलः—

यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ ८०॥

इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव मया हीना कथं बुद्ध्वा भविष्यति ॥ ८१॥

कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालसमाकुले ॥ ८२॥

बृहदश्वः—

गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः ।
[2]आकृष्यमाणः कलिना सौहृदेनापकृष्यते ॥ ८३॥

द्विधेव हृदयं तस्य दुःखितस्याभवत् तदा ।
दोलेव मुहुरायाति याति चैव सभां मुहुः ॥ ८४॥

सोऽपकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ ८५॥

1. क—अर्धचतुष्टयं नास्ति 2. क—अर्धत्रयं नास्ति

नष्टात्मा कलिनाऽऽविष्टस् तत्तद्विगणयन् मुहुः ।
जगामैवं वने शून्ये भार्यामुत्सृज्य दुःखितः ॥ ८६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये ८६॥ श्लोकाः ]

---

## ॥ एकपञ्चाशोऽध्यायः ॥

वने चरन्त्या दमयन्त्या अजगरेण ग्रहणम् ॥ १ ॥ वनचरेण व्याधेन तां ग्रसतोऽजगरस्य वधः ॥ २ ॥ दमयन्त्या आत्मकामुकस्य तद्व्याधस्य स्वपातिव्रत्यमहिम्ना हननम् ॥ ३ ॥

---

बृहदश्वः—

अपक्रान्ते नले राजन् दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १

[1]अपश्यमाना भर्तारं शोकदुःखसमन्विता ।
प्राक्रोशदुच्चैस्संत्रस्ता महाराजेति नैषधम् ॥ २

दमयन्ती—

हा नाथ हा महाराज हा स्वामिन् किञ्जहासि माम् ।
हा हताऽस्मि विनष्टाऽस्मि भीताऽस्मि विजने वने ॥ ३

1. अ-घ—अर्धचतुष्टयं नास्ति

ननु नाम महाराज धर्मज्ञ इति विश्रुतः ।
कथं तथाविधस्त्वं हि सुप्तामुत्सृज्य मां गतः ॥ ४

कथमुत्सृज्य गन्ताऽसि वश्यां भार्यामनुव्रताम् ।
विशेषतो नापकृतः परेणापकृते सति ॥ ५

शक्ष्यसे न गिरस्सत्याः कर्तुं मयि नरेश्वर ।
यास्त्वया लोकपालानां सन्निधौ कथिताः पुरा ॥ ६

पर्याप्तः परिहासोऽयम् एतावान् पुरुषर्षभ ।
भीताऽहमस्मि दुर्धर्ष दर्शयात्मानमीश्वर ॥ ७

दृश्यसे दृश्यसे राजन् एप तिष्ठसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ८

नृशंसां बत राजेन्द्र यन्मामेवंगतामिह ।
विलपन्तीं समासाद्य नाश्वासयसि पार्थिव ॥ ९

न शोचाम्यहमात्मानं न चान्यदपि किञ्चन ।
कथं नु भवितास्येक इति त्वां नृप शोचये ॥ १०

कथं नु राजंस्तृषितः क्षुधितश्श्रमकर्शितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन् भविष्यसि ॥ ११

बृहदश्वः—

ततस्सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ १२

मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते बाला मुहुः क्रोशति रोदिति ॥ १३

साऽतीव शोकसन्तप्ता मुहुर्निश्श्वस्य विह्वला ।
उवाच भैमी निष्क्रम्य रोदमाना पतिव्रता ॥ १४

दमयन्ती—

यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः ।
तस्य भूतस्य तद्दुःखाद् दुःखमभ्यधिकं भवेत् ॥ १५

अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ १६

बृहदश्वः—

एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
अन्वेषति स्म भर्तारं वने श्वापदसेविते ॥ १७

उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः ।
हाहा महाराज नल इतश्चेतश्च धावति ॥ १८

संशुष्यमाणामत्यर्थं कुररीमिव वाश्यतीम् ।
करुणं बहु शोचन्तीं विलपन्तीं पुनःपुनः ॥ १९

सहसैवानवद्याङ्गीम् अभ्याशे परिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधाऽन्वितः ॥ २०

सा गृह्यमाणा ग्राहेण शोकेन च पराजिता ।

नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २१

दमयन्ती—

हा नाथ मामिह वने गृह्यमाणामनागसीम् ।
ग्राहेणानेन विपिने किमर्थं नाभिधावसि ॥ २२

कथं भविष्यसि पुनर् मामनुस्मृत्य नैषध ।
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च ॥ २३

श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ।
कश्श्रमं राजशार्दूल नाशयिष्यति तेऽनघ ॥ २४

बृहदश्वः—

तामकस्मान्मृगव्याधो विचरन् गहने वने ।
आक्रन्दतीमुपश्रुत्य जवेनाभिससार ह ॥ २५

तां स दृष्ट्वा तथा ग्रस्ताम् उरगेणायतेक्षणाम् ।
त्वरमाणो मृगव्याधस् सञ्चरन् गहने वने ॥ २६

समतिक्रम्य वेगेन सत्वरस्स वनेचरः ।
मुखतः पाटयामास शस्त्रेण निशितेन च ॥ २७

निर्विचेष्टं भुजङ्गं तं विशस्य मृग[1]जीवनः ।
मोक्षयित्वा च तां व्याधः प्रक्षाल्य सलिलेन च ॥ २८

समाश्वास्य कृताहाराम् अथ पप्रच्छ भारत ॥ २८॥

---

1. घ—जीविकः

व्याधः—

कस्य त्वं मृगशावाक्षि कथं चास्यागता वनम् ।
कथं चेदं महत् कृच्छ्रं प्राप्तवत्यसि भामिनि ॥ २९॥

बृहदश्वः—

दमयन्ती तथा तेन पृच्छ्यमाना विशां पते ।
सर्वमेतद्यथावृत्तम् आचचक्षेऽस्य भारत ॥ ३०॥

तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ॥ ३१॥

अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमेयिवान् ॥ ३२॥

तामथ श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ।
सान्त्वयामास कामार्तस् तदबुध्यत भामिनी ॥ ३३॥

दमयन्ती च तं दुष्टं विज्ञायाथ पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ ३४॥

स तु पापमतिः क्षुद्रः प्रधर्षयितुमारभत् ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ ३५॥

दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषा किल ॥ ३६॥

दमयन्ती—

यथाऽहं नैषधादन्यं मनसाऽपि न चिन्तये ।

तथाऽयं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ३७॥

बृहदश्वः—

उक्तमात्रेण तु तया साध्व्या स मृगजीवनः ।
व्यसुः पपात मेदिन्याम् अग्निदग्ध इव द्रुमः ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

नलमन्वेषयन्त्या दमयन्त्या वनमध्ये हस्त्यश्वरथसङ्कुलजनसार्थदर्शनम् ॥ १ ॥ तथा सार्थनाथेन सम्भाषणम् ॥ २ ॥

---

बृहदश्वः—

सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ १

सिंहव्याघ्ररुरुद्वीपिवराहर्क्षमृगायुतम् ।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् ॥ २

सालवेणुधवाश्वत्थतिन्दुकेन्दुककिंशुकैः ।
अर्जुनारिष्टसञ्छन्नं स्यन्दनैश्च सशाल्मलैः ॥ ३

जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम् ।

काश्मर्यामलकीप्लक्षकदम्बोदुम्बरावृतम् ॥ ४

बदरीबिल्वसञ्छन्नं न्यग्रोधैश्च समाकुलम् ।
प्रियालतालखर्जूरहरीतकविभीतकैः ॥ ५

नानाधातुशतैर्नद्धान् विविधानपि चाचलान् ।
सिंहर्क्षव्याघ्रसङ्घुष्टान् दरीश्चाद्भुतदर्शनाः ॥ ६

नदीस्सरांसि वापीश्च वन्यानपि मृगद्विजान् ।
सुबहून् भीमरूपांश्च पिशाचोरगराक्षसान् ॥ ७

पल्वलानि तटाकानि गिरिकूटानि सर्वशः ।
सरित्सरांसि च तथा ददर्शाद्भुतदर्शना ॥ ८

यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषान् वराहान् गोमायून् ऋक्षपन्नगवानरान् ॥ ९

तेजसा यशसा लक्ष्म्या कान्त्या च परया युता ।
वैदर्भी विचचारैका नलमन्वेषती तदा ॥ १०

नाबिभ्यत् सा नृपसुता भैमी तत्राथ कस्यचित् ।
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता ॥ ११

विदर्भतनया राजन् विललाप सुदुःखिता ।
भर्तृशोकपरीताङ्गी शिलातलसमाश्रिता ॥ १२

दमयन्ती—

सिंहोरस्क महाबाहो निषधानां जनाधिप ।

क्व नु राजन् गतोऽसि त्वं त्यक्त्वा मां विजने वने ॥ १३

अश्वमेधादिभिर्वीर क्रतुभिश्चाप्तदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ १४

यत्त्वयोक्तं नरव्याघ्र मत्समक्षं महाद्युते ।
कर्तुमर्हसि कल्याण तत् सर्वं पार्थिवर्षभ ॥ १५

यच्चोक्तं विहगैर्हंसैस् समीपे तव भूमिप ।
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि ॥ १६

एकतश्चतुरो वेदास् साङ्गोपाङ्गास्सविस्तराः ।
स्वधीतास्ते नरश्रेष्ठ सत्यमेकं किलैकतः ॥ १७

तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर ।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ॥ १८

हा वीर ननु नामाहम् इष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ १९

भक्षयत्येष मे रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट् क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ २०

न मे त्वदन्या सुभगे प्रिया इत्यब्रवीस्तदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नल ॥ २१

उन्मत्तवद्विलपतीं भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितेनाथ किं मां न प्रतिनन्दसे ॥ २२

कृशां दीनां विवर्णां च मलिनां वसुधाधिप ।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् ॥ २३

यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
न मानयसि मां नाथ रुदन्तीमरिकर्शन ॥ २४

महाराज महारण्ये मामिहैकाकिनीं सतीम् ।
त्वत्पत्नीमभिभाषन्तीं किं मां न प्रतिभाषसे ॥ २५

कुलशीलोपसम्पन्नां चारुसर्वाङ्गशोभनाम् ॥ २५॥
नाद्य त्वामनुपश्यामि गिरावस्मिन्नरोत्तम ॥ २६

वने चास्मिन् महाघोरे सिंहव्याघ्रनिषेविते ।
शयानमुपविष्टं वा स्थितं वा मनुजाधिप ॥ २७

प्रस्थितं वा नरश्रेष्ठ मम शोकविनाशन ॥ २७॥
किं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता ।
कच्चिद्दृष्टस्त्वयाऽरण्ये सङ्गम्येह नलो नृपः ॥ २८॥

कोनु मे कथयेदद्य वनेऽस्मिन्निष्ठितं नृपम् ।
महाबलं महात्मानं परव्यूहविनाशनम् ॥ २९॥
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ ३०॥

अरण्यराडयं श्रीमांश्च चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोऽभिमुखं प्रैति पृच्छाम्येनमशङ्किता ॥ ३१॥

भवान् मृगाणामधिपस् त्वमस्मिन् कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ ३२॥

निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः ।
पतिमन्वेषणीमेकां कृपणां शोककर्शिताम् ॥ ३३॥

आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ।
सिंहस्कन्धो महाबाहुः पद्मपत्रनिभेक्षणः ॥ ३४॥

अथवाऽरण्यनृपते नलं यदि न पश्यसि ।
मां भक्षयित्वा शार्दूल विशोकां कुरु दुःखिताम् ॥ ३५॥

श्रुत्वाऽरण्ये विलपितां मामेव मृगराट् स्वयम् ।
यात्येतां मृष्टसलिलाम् आपगां सागरोपमाम् ॥ ३६॥

इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजद्भिर् दिविस्पृग्भिर् नैकवर्णैर्मनोहरैः ॥ ३७॥

नानाधातुसमाकीर्णं विविधोपलशोभितम् ।
[1]अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम् ॥ ३८॥

सिंहशार्दूलमातङ्गवराहर्क्षसमाकुलम् ।
पतत्त्रिभिर्बहुविधैस् समन्तादनुनादितम् ॥ ३९॥

किंशुकाशोकवकुलैः पुन्नागैरुपशोभितम् ।
सरिद्भिस्सविहङ्गाभिश् शिखरैश्चापि शोभितम् ॥ ४०॥

---

1. क-ख—अर्धचतुष्टयं नास्ति

गिरिराजमिमं तावत् पृच्छामि नृपतिं पतिम् ॥ ४१

भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ॥ ४२

प्रणमे त्वाऽभिगम्याहं राजपुत्रीं निबोध माम् ।
राजस्नुषां राजभार्यां दमयन्तीति विश्रुताम् ॥ ४३

राजा विदर्भाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्च चातुर्वर्ण्यस्य रक्षिता ॥ ४४

राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ ४५

ब्रह्मण्यस्साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान् सत्यवाञ्शूरः पृथुश्रीर्धर्मविश्रुतः ॥ ४६

सम्यग्गोप्ता विदर्भाणां [1]निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवन् समुपस्थिताम् ॥ ४७

निषधेषु महराजश्च श्वशुरो मे नृपोत्तमः ।
गृहीतनामा विख्यातो वीरसेन इति स्म ह ॥ ४८

तस्य राज्ञस्सुतो वीरश्च श्रीमान सत्यपराक्रमः ।
क्रमप्राप्तं तु यो राज्यं पितुस्समुपशास्ति हि ॥ ४९

नलो नामारिदमनः पुण्यश्लोक इति श्रुतः ।

---

1. क-ख—निहता

ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत् सोमपोऽग्निचित् ॥ ५०

यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ।
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ॥ ५१

त्यक्तांश्रिया भर्तृहीनाम् अनाथां व्यसनान्विताम् ।
अन्वेषमाणां भर्तारं नलं नरवरोत्तमम् ॥ ५२

खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृप ः ।
कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन् दारुणे नलः ॥ ५३

गजेन्द्रविक्रमो धीमान् दीर्घबाहुररिन्दमः ।
विक्रान्तस्सत्यवान धीरो भर्ता मम महायशाः ॥ ५४

निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ॥ ५४॥

किं मां विलपतीमेकां पर्वतश्रेष्ठ दुःखिताम् ।
गिरा नाश्वासयस्यद्य स्वां सुतामिव मानद ॥ ५५॥

वीर विक्रान्त धर्मज्ञ सत्यसन्ध महीपते ।
यद्यस्मिन् वै वने राजन् दर्शयात्मानमात्मना ॥ ५६॥

कदा नु स्निग्धगम्भीरां जीमूतस्वनसन्निभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ॥ ५७॥

वैदर्भीत्येव कथितां शुभां राज्ञो महात्मनः ।
आत्माभिधायिनीमृद्धां मम शोक[1]विनाशिनीम् ॥ ५८॥

---

1. क–घ—निबर्हिणीम्

बृहदश्वः—

इति सा तं गिरिश्रेष्ठम् उक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ५९॥

सा गत्वा त्रीनहोरात्रान् ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननदर्शितम् ॥ ६०॥

वसिष्ठभृग्वत्रिसमैस् तापसैरुपशोभितम् ।
नियतैस्संयताहारैर् दमशौचसमन्वितैः ॥ ६१॥

अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैस् स्वर्गमार्गदिदृक्षुभिः ॥ ६२॥

वल्कलाजिनसंवीतैर् मुनिभिस्संयतेन्द्रियैः ।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ॥ ६३॥

सा च दृष्ट्वाऽऽश्रमपदं नानामृगनिषेवितम् ।
शाखामृगगणैश्चैव तापसैश्च समन्वितम् ॥ ६४॥

सुभ्रूस्सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।
वर्चस्विनी सुप्रतिष्ठा स्वञ्चितोद्यतगामिनी ॥ ६५॥

सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती मनस्विनी ॥ ६६॥

तापसैस्समुपेतं च सा दृष्ट्वैव समाश्वसत् ॥ ६७

साऽभिवाद्य तपोवृद्धान् विनयावनता स्थिता ।

स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैस्तथा ॥ ६८

पूजां चक्रे यथान्यायम् ऋषीणां सा मनस्विनीः ॥ ६८॥

ततस्ते पूजिता विप्राः प्रयतेन्द्रियमानसाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवाम ते ॥ ६९॥

तानुवाच महाभागा कच्चिद्भगवतामिह ।
तपस्स्वग्निषु धर्मे च सर्वेषु मृगपाक्षिषु ॥ ७०॥

अपि स्वाध्याययोगेषु धर्मयोगेषु वा पुनः ।
कुशलं वः प्रियतपास् स्वधर्माचरणेषु च ॥ ७१॥

तैश्चोक्तं [1]कुशलं भद्रे सर्वत्रेति तपस्विभिः ॥ ७२

ब्रूहि सर्वानवद्याङ्गि का त्वं किंच चिकीर्षसि ॥ ७२॥

दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नस्समुत्पन्नस् समाश्वासिहि मा शुचः ॥ ७३॥

अस्यारण्यस्य महती देवता वा महीभृतः ।
अस्यास्तु नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ७४॥

साऽब्रवीत् तानृषीन् नाहम् अरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा न नद्या देवताऽप्यहम् ॥ ७५॥

मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ७६॥

---

1. अ—सुखं

दमयन्ती—

विदर्भेषु महीपालो भीमो नाम महाद्युतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ७७॥

निषधाधिपतिश्श्रीमान् नलो नाम महायशाः ।
वीरस्सङ्ग्रामजिद्विद्वान् मम भर्ता विशां पतिः ॥ ७८॥

देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महाभागो महाद्युतिः ॥ ७९॥

सत्यवान् धर्मवित् प्राज्ञस् सत्यसन्धोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरश् श्रीमान् परपुरञ्जयः ॥ ८०॥

नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ८१॥

आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ८२॥

स कैश्चिन्निकृतिप्रज्ञैर् अकल्याणैर्नराधिपः ।
आहूय पृथिवीपालस् सत्यधर्मपरायणः ॥ ८३॥

देवने कुशलैर्जिह्मैर् जितो राज्यं वसूनि च ।
वित्रासितश्च नगराद् वनवासमुपेयिवान् ॥ ८४॥

तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्याता भर्तुर्दर्शनलालसा ॥ ८५॥

सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च सर्वाणि तथाऽरण्यानि सर्वशः ॥ ८६॥

अन्वेषती सा भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥ ८७॥

कच्चिद्भगवतां पुण्यं तपोवनमिदं महत् ।
भवेत् प्राप्तो नलो नाम निषधानां जनाधिपः ॥ ८८॥

यत्कृतेऽहमिदं दुर्गं प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ८९॥

यदि कैश्चिदहोरात्रैर् न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोक्षणात् ॥ ९०॥

को नु मे जीवितेनार्थस् तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ९१॥

बृहदश्वः—

तथा विलपतीमेकाम् अरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसास्सत्यवादिनः ॥ ९२॥

तापसाः—

उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥ ९३॥

निषधानामधिपतिं नलं रिपुनिघातिनम् ।

भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ९४॥

विमुक्तं सर्वपापेभ्यस् सर्वरत्नविभूषितम् ।
[1]तदेव नगरं श्रेष्ठं प्रशासतमरिन्दमम् ॥ ९५॥

द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिमेष्यसि कल्याणि कल्याणाभिजनं नृपम् ॥ ९६॥

बृहदश्वः—

एवमुक्त्वा नलस्येष्टां महर्षी पार्थिवात्मजाम् ।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तथा ॥ ९७॥

सा दृष्ट्वा महदाश्चर्यं विस्मिता त्वभवत् ततः ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ॥ ९८॥

चिन्तयामास वैदर्भी किमेतद्दृष्टवत्यहम् ॥ ९९

किं नु स्वप्नो मया दृष्टः कोऽयं विधिरिहागतः ।
क्व नु ते तापसास्सर्वे क्व तदाश्रममण्डलम् ॥ १००

क्व सा पुण्यजला रम्या नानाद्विजनिषेविता ।
नदी ते च नगा हृद्याः फलपुष्पोपशोभिताः ॥ १०१

इत्येतन्नरशार्दूल विस्मिता कमलेक्षणा ।
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ॥ १०२

भर्तृशोककृशा दीना विवर्णपरुषाऽभवत् ॥ १०२॥

1. अ-ब—अर्धचतुष्टयं नास्ति

सा गता चापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाऽशोकतरुं ततः ॥ १०३॥

उपगम्य तरुश्रेष्ठम् अशोकं पुष्पितं वने ।
पल्लवापीडितं हृद्यं विहङ्गैरपि नादितम् ॥ १०४॥

दयमन्ती—

अहो बतायमगमश् श्रीमानस्मिन् वनान्तरे ।
आपीडैर्बहुभिर्भाति श्रीमा[1]न्निषधराडिव ॥ १०५॥

अशोक शोकापनुद शोकोपहतचेतसम् ।
त्वन्नामानं कुरु क्षिप्रं प्रियसन्दर्शनाद्धि माम् ॥ १०६॥

[2]अशोकां कुरु मां क्षिप्रम् अशोक प्रियदर्शन ।
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ॥ १०७॥

नलं नामारिदमनं दमयन्त्याः प्रियं पतिम् ।
निषधानामधिपतिं दृष्टवानसि मे प्रियम् ॥ १०८॥

एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरम् अरण्यमिदमागतम् ॥ १०९॥

यथा विशोका गच्छेयम् अशोकवर तत् कुरु ।
सत्यनामा भवाशोक मम शोकविनाशनात् ॥ ११०॥

बृहदश्वः—

एवं साऽशोकवृक्षं तम् आर्ता त्रिरुपगम्य सा ।

---

1. क—न् द्रमिडराडिव 2. घ—अर्धचतुष्टयं नास्ति

जगाम दारुणं देशं वैदर्भी कमलेक्षणा ॥ ११११॥
सा ददर्श नगान्नैकान् सरांसि सरितस्तथा ।
नैकांश्च पर्वतान् रम्यान् नैकांश्च मृगपक्षिणः ॥ ११२॥
कन्दरांश्च नितम्बांश्च नदांश्चाद्भुतदर्शनान ।
ददर्श सा भीमसुता पतिमन्वेषती शुभा ॥ ११३॥
सा गत्वा दूरमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसङ्कुलम् ॥ ११४॥
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशीततोयां विस्तीर्णां ह्रादिनीं पादपैर्वृताम् ॥ ११५॥
प्रोद्घुष्टां क्रौञ्चकुररैश् चक्रवाकैश्च शोभिताम् ।
कूर्मग्राहझषाकीर्णां पुलिनद्वीपशोभिताम् ॥ ११६॥
सा दृष्ट्वैव महासार्थं दमयन्ती यशस्विनी ।
उपसृत्य वरारोहा जनमध्यं विवेश ह ॥ ११७॥
उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता ।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा ॥ ११८॥
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तापरास्तस्थुः केचित् तत्र विचुक्रुशुः ॥ ११९॥
प्रहसन्ति स्म तां केचिद् अभ्यसूयन्ति चापरे ।
कुर्वन्त्यस्यां दयां केचित् पप्रच्छुरपि भारत ॥ १२०॥

केचित्—

काऽसि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताश्चैते नरास्सार्थनिवासिनः ॥ १२१॥

वद सत्यं वनस्यास्य पर्वतस्याथवा दिशः ।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः ॥ १२२॥

[1]यक्षी वा राक्षसी वा त्वम् उताहोऽसि सुराङ्गना ।
सर्वथा कुरु नस्स्वस्ति रक्ष चास्माननिन्दिते ॥ १२३॥

यथाऽयं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत् ॥ १२४॥

बृहदश्वः—

तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततस्साध्वी भर्तृशोकनिपीडिता ॥ १२५॥

दमयन्ती—

सार्थवाहश्च सार्थश्च जना ये चात्र केचन ।
युवस्थविरबालाश्च सार्थस्यास्य पुरोगमाः ॥ १२६॥

मानुषीं मां विजानीत मनुजाधिपतेस्सुताम् ।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ १२७॥

विदर्भराण्मम पिता भर्ता राजा च नैषधः ।

1. अ-घ—अर्धचतुष्टयं नास्ति

नलो नाम महाभागस् तं मार्गाम्यपराजितम् ॥ १२८॥

यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पुरुषशार्दूलम् अमित्रगणसूदनम् ॥ १२९॥

बृहदश्वः—

तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
सार्थवाहश्शुचिर्नाम दमयन्तीं नराधिप ॥ १३०॥

सार्थवाहः—

अहं सार्थस्य नेता वै सार्थवाहश्शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ १३१॥

गोमायुकुञ्जरद्वीपिमहिषर्क्षनिषेवितम् ।
पश्याम्यस्मिन् वने कष्टे ह्यमनुष्यनिषेविते ॥ १३२॥

[1]यथा वयं तं पश्यामो नलं पार्थिवमत्र वै ।
ततो वै यक्षराजस्स मणिभद्रः प्रसीदतु ॥ १३३॥

बृहदश्वः—

साऽब्रवीद्वणिजस्सर्वान् सार्थवाहं च तं ततः । १३४

दमयन्ती—

क्वनु यास्यति सार्थोऽयम् एतदाख्यातुमर्हथ ॥ १३४॥

1. क—नास्तीदमर्धम्

सार्थवाहः—

सार्थोऽयं चेदिराजस्य सुबाहोस्सत्यवादिनः ।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ३३ ॥तीर्थयात्रापर्वणि नवमोऽध्यायः ॥ ९ ॥
[ अस्मिन्नध्याये १३५॥ श्लोकाः ]

## ॥ त्रिपञ्चाशोऽध्यायः ॥

दमयन्त्या सार्थेन सह चेदिराजपुरं प्रति प्रस्थानम् ॥ १ ॥ वनमध्ये सरस्तीरशायिनि सार्थे निशीथे पानीयपानायागतगजयूथनिहतभूयिष्ठे दिष्ट्या दमयन्त्या अपि शेषीकारः ॥ २ ॥ हतावशिष्टेन जनेन सह चेदिराजपुरं गताया दमयन्त्या राजमात्रा स्वान्तःपुराधिवासनम् ॥ ३ ॥

बृहदश्वः—

सा तच्छ्रुत्वाऽनवद्याङ्गी सार्थवाहवचस्तदा ।
[1]जगाम तेन सार्थेन भर्तृदर्शनलालसा ॥ १

अथ काले बहुतिथे वने महति दारुणे ।
तटाकं सर्वतोभद्रं पद्मसौगन्धिकायुतम् ॥ २

ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम् ।
बहुमूलफलोपेतं नानापक्षिगणैर्वृतम् ॥ ३

1. क—अगच्छद्राजशार्दूल दुःखशोकसमन्विता । [इति पाठान्तरम्]

तं दृष्ट्वा मृष्टसलिलं मनोहरसुखावहम् ।
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ॥ ४

सम्मते सार्थवाहस्य विविशुर्वनमुत्तमम् ॥ ४॥

उवास सार्थस्सुमहान् निशामासाद्य पद्मिनीम् ॥ ५

अथार्धरात्रसमये निःशब्दे स्तिमिते तदा ।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ॥ ६

पानीयार्थं गिरितटान्मदप्रस्रवणाविलम् ।
मार्गं संरुद्ध्य संसुप्तं पद्मिन्यास्सार्थमुत्तमम् ॥ ७

सुप्तं ममर्द सहसा वेष्टमानं महीतले ॥ ७॥

महारवं प्रमुञ्चन्तो वञ्चन्ते शरणार्थिनः ।
वनगुल्मांश्च धावन्तो निद्रया महतो भयात् ॥ ८॥

केचिद्दन्तैः करैः केचित् केचित् पद्भ्यां नरा हताः ॥ ९

गोखरोष्ट्राश्वबहुलं पदातिजनसङ्कुलम् ।
भयार्तं धावमानं च परस्परहतं तथा ॥ १०

घोरं नादं विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वासज्य सम्भग्नाः पतिता विषमेषु च ॥ ११

तथा विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥ ११॥

अथापरेद्युस्सम्प्राप्ते हतशिष्टा जनास्तदा ।

बहुगुल्माद्विनिष्क्रम्य शोचन्ते वैशसं कृतम् ॥ १२॥

भ्रातरं पितरं पुत्रं सखायं च जनाधिप ॥ १३

हन्यमाने तथा सार्थे दमयन्ती शुचिस्मिता ।
ब्राह्मणैस्सहिता तत्र वने तु न विनाशिता ॥ १४

अशोचत् तत्र वैदर्भी किंनु मे दुष्कृतं कृतम् ॥ १४॥

सोऽपि मे निर्जनेऽरण्ये सम्प्राप्तोऽयं जनार्णवः ।
हतोऽयं हस्तियूथेन मन्दभाग्यान्ममैव तु ॥ १५॥

प्राप्तव्यं सुचिरं दुःखं मया नूनमसंशयम ॥ १६

नानाप्तकालो म्रियते श्रुतं वृद्धानुशासनम् ।
या नाहमद्य मृदिता हस्तियूथेन दुःखिता ॥ १७

नाद्य दैवकृतं किञ्चिन्नराणामिह विद्यते ॥ १७॥

न च मे बालभावेऽपि किञ्चित् पापकृतं कृतम् ।
कर्मणा मनसा वाचा यदिदं दुःखमागतम् ॥ १८॥

मन्ये स्वयंवरकृते लोकपालास्समागताः ।
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः ॥ १९॥

नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम् ॥ २०

बृहदश्वः—

एवमादीनि दुःखार्ता सा विलप्य वराङ्गना ।
हतशेषैस्सह तदा ब्राह्मणैर्वेदपारगैः ॥ २१

अगच्छद्राजशार्दूल दुःखशोकसमन्विता ॥ २१॥

गच्छन्ती सा चिरात् कालात् पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोस्सत्यवादिनः ॥ २२॥

[1]सा तु तच्चारुसर्वाङ्गी सुबाहोस्तुङ्गगोपुरम् ।
वस्त्रार्धकसुसंवीता प्रविवेश पुरोत्तमम् ॥ २३॥

तां विवर्णां कृशां दीनां मलिनाम्बरमूर्धजाम् ।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ॥ २४॥

प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्ततो बाला राजपुत्र्याः कुतूहलात् ॥ २५॥

सा तैः परिवृताऽगच्छत् समीपं राजवेश्मनः ॥ २६
तां प्रासादगताऽपश्यद् राजमाता जनैर्वृताम् ॥ २६॥

सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन् दमयन्तीमपृच्छत ॥ २७॥

राजमाता—

एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे काऽसि कस्य वा ॥ २८॥

न च ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ॥ २९॥

बृहदश्वः—

तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ॥ ३०

---

1. अ-घ—नास्तीदमर्धम्

मानुषा मां विजानीहि भर्तारं मामनुव्रताम् ।
सैरन्ध्रीं जातिसम्पन्नां भुजिष्यां कामवासिनीम् ॥ ३१

फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ।
असङ्ख्येयगुणो भर्ता मां च नित्यमनुव्रतः ॥ ३२

भर्तारं पितरं वीरं छायेवानपगा सदा ॥ ३२॥

[1]स केनचिदमेयात्मा कारणेन वरानने ।
दुःखितस्सर्वमुत्सृज्य प्रविवेश वनं महत् ॥ ३३॥

ततस्तं दुःखितं दृष्ट्वा प्रविशन्तं च काननम् ।
आश्वासयन्ती भर्तारम् अहमन्वगमं तदा ॥ ३४॥

स कदाचित् पुनर्वीरः कस्मिंश्चित् काननान्तरे ।
क्षुत्परीतश्च विमना वासश्चैकं व्यसर्जयत् ॥ ३५॥

तमेकवसना नग्नम् उन्मत्तगतचेतसम् ।
अनुव्रजन्ती बहुला न स्वपामि निशास्सदा ॥ ३६॥

ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्धं परिच्छिद्य त्यक्तवान् मामनागसीम् ॥ ३७॥

---

1. क—तस्य दैवप्रसङ्गोऽभूद् अतिमात्रं हि देवने ।
द्यूते स निर्जितश्चैव वनमेकोऽभ्युपेयिवान् ॥
तमेकवसनं धीरम् उन्मत्त इव विह्वलम् । [ अधिकः पाठः ]
स केनचिदमेयात्मा कारणेन वराङ्गने ।
दुःखितस्सर्वमुत्सृज्य प्रविवेश महावनम् ॥ [पाठान्तरम्]

तं मार्गमाणा भर्तारं दह्यमाना दिनक्षपम् ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणधनेश्वरम् ॥ ३८॥

बृहदश्वः—

इत्युक्त्वा साऽनवद्याङ्गी राजमातरमच्युत ।
स्थिताऽश्रुपरिपूर्णाक्षी वेपमाना सुदुःखिता ॥ ३९॥

तामश्रुपरिपूर्णाक्षीं विलपन्तीमनाथवत् ।
राजमाताऽब्रवीदार्ता भैमीमार्तस्वरा स्वयम् ॥ ४०॥

राजमाता—

वस त्वमिह कल्याणि प्रीतिर्मे त्वयि वर्तते ॥ ४१
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ४१॥

अपि वा स्वयमागच्छेत् परिधावन्नितस्ततः ॥ ४२
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ४२॥

बृहदश्वः—

राजमातुर्वचश्श्रुत्वा दमयन्ती वचोऽब्रवीत् ॥ ४३

दमयन्ती—

[1]समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ।
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ॥ ४४

न चाहं पुरुषानन्यान् प्रभाषेयं कदाचन ।
प्रार्थयेद्यदि मां कश्चिद् दण्ड्यस्ते स पुमान् भवेत् ॥ ४५

---

1. क—भर्तुरन्वेषणार्थं तु यत्नं कर्तुमिहार्हसि । [अधिकः पाठः]

भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ॥ ४५॥

यद्येवमिह वस्तव्यं वत्स्याम्यहमसंशयम् ।
अतोऽन्यथा न मे वासो वर्तते हृदये क्वचित् ॥ ४६॥

बृहदश्वः—

इत्युक्त्वा दमयन्त्या तु राजमातेदमब्रवीत् ॥ ४७

राजमाता—

सर्वमेतत् करिष्यामि दिष्ट्या ते व्रतमीदृशम् ॥ ४७॥

बृहदश्वः—

एवमुक्त्वा ततो भैमीं राजमाता विशां पते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत ॥ ४८॥

राजमाता—

सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ।
एतया सह मोदस्व निरुद्विग्नमनास्स्वयम् ॥ ४९॥

सहसा न्यवसद्राजन् राजपुत्र्या सुनन्दया ।
चिन्तयन्ती नलं वीरम् अनिशं वामलोचना ॥ ५०॥

[1]वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम् ॥ ५१

ततः परमसंहृष्टा सुनन्दा सा मनस्विनी ।
दमयन्तीमुपादाय सखीभिः परिवारिता ॥ ५२

---

1.क —अर्धपञ्चकं नास्ति

सा तत्र पूज्यमाना वै दमयन्त्यावसत्सुखम् ।
सर्वकामैस्समुदिता निरुद्विग्ना ह्यनामया ॥ ५३

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये ५३ श्लोकाः]

## ॥ चतुःपञ्चाशोऽध्यायः ॥

दमयन्तीं परित्यज्याटव्यामटन्तं नलं प्रति वनवह्निवेष्टितेन कर्कोटकेनात्मपरिरक्षणप्रार्थना ॥ १ ॥ नलेन दावाग्नितो मोचितेन कर्कोटकेन नलगात्रे दंशनेन वैरूप्यापादनम् ॥ २ ॥ तथा निजरूपाविष्करणेच्छायां स्मरणेन वासोवसनविधानपूर्वकं वस्त्रप्रदानम् ॥ ३ ॥

बृहदश्वः—

उत्सृज्य दमयन्तीं तु नलो राजा विशां पते ।
ददर्श दावं दह्यन्तं महान्तं विजने वने ॥ १

तत्र शुश्राव मध्येऽग्नेश् शब्दं सत्त्वस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ २

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य सः ।
ददर्श नागराजानं शयानं पर्वतोपमम् ॥ ३

स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।

उवाच विद्धि मां नाम्ना नागं कर्कोटकं नृप ॥ ४

मया प्रलब्धो ब्रह्मर्षिर् अनागास्सुमहातपाः ।
तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ॥ ५

तस्य शापान्न शक्नोमि पदाद्धि चलितुं पदम् ।
उपदेक्ष्यामि ते श्रेयस् त्रातुमिच्छसि चेद्विभो ॥ ६

सखा च ते भविष्यामि मत्समो नास्ति पन्नगः ।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ॥ ७

एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः ।
तं गृहीत्वा नलः प्रायाद् देशं दावविवर्जितम् ॥ ८

आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं नृपतिं नागो वचनमब्रवीत् ॥ ९

कर्कोटकः—

पदानि गणयन् गच्छ स्वानि नैषध कानि तु ।
तत्र तेऽहं महाराज श्रेयो धास्यामि तत्परम् ॥ १०

बृहदश्वः—

ततस्सङ्ख्यातुमारब्धम् अदशद् दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ ११

स दृष्ट्वा विस्मितस्तस्माद् आत्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श स महीपतिः ॥ १२

[1]ततः कर्कोटको नागम् सान्त्वयन्नलमब्रवीत् ॥ १२॥

कर्कोटकः—

मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ।
यत्कृते चासि विकृतो दुःखेन महता नलः ॥ १३॥

विषेण तु मदीयेन दुःखं त्वयि निवत्स्यति ॥ १४

विषेण संवृतैर्गात्रैर् यावत्त्वां न विमोक्ष्यते ।
तावत्स तु महाराज क्लेशेऽस्मिन्न स मोक्ष्यते ॥ १५

अनागा येन निकृतस् त्वमनेन नराधिप ।
क्रोधादसूययित्वा त्वां रक्षा मे भवतः कृता ॥ १६

न ते भयं नरव्याघ्र दंष्ट्रिभ्यश्शत्रुतोऽपि वा ।
ब्रह्मविस्त्वं च भविता मत्प्रसादान्नराधिप ॥ १७

राजन् विषनिमित्ता च न ते पीडा भविष्यति ।
सङ्ग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ १८

गच्छ राजन्नितस्सूदो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम् ॥ १९

अयोध्यां नगरीं रम्याम् अद्यैव निषधाधिप ।
स तेऽक्षहृदयं दाता राजाऽश्वहृदयेन वै ॥ २०

इक्ष्वाकुकुलजश्श्रीमान् मित्रं चैव भविष्यति ।

---

1. घ—ततः कार्कोटकं नागं ददर्श च महीपतिः । [अधिकः पाठः]

भविष्यसि यदाऽक्षज्ञश् श्रेयसा योक्ष्यसे तदा ॥ २१

समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः ।
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते ॥ २२

स्वं रूपं च यदा द्रष्टुम् इच्छेथास्त्वं नराधिप ।
संस्मर्तव्यस्त्वया चाहं वासश्चेदं निवासय ॥ २३

अनेन वाससा च्छन्नस् स्वं रूपं प्रतिपत्स्यसे ॥ २३॥

बृहदश्वः—

इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥ २४

एवं नलं समादिश्य वासो दत्त्वा च कौरव ।
नागराजस्ततो राजंस् तत्रैवान्तरधीयत ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये २५ श्लोकाः]

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

कर्कोटकवचनान्नलेनायोध्यायां बाहुक इति स्वनामनिर्देशपूर्वकमृतुपर्णनृपसमीपोपसर्पणम् ॥ १ ॥ ऋतुपर्णेन तस्य सारथ्ये नियोजनम् ॥ २ ॥

बृहदश्वः—

तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद् दशमेऽहनि ॥ १

स राजानमुपातिष्ठद् बाहुकोऽहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ २

अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ३

यानि शिल्पानि लोकेऽस्मिन् यच्चाप्यन्यैस्सुदुष्करम् ।
सर्वं यतिष्ये तत् कर्तुम् ऋतुपर्ण भरस्व माम् ॥ ४

इत्युक्तस्स नलेनाथ ऋतुपर्णो नराधिपः ।
उवाच सुप्रीतमना नलं प्रेक्ष्य महीपते ॥ ५

ऋतुपर्णः—

वस बाहुक भद्रं ते सर्वमेतत् करिष्यसि ।
शीघ्रयाने सदा बुद्धिर् ध्रियते मे विशेषतः ॥ ६

स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते शतं शतम् ॥ ७

त्वामुपस्थास्यतश्चेमौ नित्यं वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्धं वस वै मम बाहुक ॥ ८

बृहदश्वः—

एवमुक्तो नलस्तेन न्यवसत् तत्र पूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ९

स तत्र निवसन् राजा वैदर्भीमनुचिन्तयन् ।

सायंसायं सदा ह्येनं श्लोकमेकं जगाद ह ॥ १०

नलः—

क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वासायोपतिष्ठते ॥ ११

बृहदश्वः—

एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत् ॥ ११॥

जीवलः—

कामेकां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ॥ १२

बृहदश्वः—

तमुवाच ततो राजा मन्दप्रज्ञस्य कस्यचित् ।
आसीद्बहुमता नारी तस्या दृढतरश्च सः ॥ १३

स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ।
विप्रयुक्तश्च मन्दात्मा भ्रमत्यसुखपीडितः ॥ १४

दह्यमानस्स शोकेन दिवारात्रमतन्द्रितः ।
निशाकाले स्मरंस्तस्याश् श्लोकमेकं स्म गायति ॥ १५

स वै भ्रमन् महीं सर्वां क्वचिन्नासाद्य किञ्चन ।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् ॥ १६

सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
[1]त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति ॥ १७

1. क—अर्धचतुष्टयं नास्ति

एका बालाऽनभिज्ञा च मार्गमाणाऽतथोचिता ।
क्षुत्पिपासापरीता च दुष्करं यदि जीवति ॥ १८

श्वापदाचरिते नित्यं वने महति दारुणे ।
त्यक्ता तेनाल्पपुण्येन मन्दप्रज्ञेन मारिष ॥ १९

इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासमवसद् राज्ञस्तस्य निवेशने ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

## ॥ षट्पञ्चाशोऽध्यायः ॥

भीमराजेन नलदमयन्त्यन्वेषणाय नानादेशेषु ब्राह्मणानां प्रस्थापनम् ॥ १ ॥ सुदेवनाम्ना विप्रेण चेदिराजगृहे दमयन्तीदर्शनम् ॥ २ ॥ विप्रेण सह सबाष्पं भाषमाणां दमयन्तीं दृष्ट्वा राजमात्रा विप्रं प्रति दमयन्तीकुलशीलादिप्रश्नः ॥ ३ ॥ सुदेवेन दमयन्तीतत्त्वं निवेदितया राजमात्रा पिप्लुरूपलाञ्छनेन तत्त्वनिर्धारणपूर्वकं तस्याः पितृपुरं प्रति प्रापणम् ॥ ४ ॥ दमयन्तीप्रेषितैर्विप्रैस्तत्र तत्र नलान्वेषणम् ॥ ५ ॥

बृहदश्वः—

हृतराज्ये नले भीमस् सभार्येऽदर्शनं गते ।
द्विजान् प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ १

सन्दिदेश च तान् भीमो वसु दत्त्वा च पुष्कलम् ॥ १॥

भीमः—

मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ २

अस्मिन् कर्मणि निष्पन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ३

अग्रहारांश्च दास्यामि नद्यास्तीरे द्विजोत्तमाः ।
हिरण्यं च सुवर्णं च दासीदासं तथैव च ॥ ४

न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा ।
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ॥ ५

बृहदश्वः—

इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणास्सर्वतो दिशम् ।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ॥ ६

ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीम् अपश्यद् राजवेश्मनि ॥ ७

कृशां विवर्णां मलिनां भर्तृशोकपरायणाम् ।
पुण्याहवाचने राज्ञस् सुनन्दासहितां स्थिताम् ॥ ८

मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ।
पिनद्धां धूमजालेन प्रभामिव विभावसोः ॥ ९

तां समीक्ष्य विशालाक्षीम् अधिकं मलिनां कृशाम् ।

तर्कयामास भैमीति कारणैरुपपादयन् ॥ १०

सुदेवः—

यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम् ॥ ११

पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्तीं प्रभया तव सर्वा वितिमिरा दिशः ॥ १२

चारुपद्मविशालाक्षीं मन्मथस्येव तां रतिम् ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ १३

विदर्भसरसस्तस्माद् दैवदोषादिवोद्धृताम् ।
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव तां भृशम् ॥ १४

पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ १५

विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् ॥ १६

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १७

रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ॥ १८

कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।

देहं धारयतीं दीनं भर्तृदर्शनकाङ्क्षया ॥ १९

भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा विरहिता तेन शोभमाना न शोभते ॥ २०

दुष्करं कुरुतेऽत्यर्थं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ २१

इमामसितकेशान्तां शतपत्रनिभेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ॥ २२

कदा नु खलु दुःखस्य पारं गच्छति वै शुभा ।
भर्तुस्समागमात् साध्वी रोहिणी शशिनो यथा ॥ २३

अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् ॥ २४

तुल्यशीलवयोरूपां तुल्याभिजनसंयुताम् ।
नैषधोऽर्हति वैदर्भीं तं चेयमसितेक्षणा ॥ २५

युक्तं त्वद्याप्रमेयस्य वीर्यसत्त्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ २६

अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टपूर्वां दुःखस्य दुःखार्तां ध्यानतत्पराम् ॥ २७

बृहदश्वः—

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।

उपगम्य ततो भैमीं सुदेवो वाक्यमब्रवीत् ॥ २८

सुदेवः—

अहं सुदेवो वैदर्भि भ्रातुस्ते दयितस्सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ २९

कुशली ते पिता राजा जननी भ्रातृभिश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते ॥ ३०

त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते ॥ ३०॥

बृहदश्वः—

अभिज्ञाय सुदेवं तु दमयन्ती युधिष्ठिर ।
पर्यपृच्छत तान् सर्वान् क्रमेण सुहृदस्स्वकान् ॥ ३१॥

रुरोद च भृशं राजन् वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ३२॥

रुदन्तीं तां तथा दृष्ट्वा सुनन्दा शोककर्शिता ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ ३३॥

जनित्रीं प्रेषयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन सहागम्य तां विद्धि यदि मन्यसे ॥ ३४॥

अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात् तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ ३५॥

ततस्सुदेवमानाय्य राजमाता विशां पते ।

पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी ॥ ३६॥

कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवंगता सती ॥ ३७॥

एतदिच्छाम्यहं त्वत्तो ज्ञातुं सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ॥ ३८॥

एवमुक्तस्ततो राजन् सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ॥* ३९॥

सुदेवः—

विदर्भराजो [1]धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ ४०॥

राजा तु [2]नैषधश्श्रीमान् सार्वभौमश्च वै नलः ।
[3]वीरसेनसुतस्सोऽपि यदि ते श्रोत्रमागतः ॥ ४१॥

भार्येयं तस्य कल्याणी पुण्यश्लोकस्य विश्रुता ॥ ४२

स वै द्यूते जितो भ्रात्रा हृतराज्यो महामनाः ।
दमयन्त्या [4]च सहितो गतो न ज्ञायते नृपः ॥ ४३

ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव देवि निवेशने ॥ ४४

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क—धृतिमान् श्रीमान् सत्यपराक्रमः

2. क—नैषधो धीमान् वीरसेनसुतो नलः

3. क—नास्तीदमर्धम्

4. क—स्तु यो भर्ता नलो न ज्ञायते नृपम्

तस्या रूपेण सदृशी मानुषी नैव विद्यते ।
अस्याश्चैव भ्रुवोर्मध्ये [1]सहजः पिप्लुरुत्तमः ॥　　४५

श्यामायाः पद्मसङ्काशो लक्षितोऽन्तर्हितो मया ।
मलेन संवृतो ह्यस्याश् छन्नोऽभ्रेणेव चन्द्रमाः ॥　　४६

चिह्नभूतो विभूत्यर्थम् अयं धात्रा विनिर्मितः ।
प्रतिपत्कलुषा चेन्दोर् लेखेव न विराजते ॥　　४७

न चास्या दृश्यते रूपं वपुर्मलसमाचितम् ।
असंस्कृतमपि व्यक्तं भवत्यस्यास्स्वभावतः ॥　　४८

अनेन वपुषा बाला [2]पिप्लुनाऽनेन चैव हि ।
लक्षितेयं मया देवी निहितोऽग्निरिवोष्मणा ॥　　४९

बृहदश्वः—

तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशाम्पते ।
सुनन्दा शोधयामास [2]पिप्लुप्रच्छादनं मलम् ॥　　५०

स मलेनापकृष्टेन [2]पिप्लुस्तस्या व्यरोचत ।
दमयन्त्यास्तथा व्यभ्रे नभसीव दिवाकरः ॥　　५१

[2]पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥　　५२

---

1. घ—सहजो विप्लुड्डुत्तमः　　2. घ—विप्लु

उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ॥ ५२॥

राजमाता—

भगिन्या दुहिता मेऽसि पितुनानेन सूचिता ॥ ५३

अहं तु तव माता च राजन्यस्य महात्मनः ।
सुते दशार्णाधिपतेस् सुदाम्नश्चारुलोचने ॥ ५४

भीमस्य राज्ञस्सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु गृहे पितुः ॥ ५५

यथैव ते पितुर्गेहं तथेदमपि भामिनि ।
यथैव च ममैश्वर्यं दमयन्ति तथा तव ॥ ५६

बृहदश्वः—

सम्प्रहृष्टेन मनसा दमयन्ती विशां पते ।
प्रणम्य मातुर्भगिनीम् इदं वचनमब्रवीत् ॥ ५७

दमयन्ती—

अज्ञायमानाऽपि सती सुखमध्युषितेह वै ।
सर्वकामैस्सुविहिता रक्ष्यमाणा सदा त्वया ॥ ५८

सुखात् सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर् मामनुज्ञातुमर्हसि ॥ ५९

दारकौ चैव मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चापि कथं नु तौ ॥ ६०

यदि वापि प्रियं किञ्चिन् मम कर्तुमिहेच्छसि ।
विदर्भान् यातुमिच्छामि यानं मे शीघ्रमादिश ॥ ६१

बृहदश्वः—

बाढमित्येवमुक्त्वा तां हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ ६२

प्रास्थापयद्राजमाता श्रीमता नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ ६३

ततस्सा न चिरादेव विदर्भानगमच्छुभा ।
तां तु बन्धुजनस्सर्वो वैदर्भीं प्रत्यपूजयत् ॥ ६४

सर्वान् कुशलिनो दृष्ट्वा बान्धवान् दारकौ च तौ ।
मातरं पितरं चोभौ सर्वं चैव सखीजनम् ॥ ६५

देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
विधिनाऽनेन कल्याणी दमयन्ती विशां पते ॥ ६६

अतर्पयत् सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ ६७

सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत्* ॥ ६८

दमयन्ती—

मां चेदिच्छसि जीवन्तीं मातस्सत्यं ब्रवीमि ते ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

नलस्यान्वेषणे यत्नः क्रियतामिति साम्प्रतम् ॥ ६९

बृहदश्वः—

दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेणापिहिता राजन् नोत्तरं किञ्चिदब्रवीत् ॥ ७०

तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद् भृशं तत्र रुरोद ह ॥ ७१

ततो भीमं महाराजं भार्या वचनमब्रवीत् । ७१॥

भार्या—

दमयन्ती तव सुता भर्तारमनुशोचति ।
अपकृष्य च लज्जां मां स्वयमुक्तवती नृप ॥ ७२॥

प्रयतन्तां तव प्रेष्याः पुण्यश्लोकस्य दर्शने ॥ ७३

बृहदश्वः—

तया प्रचोदितो राजा ब्राह्मणान् वशवर्तिनः ।
प्रास्थापयद् दिशस्सर्वा यतध्वं नलदर्शने ॥ ७४

ततो विदर्भाधिपतेर् नियोगाद्ब्राह्मणास्तु ते ।
दमयन्तीमथापृच्छ्य प्रस्थितास्स्मेत्यथाब्रुवन् ॥ ७५

अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूत वै जनसंसत्सु तत्र तत्र पुनःपुनः ॥ ७६

क्वनु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।

उत्सृज्य विपिने सुप्ताम् अनुरक्तां प्रियां प्रिय ॥ ७७

सा वै यथा समादिष्टा तथाऽऽस्ते त्वत्प्रतीक्षणे ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ ७८

तस्या रुदन्त्यास्सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं प्रयच्छ च ॥ ७९

एतदन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ ८०

भर्तव्या रक्षणीया च पत्नी पत्या च सर्वदा ।
तन्नष्टमुभयं कस्माद् धर्मज्ञस्य सतस्तव ॥ ८१

ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च वै सदा ।
संवृत्तो निरनुक्रोशश् शङ्के मद्भाग्यसङ्क्षयात् ॥ ८२

स कुरु त्वं महेष्वास दयां मयि नरोत्तम ।
आनृशंस्यं परो धर्मस् त्वत्त एव श्रुतो मया ॥ ८३

एवं ब्रुवाणान् यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरस्सर्वथा ज्ञेयः कश्चासौ क्व च वर्तते ॥ ८४

यश्च वो वचनं श्रुत्वा ब्रूयात् प्रतिवचो नरः ।
तदादाय वचः क्षिप्रं ममावेद्यं द्विजोत्तमाः ॥ ८५

यथा च वो न जानीयाच् चरतो भीमशासनात् ।

पुनरागमनं चेह तथा कार्यमतन्द्रितैः ॥ ८६

यदि वाऽसौ समृद्धस्स्याद् यदि वाऽप्यधनो भवेत् ।
यदिवाऽप्यर्थकामस्स्याज् ज्ञेयमस्य चिकीर्षितम् ॥ ८७

एवमुक्तास्त्वगच्छंस्ते ब्राह्मणास्सर्वतो दिशम् ।
नलं मृगयितुं राजंस् तदा व्यसनिनं तथा ॥ ८८

ते पुराणि सराष्ट्राणि ग्रामान् घोषांस्तथाऽऽश्रमान् ।
अन्वेषन्तो नलं राजन् नाधिजग्मुर्द्विजातयः ॥ ८९

तच्च वाक्यं तथा सर्वे तत्र तत्र विशां पते ।
श्रावयांचक्रिरे सर्वे दमयन्त्या यथेरितम् ॥ ९०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ९० श्लोकाः]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥

नलान्वेषिणा पर्णादनाम्ना विप्रेण ऋतुपर्णनृपगृहे बाहुकनामनिगूढे नले श्रृण्वति दमयन्तीवचनानुवादः ॥ १ ॥ बाहुकेन विजने पर्णादं प्रति दमयन्तीवचनस्योत्तरदानम् ॥ २ ॥ पर्णादेन विदर्भान् पुनरभ्येत्य दमयन्त्या बाहुकवचननिवेदनम् ॥ ३ ॥ बाहुके नलशङ्किन्या दमयन्त्या प्रेषितेन सुदेवेन अयोध्यां गत्वा ऋतुपर्णं श्वोभूते दमयन्त्या पुनः स्वयंवरो भवितेति कीर्तनम् ॥ ४ ॥ ऋतुपर्णेन दमयन्तीस्वयंवराय बाहुकं सारथ्ये नियोज्य वार्ष्णेयेन सह विदर्भान् प्रति प्रस्थानम् ॥ ५ ॥ वार्ष्णेयेन बाहुके सारथ्यकौशलेन नलत्वसम्भावना ॥ ६ ॥

---

बृहदश्वः—

अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीम् इदं वचनमब्रवीत् ॥ १

पर्णादः—

नैषधं मृगयानेन दमयन्ति दिवानिशम् ।
अयोध्यां नगरीं गत्वा भागस्वरिरुपस्थितः ॥ २

श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३

तच्छ्रुत्वा नाब्रवीत् किञ्चिद् ऋतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद् भाष्यमाणो मयाऽसकृत् ॥ ४

अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५

सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
दीर्घयाने सुकुशलो मृष्टकर्ता च भोजने ॥ ६

स विनिःश्वस्य बहुशो रुदित्वा च मुहुर्मुहुः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७

बाहुकः—

वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितस्वर्गो न संशयः ॥ ८

रहिता भर्तृभिस्साध्व्यो न क्रुद्ध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान् धारयन्तीह सत्स्त्रियः ॥ ९

विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत् सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ १०

प्राणयात्रां परिप्रेप्सोश्श् शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ११

सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं श्यामा न क्रोद्धुमर्हति ॥ १२

पर्णादः—

तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १३

बृहदश्वः—

एवं श्रुत्वाऽश्रुपूर्णाक्षी पर्णादस्य विशां पते ।

दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ १४

दमयन्ती—

अयमर्थो न संवेद्यो भीमे मातः कथञ्चन ।
त्वत्सन्निधौ समादेक्ष्ये सुदेवं द्विजसत्तमम् ॥ १५

यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
तथा त्वया च कर्तव्यं मम चेदिच्छसि प्रियम् ॥ १६

यथा चाहं समानीता सुदेवेनेह [1]बान्धवात् ।
तेनैव मङ्गलेन श्वस् सुदेवो यातु मा चिरम् ॥ १७

समानेतुं नलं मातर् अयोध्यां नगरीं प्रति ।
ऋतुपर्णस्य भवने निवसन्तमरिन्दमम् ॥ १८

बृहदश्वः—

विश्रान्तं तु ततः पश्चात् पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भामिनी ॥ १९
उवाच चैनं महता सम्पूज्य द्रविणेन वै ॥ १९॥

दमयन्ती—

नले चेहागते विप्र भूयो दास्यामि ते वसु ।
त्वया हि मे बहुकृतं यथा नान्यः करिष्यति ॥ २०॥
यद्भर्त्राऽहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ २१

बृहदश्वः—

एवमुक्तोऽर्चयित्वा ताम् आशीर्वादैस्सुमङ्गलैः ।

---

1. क-घ—बान्धवान्

गृहानथ ययौ चापि कृतार्थस्सुमहातपाः ॥ २२

[1]ततस्सुदेवमानाय्य दमयन्ती युधिष्ठिर ।
अब्रवीत् सन्निधौ मातुर् दुःखशोकसमन्विता ॥ २३

दमयन्ती—

गत्वा सुदेव नगरीम् अयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती ॥ २४

आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २५

तथा च गणितः कालश् श्वोभूते स भविष्यति ।
यदि सम्भाविनीयं ते गच्छ शीघ्रमरिन्दम ॥ २६

सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ।
न हि स ज्ञायते वीरो नलो जीवन्मृतोऽपि वा ॥ २७

बृहदश्वः—

एवं तया यथोक्तं वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥* २८

श्रुत्वा वचस्सुदेवस्य ऋतुपर्णो जनाधिपः ।
सान्त्वयञ् श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ २९

ऋतुपर्णः—

विदर्भान् यातुमिच्छामि दमयन्त्यास्स्वयंवरम् ।

1. क—भूयश्चानीय तं विप्रं दमयन्ती युधिष्ठिर । [पाठान्तरम्]

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ ३०

बृहदश्वः—

एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात् प्रदध्यौ च महायशाः ॥ ३१

नलः—

दमयन्ती भवेदेतत् कुर्याद् दुःखेन मोहिता ।
अस्मदर्थं भवेद्वाऽयम् उपायश्चिन्तितो महान् ॥ ३२

नृशंसं सा तु वैदर्भी कर्तुकामा यशस्विनी ।
मया क्षुद्रेण निकृता पापेनाकृतबुद्धिना ॥ ३३

स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ॥ ३३॥

स्यादेवमपि कुर्यात् सा विवशा गतसौहृदा ।
मम दोषेण संविग्ना नैराश्यात् तनुमध्यमा ॥ ३४॥

न चैवं कर्हिचित् कुर्यात् सापत्या च विशेषतः ॥ ३५

यदत्र पथ्यं तथ्यं च गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै कामम् आत्मार्थं च करोम्यहम् ॥ ३६

बृहदश्वः—

इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदम् ऋतुपर्णं नराधिपम् ॥ ३७

बाहुकः—

प्रतिजानामि ते सत्यं गमिष्यसि नराधिप ।

एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ ३८

बृहदश्वः—

ततः परीक्षामश्वानां चक्रे राज्ञस्स बाहुकः ।
अश्वशालामुपागम्य भागस्वरिनृपाज्ञया ॥ ३९

स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अध्यगच्छत् कृशानश्वान समर्थानध्वनि क्षमान् ॥ ४०

तेजोबलसमायुक्तान् कुलशीलसमन्वितान् ।
वर्जितॉंल्लक्षणैर्हीनैः पृथुप्रोथान महाहनून् ॥ ४१

शुभान् दशभिरावर्तैस् सिन्धुजान् वातरंहसः ।
दृश्यमानान कृशानङ्गैर् जवेनाप्रतिमान पथि ॥ ४२

दृष्ट्वा तानब्रवीद्राजा किञ्चित् कोपसमन्वितः ॥ ४२॥

ऋतुपर्णः—

किमिदं प्रार्थितं कर्तुं प्रलब्धव्या हि ते वयम् ॥ ४३

कथमल्पबलप्राणा वक्ष्यन्तीमे हया [1]रथम् ।
महान्तमपि चाध्वानं गन्ताऽहं कथमीदृशैः ॥ ४४

बाहुकः—

एते हया गमिष्यन्ति विदर्भान् नात्र संशयः ।
अथान्यान् मन्यसे राजन् ब्रूहि कान् योजयामि ते ॥ ४५

1. क—मम ; घ—महारथम्

ऋतुपर्णः—

त्वमेव हयतत्त्वज्ञः कुशलश्चासि बाहुक ।
यान् मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ ४६

बृहदश्वः—

ततस्सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान् रथे नलः ॥ ४७

ततो युक्तं रथं राजा समारोहत् त्वरान्वितः ।
अथ पर्यपतन् भूमौ जानुभिस्ते हयोत्तमाः ॥ ४८

ततो नरवरश्श्रीमान् नलो राजा विशां पते ।
सान्त्वयामास तानश्वांस् तेजोबलसमन्वितान् ॥ ४९

रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ॥
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ ५०

ते चोद्यमाना बहुधा बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्ति च ॥ ५१

तथा तु दृष्ट्वा तानश्वान् वहतो वातरंहसः ।
अयोध्याधिपतिश्श्रीमान् विस्मयं परमं ययौ ॥ ५२

रथघोषं च तं श्रुत्वा हयानां ग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ ५३

वार्ष्णेयः—

किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।

तथा हि लक्षणं सम्यग् बाहुके दृश्यते महत् ॥ ५४

शालिहोत्रोऽपि किंनु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं परमं प्राप्तो वपुः परमशोभनम् ॥ ५५

उताहोस्विद्भवेद्राजा नलः परपुरञ्जयः ।
सोऽयं नृपतिरायात इत्येवं समचिन्तयत् ॥ ५६

अथवाऽयं नलाद्वेद विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ ५७

अपि चेदं वचस्तुल्यम् अस्य मन्ये नलस्य च ।
नायं नलो महावीर्यस् तद्विद्यस्तु भविष्यति ॥ ५८

प्रच्छन्ना हि महात्मानश् चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताश् शास्त्रोक्तैश्च निरूपिताः ॥ ५९

भवेत्तु मतिभेदो मे गात्रवैरूप्यकं प्रति ।
प्रमाणात् परिहीनस्तु भवेदिति हि मे मतिः ॥ ६०

[1]वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ६१

बृहदश्वः—

एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ६२

1. अ—अर्धचतुष्टयं नास्ति

ऋतुपर्णस्तु दृष्ट्वैव बाहुकस्य हयज्ञताम् ।
चिन्तयन् मुमुदे वीरस् सहवार्ष्णेयसारथिः ॥ ६३

बलं शौर्यं तथोत्साहं हयसङ्ग्रहणं च तत् ।
परं यत्नं च सम्प्रेक्ष्य परां मुदमवाप सः ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[ अस्मिन्नध्याये ६४ श्लोकाः ]

---

## ॥ अष्टपञ्चाशोऽध्यायः ॥

बाहुकस्य सारथ्यसामर्थ्यविस्मितेन ऋतुपर्णेन तं प्रति पुञ्जीभूतवस्तुपरिसङ्ख्याने स्वीयसामर्थ्यनिवेदनम् ॥ १ ॥ वृक्षशाखास्थपर्णेषु तत्परीक्षया विस्मितेन नलेनाश्वहृदयविद्यादानप्रतिज्ञानेन तदीयाक्षहृदयादिविद्यास्वीकरणम् ॥ २ ॥ ततो नलदेहाद्बहिर्निःसृतेन कलिना नलशापभयात्तस्मै वरदानपूर्वकं विभीतकवृक्षप्रवेशः ॥ ३ ॥

---

बृहदश्वः—

स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १

तथा प्रयाते तु रथे तदा भागस्वरिर्नृपः ।
उत्तरीयमथापश्यद् भ्रष्टं परपुरञ्जयः ॥ २

ततस्स त्वरमाणस्तु पटे निपतिते तदा ।

ग्रहीष्यामीति तं राजन् नलमाह महामनाः ॥ ३

निगृह्णीष्व महाबुद्धे हयानेतान् महाजवान् ।
वार्ष्णेयो यावदेतन्मे पटमानयतामिति ॥ ४

नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो न च शक्यस्त्वया पुनः ॥ ५

एवमुक्तो नलेनाथ तथा भागस्वरिर्नृपः ।
[1]आससाद वने राजन् फलवन्तं विभीतकम् ॥ ६

तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ॥ ६॥

ऋतुपर्णः—

ममापि सूत पश्य त्वं सङ्ख्याने परमं बलम् ॥ ७

सर्वस्सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥ ८

वृक्षेऽस्मिन् यानि पर्णानि फलान्यपि च बाहुक ।
पतितानि च यान्यत्र तत्रैकमधिकं कृतम् ॥ ९

एकपत्राधिकं पत्रं फलमेकं च बाहुक ।
फलकोस्त्यथ पत्राणां द्वयोरपि च शाखयोः ॥ १०

प्रचिनुह्यस्य शाखे द्वे याश्चान्याः प्रतिशाखिकाः ।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ११

1. क—अर्धचतुष्कं नास्ति

बृहदश्वः—

ततो रथादवप्लुत्य राजानं बाहुकोऽब्रवीत् ॥ ११॥

बाहुकः—

परोक्षमिव मे राजन् कत्थसे शत्रुकर्शन ।

अथ ते गणिते राजन् विजानाम्यपरोक्षताम् ॥ १२॥

प्रत्यक्षं ते महाराज गणयिष्ये विभीतकम् ।

अहं हि नाभिजानामि भवेदेवं नवेति च ॥ १३॥

सङ्ख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ।

मुहूर्तमिव वार्ष्णेयो रश्मीन् यच्छतु वाजिनाम् ॥ १४॥

बृहदश्वः—

तमब्रवीन्नृपस्सूतं नायं कालो विलम्बितुम् ।

बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ १५॥

बाहुकः—

प्रतीक्षस्व मुहूर्तं त्वम् अथवा त्वरते भवान् ।

एष [1]याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ १६॥

बृहदश्वः—

अब्रवीदृतुपर्णस्तं सान्त्वयन् कुरुनन्दन ॥ १७

ऋतुपर्णः—

त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक ।

त्वत्कृते यातुमिच्छामि विदर्भान् हयकोविद ॥ १८

---

1. घ—याहि

शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्तुमर्हसि ॥ १८॥

कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान् यदि यात्वाऽद्य सूर्यं दर्शयितासि मे ॥ १९॥

बृहदश्वः—

अथाब्रवीद्बाहुकस्तं सङ्ख्यायेमं विभीतकम् ।
ततो विदर्भान् यास्यामि कुरुष्वेदं वचो मम ॥ २०॥
अकाम इव तं राजा गणयस्वेत्युवाच ह ॥ २१

सोऽवतीर्य रथात् तूर्णं गणयामास वै द्रुतम् ।
ततस्स विस्मयाविष्टो राजानमिदमब्रवीत् ॥ २२

बाहुकः—

गणयित्वा यथोक्तानि तावन्त्येव फलानि तु ।
अत्युद्भुतमिदं राजन् दृष्टवानस्मि ते बलम् ॥ २३
श्रोतुमिच्छामि तां विद्यां ययैतज्ज्ञायते नृप ॥ २३॥

बृहदश्वः—

तमुवाच ततो राजा त्वरितो गमने तदा ॥ २४

ऋतुपर्णः—

विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ २४॥

बृहदश्वः—

बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ २५॥

ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः ॥ २६॥

ऋतुपर्णः—
यथोक्तं वै गृहाणेदम् अक्षाणां हृदयं परम् ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ॥ २७॥

बृहदश्वः—
एवमुक्त्वा ददौ विद्याम् ऋतुपर्णो नलाय वै ॥ २८

तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीव्रं मुखात् स तु समुद्वमन् ॥ २९

कलेस्ततस्तदार्तस्य शापाग्निस्स विनिःसृतः ।
स तेन कर्शितो राजा दीर्घकालमनात्मवान् ॥ ३०

ततो विषाद्विमुक्तात्मा स्वं रूपमकरोत् कलिः ।
तं शप्तुमैच्छत् कुपितो निषधाधिपतिर्नलः ॥ ३१

तमुवाच ततो भीतो वेमपानः कृताञ्जलिः ॥ ३१॥

कलिः—
कोपं संयच्छ नृपते प्रतिदास्यामि ते वरम् ॥ ३२

इन्द्रसेनस्य जननी कुपिता माऽशपत् पुरा ।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ॥ ३३

अवसं त्वयि राजेन्द्र सुदुःखमपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ ३४

ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद् भविष्यति ॥ ३५

न चैषां मानसं किञ्चिच् छारीरं वाचिकं तथा ।
भविष्यति नृणां राजन् कीर्तयिष्यन्ति ये नलम् ॥ ३६

भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ॥ ३६॥

बृहदश्वः—

एवमुक्तो नलो राजा न्ययच्छत् क्रोधमात्मनः ॥ ३७

ततो भीतः कलिः क्षिप्रं प्रविवेश विभीतकम् ॥ ३७॥

कलिस्त्वन्यैः सोऽदृश्यः कथयन्नैषधेन वै ॥ ३८

ततो गतज्वरो राजा नैषधः परवीरहा ।
सम्प्रनष्टे कलौ राजा संख्यायाथ फलान्युत ॥ ३९

मुदा परमया युक्तस् तेजसाऽथ परेण च ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ४०

विभीतकश्चाप्रशस्तस् संवृत्तः कलिसंश्रयात् ॥ ४०॥

हयोत्तमानुत्पततो द्विजानिव पुनःपुनः ।
नलस्सञ्चोदयामास प्रहृष्टेनान्तरात्मना ॥ ४१॥

विदर्भाभिमुखो राजा प्रययौ स महायशाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहान ॥ ४२॥

ततो गतज्वरो राजा नलो वै पृथिवीपतिः ।
विमुक्तः कलिना राजन् रूपमात्रवियोजितः ॥ ४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ४३॥ श्लोकाः]

## ॥ एकोनषष्टितमोऽध्यायः ॥

ऋतुपर्णे कुण्डिनपुरं प्रविष्टे तद्रथघोषश्रवणेन दमयन्त्या तत्सारथौ नलसम्भावना ॥ १ ॥ ततस्तत्त्वजिज्ञासया नलं प्रति दूत्याः प्रस्थापनम् ॥ २॥

बृहदश्वः—

ततो विदर्भान् सम्प्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राजन् भीमाय प्रत्यवेदयन् ॥ १

स भीमवचनाद्राजा कुण्डिनं प्राविशत् पुरीम् ।
नादयन् रथघोषेण सर्वाश्चाथ दिशो दश ॥ २

ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा च समहृष्यन्त पुरेव नलसन्निधौ ॥ ३

दमयन्ती च शुश्राव रथघोषं नलस्य वै ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४

परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम् ।

नलेन सङ्गृहीतेषु पुरेव नलवाजिषु ॥ ५

सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ॥ ५॥

प्रासादस्थाश्च शिखिनश् शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः ॥ ६॥

तच्छ्रुत्वा रथनिर्घोषं वारणाश्शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन् मेघनादमवेक्ष्य वा ॥ ७॥

दमयन्ती—

यथैव रथनिर्घोषः पूरयन्निव मेदिनीम् ।
ममाह्लादयते चेतो नल एष महीपतिः ॥ ८॥

अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।
असङ्ख्येयगुणं वीरं विनशिष्याम्यसंशयम् ॥ ९॥

[1]यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं विनशिष्याम्यसंशयम् ॥ १०॥

यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ११॥

यदि मां सिंहविक्रान्तो मत्तवारणवारणः ।
नाभिगच्छति राजेन्द्रो विनशिष्याम्यसंशयम् ॥ १२॥

न स्मराम्यनृतं किञ्चिन् न स्मराम्यनुपाकृतम् ।

---

1. अ—अर्धचतुष्टयं नास्ति

न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः ॥ १३॥

प्रभुः क्षमावान् वीरश्च मृदुर्दान्तो जितेन्द्रियः ।
अहो नीचानुवर्ती च क्लीबवन्मम नैषधः ॥ १४॥

गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात् प्रियविनाकृतम् ॥ १५॥

बृहदश्वः—

एवं विलपमाना सा नष्टसंज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ १६॥

ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सवार्ष्णेयं सबाहुकम् ॥ १७॥

ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामासतू रथम् ॥ १८॥

सोऽवतीर्य रथोपस्थाद् ऋतुपर्णो नराधिपः ।
उपतस्थे महाराजं भीमं भीमपराक्रमम् ॥ १९॥

तं भीमः प्रतिजग्राह पूजया परया ततः ।
अकस्मात् सहसा प्राप्तं स्त्रीमन्त्रं नाभ्यविन्दत ॥ २०॥

किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टश्च भारत ।
नाभिजज्ञे स नृपतिर् दुहित्रर्थे समागतम् ॥ २१॥

ऋतुपर्णोऽपि राजा स धीमान् सत्यपराक्रमः ।

राजानं राजपुत्रं वा न स्म पश्यति कञ्चन ॥ २२॥
नैव स्वयंवरकथां न च विप्रसमागमम् ।
ततोऽभ्यगणयद्राजा मनसा कोसलाधिपः ॥ २३॥
आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः ॥ २४
राजापि च स्वयं भीमो मनसाऽभिव्यचिन्तयत् ।
अधिकं योजनशतं तस्यागमनकारणम् ॥ २५
ग्रामान् बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ॥ २५॥
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ।
नैतदेवं स नृपतिम् तं सत्कृत्य व्यसर्जयत् ॥ २६॥
विश्राम्यतामिति तदा श्रान्तोऽसीति पुनःपुनः ।
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ॥ २७॥
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ २८
ऋतुपर्णे गते राजा वार्ष्णेयसहिते नृपे ।
बाहुको रथमादाय रथशालामुपागमत् ॥ २९
स मोचयित्वा तानश्वान् प्रतिपाल्य च शास्त्रतः ।
स्वयं चैतान् समाश्वास्य रथोपस्थ उपाविशत् ॥ ३०
दमयन्ती तु शोकार्ता दृष्ट्वा भागस्वरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ ३१
चिन्तयामास वैदर्भी कस्यैष रथनिःस्वनः ।

नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ ३२

वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनास्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३३

आहोस्विदृतुपर्णोऽपि यथा राजा नलस्तथा ।
तथाऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३४

एवं च तर्कयित्वा तु दमयन्ती विशां पते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे नृप ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ ३२ ॥ तीर्थयात्रापर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ३५ श्लोकाः]

---

## ॥ षष्टितमोऽध्यायः ॥

दमयन्तीप्रेषितया केशिन्या बाहुकेन सम्भाष्य (दमयन्त्यै सम्भाषण-कालिकबाहुकविकारादिनिवेदनम् ॥१॥ केशिन्या बाहुकस्य जलाग्न्युत्पाद-नाद्यद्भुतकर्मनिवेदितया दमयन्त्या पुनः परीक्षणाय तं प्रति कन्यापुत्रयोः प्रेषणम् ॥ २ ॥ बाहुकेन सबाष्पं (पुत्रयोः परिरम्भणं केशिनीं प्रति स्वकर्मणः कारणान्तरकथनेनापह्नवश्च ॥ ३ ॥

---

दमयन्ती—
गच्छ केशिनि जानीहि क एष रथसारथिः ।
उपविष्टो रथोपस्थे ह्रस्वो विकृतबाहुकः ॥ १

अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं याथातथ्यमनिन्दिते ॥ २

अत्र मे महती शङ्का भवेदेष नलो नृपः ।
तथा हि मनसस्तुष्टिर् हृदयस्य च निर्वृतिः ॥ ३

ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुद्ध्येथास्त्वमनिन्दिते ॥ ४

बृहदश्वः—

एवं समाहिता गत्वा दूती वाक्यमथाब्रवीत् । ४॥
दमयन्त्यपि कल्याणी प्रासादस्थाऽन्ववैक्षत ॥ ५

केशिनी—

स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचस्सौम्य निबोध भरतर्षभ ॥ ६

कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ७

बाहुकः—

श्रुतस्स्वयंवरो राज्ञा कौसलेन यशस्विना ।
द्वितीयो दमयन्त्या वै श्वोभूत इति भामिनि ॥ ८

श्रुत्वा तं प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैर् अहमस्य च सारथिः ॥ ९

केशिनी—

अथ योऽसौ तृतीयो वस् स कुतः कस्य वा पुनः ।
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ॥ १०

बाहुकः—

पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले विद्रुते भद्रे भागस्वरिमुपस्थितः ॥ ११

अहमप्यन्नकुशलस् सूतत्वे चापि निष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च घृतस्स्वयम् ॥ १२

केशिनी—

अथ जानाति वार्ष्णेयः क्नु राजा नलो गतः ।
कथं च त्वयि वै तेन कथितं स्यात् तु बाहुक ॥ १३

बाहुकः—

इहैव पुत्रौ निक्षिप्य नलस्य शुभकर्मणः ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ १४

न चान्यः पुरुषः कश्चिन् नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेऽस्मिन् नष्टरूपो महीपतिः ॥ १५

आत्मैव तु नलं वेत्ति या [1]च सा तदनन्तरा ।
न हि वै तानि लिङ्गानि नलं शंसन्ति कर्हिचित् ॥ १६

केशिनी—

योऽसावयोध्यां प्रथमं गतवान् ब्राह्मणस्तदा ।

---

1. घ—चास्या

इमानि नारीवाक्यानि कथयानः पुनःपुनः ॥ १७
कनु त्वं कितवच्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्ताम् अनुरक्तां प्रियां प्रिय ॥ १८
सा वै यथा समादिष्टा तत्राऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना दिवा रात्रौ वस्त्रार्धेनाभिसंवृता ॥ १९
तस्या रुदन्त्यास्सततं तेन दुःखेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं प्रयच्छ च ॥ २०
तस्यास्तत्प्रियमाख्यातुं प्रब्रवीहि महामते ।
तदेव वाक्यं वैदर्भी श्रोतुमिच्छन्त्यनिन्दिता ॥ २१
एतच्छ्रुत्वा प्रतिवचस् तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ २२

बृहदश्वः—

एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीद् अश्रुपूर्णे च लोचने ॥ २३
स निगृह्य मनोदुःखं दह्यमानो महीपतिः ।
बाष्पसन्दिग्धया वाचा पुनरेवेदमब्रवीत् ॥ २४

बाहुकः—

वैषम्यमपि सम्प्राप्ता गोपायन्ति कुलस्त्रियः ।
[1]आत्मानमात्मना सत्यो जितस्स्वर्गो न संशयः ॥ २५

1. अ–घ—अर्धद्वयं नास्ति

रहिता भर्तृभिश्चापि न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान् धारयन्तीह सत्स्त्रियः ॥ २६

विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत् सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ २७

प्राणयात्रां परिप्रेप्सोश् शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ २८

सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ २९

बृहदश्वः—

एवं ब्रुवाणस्तद्वाक्यं नलः परमदुःखितः ।
न बाष्पमशकत् सोढुं प्ररुरोद च भारत ॥ ३०

ततस्सा केशिनी गत्वा [1]दमयन्त्यै न्यवेदयत् ।
तत् सर्वं कथितं चैव विकारं चैव भामिनी ॥* ३१

बृहदश्वः—

दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ ३२

दमयन्ती—

गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ ३३

---

1. अ—दमयन्तीं

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यदा च किञ्चित् कुर्यात् स कारणं तत्र भामिनि ।
तत्र सञ्चेष्टमानस्य संलक्षेथा विचेष्टितम् ॥ ३४

न चास्य प्रतिबन्धेन देयोऽग्निरपि भामिनि ।
याचते न जलं देयं सम्यगत्वरमाणया ॥ ३५

एतत् सर्वं समीक्ष्य त्वं चरितं मे निवेदय ।
यच्चान्यदपि पश्येथास् तच्चाख्येयं त्वया मम ॥ ३६

बृहदश्वः—
दमयन्त्यैवमुक्ता सा जगामाथाशु केशिनी ।
निशाम्य च हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ३७

सा तत् सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
[1]निमित्तं यत्तदादिष्टं बाहुके दिव्यमानुषम् ॥ ३८

केशिनी—
दृढं [2]शुच्यपचारोऽसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वश्श्रुतो वाऽपि दमयन्ति तथाविधः ॥ ३९

ह्रस्वमासाद्य सञ्चारं नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गम् उत्सर्पति यथासुखम् ॥ ४०

सङ्कटेऽप्यस्य सुमहद् विवरं कुरुतेऽधिकम् ॥ ४०॥

ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।

---

1. क—यन्निमित्तं तदा दृष्टं ; घ—निमित्तं यत्तदा दृष्टं
2. क—सुव्यपचारोऽसौ

प्रेषितं तत्र चाज्ञाय मांसं सुबहु पेशलम् ॥ ४१॥

तस्य प्रक्षालनार्थाय कुम्भस्तत्रोपकल्पितः ।
स तेनावेक्षितः कुम्भः पूर्ण एवाभवत् तदा ॥ ४२॥

ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय आविध्यैनं समादधत् ॥ ४३॥

अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ॥ ४४

एतान्यद्भुतरूपाणि दृष्ट्वाऽहं भृशविस्मिता ।
चेष्टितानि विशालाक्षि बाहुकस्य [1]विशेषतः ॥ ४५
तमद्भुततमं दृष्ट्वा विस्मिताऽहमिहागता ॥ ४५॥

अन्यच्च तस्मिन् सुमहद् आश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैव दह्यत्यसौ शुभे ॥ ४६॥

छन्देनैवोदकं तस्य भवत्यावार्जितं ध्रुवम् ॥ ४७
अतीव चान्यत् सुमहद् आश्चर्यं दृष्टवत्यहम् ॥ ४७॥

यत् स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पुष्पाणि पाणिभ्यां तेन भामिनि ॥ ४८॥

भूय एव सुगन्धीनि हृषितानि भवन्ति च ॥ ४९

बृहदश्वः—
दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।

---

1. क-ख—समीपतः

अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ ५०

सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम् ।
केशिनीं श्लक्ष्णया वाचा रुदन्ती पुनरब्रवीत् ॥ ५१

दमयन्ती—

पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छृतं मांसं समादायैहि भामिनि ॥ ५२

बृहदश्वः—

सा गत्वा बाहुके व्यग्रे तन्मांसमुपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणं प्रियकारिणी ॥ ५३

दमयन्त्यै ततः प्रादात् केशिनी कुरुनन्दन ॥ ५३॥

साऽशिता नलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूतं प्राक्रोशद् भृशदुःखिता ॥ ५४॥

वैक्लब्यं परमं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत ॥ ५५॥

इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत् ॥ ५६॥

बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह ॥ ५७॥

नैषधो दर्शयित्वाऽथ विकारमसकृत् तदा ।

उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ ५८॥

बाहुकः—

इदं सुसदृशं भद्रे मिथुनं मम पुत्रयोः ।
अतो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ ५९॥

बहुशस्सम्पतन्तीं त्वां जनश्शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे नमोऽस्तु ते ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अस्मिन्नध्याये ६०॥ श्लोकाः]

---

## ॥ एकषष्टितमोऽध्यायः ॥

दमयन्त्या बाहुकस्य केशिन्या स्वगृहानयनम् ॥ १ ॥ बाहुकदमयन्त्योः संवादः ॥ २ ॥ बाहुकेन स्वस्य नलत्वोत्कीर्तनपूर्वकं कर्कोटकानुस्मरणेन तद्दत्तवस्त्रद्वयपरिधाने तस्य निजरूपप्रादुर्भावः ॥ ३ ॥ ततो नलं प्रत्यभिजानन्त्या दमयन्त्या तत्परिरम्भणम् ॥ ४ ॥

---

बृहदश्वः—

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ १

दमयन्ती [1]ततो भूयः प्रेषयामास केशिनीम् ।

---

1. व—तदा

मातुस्सकाशं दुःखार्ता नलशङ्कासमुत्सुका ॥ २

दमयन्ती—

परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपेण संशयस्त्वेकस् स्वयमिच्छामि वेदितुम् ॥ ३

स वा प्रवेश्यतां मातर् मां वाऽनुज्ञातुमर्हसि ।
विदितं वाऽथवाऽज्ञातं पितुर्मे संविधीयताम् ॥ ४

बृहदश्वः—

एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायम् अन्वजानाच्च पार्थिवः ॥ ५

सा वै पित्राऽभ्यनुज्ञाता मात्रा च कुरुनन्दन ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ६

तं तु दृष्ट्वा तथा युक्तं दमयन्ती नलं तथा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ७

[1]ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ८

दमयन्ती—

दृष्टपूर्वस्त्वया कश्चिद् धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः [2]पुरुषस्स्त्रियम् ॥ ९

अनागसीं प्रियां भार्यां विपिने शोकमोहिताम् ।

---

1. अ-घ—नास्तीदमर्धम् 2. घ—पुरतः

अपहाय तु को गच्छेत् पुण्यश्लोकादृते नलात् ॥ १०

किंनु तस्य मया कार्यम् अपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रया हृताम ॥ ११

साक्षाद्देवानपाहाय वृतो यस्स मया [1]किल ।
अनुव्रतामभिमतां पुत्रिणीं त्यक्तवान् कथम् ॥ १२

अग्नौ पाणिगृहीतां च हंसानां वचने स्थिताम् ।
भरिष्यामीति सत्यं च प्रतिश्रुत्य क्व तद्गतम् ॥ १३

बृहदश्वः—

दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिन्दम ।
शोकजं वारि नेत्राभ्याम् [2]असुखं प्रास्रवद्बहु ॥ १४

अतीव कृष्णताराभ्यां रक्ताभ्यां सलिलं तु तत् ।
परिस्रवन्नलो दृष्ट्वा शोकार्त इदमब्रवीत् ॥ १५

बाहुकः—

मम राज्यं प्रनष्टं यन्नाहं तत् कृतवान् स्वयम् ।
कलिना तु कृतं भीरु यच्च त्वामहमत्यजम् ॥ १६

त्वया तु धर्मकृच्छ्रे तु शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मां विवाससम् ॥ १७

स मच्छरीरे त्वच्छापाद् दह्यमानोऽवसत् कलिः ।
त्वच्छापदग्धस्सततम् अग्नाविव समाहितः ॥ १८

---

1. क-ख—पुरा　　2. घ—असकृत्

मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि शोभने ॥ १९

विमुच्य मां गतः पापस् ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत् प्रयोजनम् ॥ २०

कथं नु नारी भर्तारम् अनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ २१

दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी [1]किलाद्य भर्तारं द्वितीयं वरयिष्यति ॥ २२

स्वैरवृत्त्या यथाकामम् अनुरूपमिवात्मनः ॥ २२॥
श्रुत्वैव चैवं त्वरितो भागस्वरिरुपस्थितः ॥ २३

बृहदश्वः—

दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥* २४

दमयन्ती—

न मामर्हसि कल्याण पापेन परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ २५

तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर् गायमाना दिशो दश ॥ २६

---

1. घ—किल सुभर्तारं

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

ततस्त्वां ब्राह्मणो विद्वान् पर्णादो नाम पार्थिव ।
अभ्यगच्छत् कोसलायाम् ऋतुपर्णनिवेशने ॥ २७

तेन वाक्ये हृते सम्यक् प्रतिवाक्ये तथा हृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव ॥ २८

त्वद्दृते न हि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ २९

तथाच मां महीपाल भजेतां चरणौ तव ।
यथा नासम्मतं किञ्चिन् मनसाऽपि चराम्यहम् ॥ ३०

चन्द्रमास्सर्वभूतानाम् अन्तश्चरति साक्षिवत् ।
स विमुञ्चतु मे प्राणान् यदि पापं चराम्यहम् ॥ ३१

तथा चरति तिग्मांशुः करेण भुवनं सदा ।
स विमुञ्चतु मे प्राणान् यदि पापं चराम्यहम् ॥ ३२

अयं चरति लोकेऽस्मिन् भूतसाक्षी सदागतिः ।
स विमुञ्चतु मे प्राणान् यदि पापं चराम्यहम् ॥ ३३

एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथा सत्यम् एतद्देवास्त्यजन्तु माम् ॥ ३४

बृहदश्वः—

एवमुक्ते ततो वायुर् अन्तरिक्षादभाषत ॥ ३४॥

वायुः—

नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ।

राजञ्शीलनिधिस्स्फीतो दमयन्त्या सुरक्षितः ॥ ३५॥

साक्षिणो रक्षिणश्चास्या वयं त्रीन् परिवत्सरान् ॥ ३६

उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।

न ह्येकाह्ना शतं गन्ता त्वदृतेऽन्यः पुमानिति ॥ ३७

उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।

नात्र शङ्का त्वया कार्या सङ्गच्छ सह भार्यया ॥ ३८

बृहदश्वः—

तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।

देवदुन्दुभयो नेदुर् ववौ च पवनश्शुभः ॥ ३९

तदद्भुततमं दृष्ट्वा नलो राजाऽथ भारत ।

दमयन्त्यां विशङ्कां तां व्यपाकर्षदरिन्दमः ॥ ४०

ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।

संस्मृत्य नागराजं तु ततो लेभे वपुस्स्वकम् ॥ ४१

स्वरूपेण तु भर्तारं दृष्ट्वा भीमसुता ततः ।

प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ ४२

भैमीमपि नलो राजा भ्राजमानो यथापुरम् ।

सस्वजे स्वसुतौ चापि यथावत् प्रत्यनन्दत ॥ ४३

ततस्स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।

परिश्रान्तेव दुःखेन निशश्वासायतेक्षणा ॥ ४४

तथैव मलदिग्धाङ्गी परिष्वज्य शुचिस्मिता ।
सुचिरं पुरुषव्याघ्रं तस्थौ [1]शोकपरिप्लुता ॥ ४५
ततस्सर्वं यथावृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत् प्रीत्या वैदर्भ्या जननी नृप ॥ ४६
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं काल्यं [2]द्रष्टा सुखोषितम् ॥ ४७
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वम् ऊषतुर्मुदितौ नृप ॥ ४८
स चतुर्थे ततो वर्षे सङ्गम्य सह भार्यया ।
सर्वकामसमृद्धार्थो लब्धवान् परमां मुदम् ॥ ४९
दमयन्त्यपि भर्तारम् अवाप्याप्यायिता भृशम् ।
अर्धसञ्जातसस्येव तोयं प्राप्य वसुन्धरा ॥ ५०

सैवं समेत्य व्यपनीततन्द्री
शान्तज्वरा हर्षविवृद्धसत्त्वा ।
रराज भैमी समवाप्तकामा
शीतांशुना रात्रिरिवोदितेन ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ५१ श्लोकाः ]

---

1. घ—साऽश्रुपरिप्लुता 2. अ-क-ख-घ—द्रष्टा

## ॥ द्विषष्टितमोऽध्यायः ॥

परेद्युः प्रभाते भीमराजेन स्नातालङ्कृतयोर्नलदमयन्त्योर्दर्शनम् ॥१॥ ऋतुपर्णेन नलं क्षमापयित्वा ततोऽश्वविद्यापरिग्रहणपूर्वकं स्वपुरं प्रति गमनम् ॥ २ ॥

बृहदश्वः—

अथ तां व्युषितो रात्रिं नलो राजा विशां पते ।
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ १

ततोऽभिवादयामास प्रणतश्श्वशुरं नलः ।
तस्यानु दमयन्ती च ववन्दे पितरं शुभा ॥ २

तं भीमः प्रतिजग्राह पुत्रवत् परया मुदा ।
[1]यथार्हं पूजयित्वा तु समाश्वासयत प्रभुः ॥ ३

नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ।
अनुजग्राह महता सत्कारेण क्षितीश्वरः ॥ ४

तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत् प्रत्यवेदयत् ॥ ५

ततो बभूव नगरे सुमहान् हर्षनिःस्वनः ।
जनस्य सम्प्रहृष्टस्य नलं दृष्ट्वा तथाऽऽगतम् ॥ ६

अशोभयच्च नगरीं पताकाध्वजमालिनीम् ।

1. घ—तं पूजयित्वा तु नलं

सिक्तास्सुमृष्टपुष्पाढ्या राजमार्गास्तथाकृताः ॥ ७

द्वारिद्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः ।
अर्चितानि च सर्वाणि दैवतानि च भारत ॥ ८

ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च परन्तपः ॥ ९

तमानाय्य नलं राजा क्षमयामास पार्थिवः ।
स च तं क्षमयामास हेतुभिर्बुद्धिसत्तमः ॥ १०

स सत्कृतो महीपालो नैषधं विस्मिताननः ।
दिष्ट्या समेतो दारैस्त्वम् [1]इत्युवाच नलं नृपः ॥ ११

कच्चित् तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासं वसतो मद्गृहे निषधाधिप ॥ १२

यदि वाऽबुद्धिपूर्वाणि यदि बुद्ध्याऽपि कर्हिचित् ।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ १३

नलः—

न मेऽपराधं कृतवांस् त्वं स्वल्पमपि पार्थिव ।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १४

पूर्वं ह्यपि सखा चाऽसि सम्बन्धी च नराधिप ।
अत ऊर्ध्वं च भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ १५

1. अ-ख-घ—इत्युक्त्वा वचनं नलम्

सर्वकामैस्सुविहितम् सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन् यथा तव गृहे सदा ॥ १६

इदं चैव हयज्ञानं त्वदीयं मम तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १७

बृहदश्वः—

एवमुक्त्वा ददौ विद्याम् ऋतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १८

ततो गृह्याश्वहृदयं प्रीतो भागस्वरिर्नृप ।
सूतमन्यमुपादाय प्रययौ स्वां पुरीं प्रति ॥ १९

ऋतुपर्णे प्रतिगते नलो राजा विशां पते ।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ अस्मिन्नध्याये २० श्लोकाः ]

## ॥ त्रिषष्टितमोऽध्यायः ॥

नलेन पुनः स्वपुरं प्रत्यागमनम् ॥ १ ॥ तथा पुनर्द्यूतेन पुष्करं पराजित्य तस्य तत्पुरं प्रति यापनम् ॥ २ ॥ पुष्करं निष्कासितवता नलेन कुण्डिनपुरात् सपुत्राया दमयन्त्या आनयनपूर्वकं प्रजापालनेन सुखवासः ॥ ३ ॥ बृहदश्वेन युधिष्ठिरायाक्षहृदयविद्योपदेशं कृत्वा पाण्डवान् सर्वानामान्त्र्य गमनम् ॥ ४ ॥

बृहदश्वः—

स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः ।
पुरादल्पपरीवारो जगाम निषधान् प्रति ॥ १

रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चापि षट्शतैश्च पदातिभिः ॥ २

स कम्पयन्निव महीं त्वरमाणो महीपतिः ।
प्रविवेशाथ संरब्धस् तरसैव महामनाः ॥ ३

ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर् बहुवित्तं मयाऽऽर्जितम् ॥ ४

दमयन्ती च यच्चान्यन् मया वसु समार्जितम् ।
एष वै मम संन्यासस् तव राज्यं तु पुष्कर ॥ ५

पुनः प्रवर्ततां द्यूतम् इति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते [1]पणयोश्च पणावहे ॥ ६

1. व—पाणयोश्च

जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
[1]प्रतिपाणः प्रदातव्यः परं हि धनमुच्यते ॥ ७

न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनापि वै शान्तिस् तव वा मम वा नृप ॥ ८

वंशभोज्यमिदं राज्यम् आस्थितव्यं यथातथम् ।
येनकेनाप्युपायेन वृद्धानामिति शासनम् ॥ ९

द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नम्यतां धनुः ॥ १०

नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह नृपतिं तदा ॥ ११

पुष्करः—

दिष्ट्या त्वयाऽऽर्जितं द्रव्यं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् ॥ १२

दिष्ट्या वै प्रीयसे राजन् सदारोऽरिनिबर्हण: ।
पुनर्द्यूते च ते बुद्धिर् दिष्ट्या पुरुषसत्तम ॥ १३

जितेनानेन वैदर्भी यत्नेन समलङ्कृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रं शची यथा ॥ १४

नित्यशो हि स्मरामि त्वां प्रतीक्षामि च नैषध ।

1. घ—प्रतिपाणं हि दातव्यं

देवने च मम प्रीतिर् न भवत्यसुहृद्गणैः ॥ १५

जित्वाऽद्यैव वरारोहां दमयन्तीमनिन्दिताम् ।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि ॥ १६

बृहदश्वः—

श्रुत्वा तु तस्य तां वाचं बहुबद्धप्रलापिताम् ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ १७
स्मयंस्तु रोषताम्राक्षो वचनं तमुवाच सः ॥ १७॥

नलः—

पणावः किं व्याहरसे जितो न व्याहरिष्यसि ॥ १८

बृहदश्वः—

ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन भद्रं ते नलेन स पराजितः ॥ १९
सरत्नकोशनिचयः [1]पणेन पणितोऽपि च ॥ १९॥
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ॥ २०

नलः—

मम सर्वमिदं राज्यम् अव्यग्रं हतकण्टकम् ।
वैदर्भी न त्वया शक्या राजापशद वीक्षितुम् ॥ २१
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ २१॥

न तत् त्वया कृतं कर्म येनाहं विजितस्त्वया ।
कलिना तत् कृतं कर्म त्वं च मूढ न बुध्यसे ॥ २२॥

---

1. घ—पाणेन

नाहं परकृतं दोषं त्वय्या[1]दास्ये कथञ्चन ।
यथासुखं वै त्वं जीव प्राणानवसृजामि ते ॥ २३॥

तथैव च मम प्रीतिस् त्वयि वीर न संशयः ।
सौभ्रात्रं चैव मे त्वत्तो न कदाचित् प्रहास्यति ॥ २४॥

पुष्कर त्वं हि मे भ्राता सञ्जीव त्वं शतं समाः ॥ २५

बृहदश्वः—

एवं नलस्सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
पुष्करं क्षमयामास सान्त्वयित्वा पुनःपुनः ॥ २६

सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच ह ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २७

पुष्करः—

कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरसि प्राणान् अधिष्ठानं च पार्थिव ॥ २८

बृहदश्वः—

स तथा सान्त्वितो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ स्वपुरीं हृष्टः पुष्करस्स्वजनावृतः ॥ २९

महत्या सेनया सार्धं विनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुष्मान् कुरुनन्दन ॥ ३०

प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।

1. घ—धसये

प्रविवेश पुरं रम्यम् अत्यर्थमुपशोभितम् ॥ ३१

प्रविश्य सान्त्वयामास पौरान् स निषधाधिपः ।
हितेषु चैषां सततं पितेवावहितोऽभवत् ॥* ३२

बृहदश्वः—

प्रशान्ते तु पुरे हृष्टो वसन् हृष्टमहोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ ३३

पुण्यश्लोकं तु राज्यस्थं श्रुत्वा भीमो महीपतिः ।
मुदा परमया युक्तो बभूव भरतर्षभ ॥ ३४

अथ हृष्टमना राजा महत्या सेनया सह ।
सुतां प्रस्थापयामास पुण्यश्लोकाय धीमते ॥ ३५

दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ ३६

आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ३७

तथा प्रकाशतां यातो जम्बूद्वीपेषु राजसु ।
पुनस्स्वे न्यवसद्राज्ये प्रत्याहृत्य महायशाः ॥ ३८

ईजे च विविधैर्यज्ञैर् विधिवत् स्वाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसेऽचिरात् ॥ ३९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

दुःखमेतादृशं प्राप्तो नलः परपुरञ्जयः ।
देवनेन नृपश्रेष्ठ सभार्यो भरतर्षभ ॥　　४०

एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥　　४१

त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।
रमसेऽस्मिन् महारण्ये धर्ममेवानुचिन्तयन् ॥　　४२

ब्राह्मणैश्च महाभागैर् वेदवेदाङ्गपारगैः ।
नित्यमन्वास्यसे राजंस् तत्र का परिदेवना ॥　　४३

इतिहासमिमं चापि कलिनाशनमुच्यते ॥　　४३॥

शक्य[1]माश्वसितुं श्रुत्वा त्वद्विधेन विशां पते ।
अस्थिरत्वं च सञ्चिन्त्य पुरुषार्थस्य नित्यदा ॥　　४४॥

तस्यापाये व्यये चैव तदाश्वासितुमर्हसि ॥　　४५

ये चैतत् कथयिष्यन्ति नलस्य चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान् [2]भजिष्यति ॥　　४६

अर्थाश्चास्योपपद्यन्ते धन्यतां च गमिष्यति ॥　　४६॥

इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ।
पुत्रान् पौत्रान् पशूंश्चैव वेत्स्यते नृषु चाग्र्यताम् ॥　　४७॥

---

1. अ-ख—माश्वासितं　घ—माश्वासिताः
2. अ-क-ख—भविष्यति

अरोगाः प्रीतिमन्तश्च भविष्यन्ति न संशयः ॥ ४८

भयं पश्यसि यच्च त्वम् आह्वयिष्यति मां पुनः ।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ ४९

वेदाक्षहृदयं कृत्स्नम अहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ ५०

वैशम्पायनः—

ततो हृष्टमना राजा बृहदश्वमुवाच ह ॥ ५०॥

युधिष्ठिरः—

भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ ५१

वैशम्पायनः—

ततोऽक्षहृदयं प्रादात् पाण्डवाय महात्मने ।
लब्ध्वा च पाण्डवो राजा विशोकस्समपद्यत ॥ ५२

कथामेवं तथा कृत्वा नलस्य चरिताश्रयाम ।
आमन्त्र्य पाण्डवान् सर्वान् बृहदश्वो जगाम ह ॥ ५३

बृहदश्वे गते पार्थम अश्रौषीत् सव्यसाचिनम् ।
वर्तमानं तपस्युग्रे वायुभक्षं महर्षिणम ॥ ५४

ब्राह्मणेभ्यस्तपस्विभ्यस् सम्पतद्भ्यस्ततस्ततः ।
तीर्थशैलवरेभ्यश्च समेतेभ्यो दृढव्रतः ॥ ५५

इति पार्थो महाबाहुर् उदारं तप आस्थितः ।
न तथा दृष्टपूर्वोऽन्यः कश्चिदुग्रतपा इति ॥ ५६

यथा धनञ्जयः पार्थस् तपस्वी नियतव्रतः ।
मुनिरेकचरश्श्रीमान् धर्मो विग्रहवानिव ॥ ५७

तं श्रुत्वा पाण्डवो राजंस् तप्यमानं महावने ।
अन्वशोचत कौन्तेयं प्रियं वै भ्रातरं जयम् ॥ ५८

दह्यमानेन तु हृदा शरणार्थी महावने ।
ब्राह्मणान् विविधज्ञानान् पर्यपृच्छद्युधिष्ठिरः ॥ ५९

प्रतिगृह्याक्षहृदयं कुन्तीपुत्रो युधिष्ठिरः ।
आसीद्धृष्टमना राजन् भीमसेनादिभिर्युतः ॥ ६०

स्वभ्रातॄन् सहितान् पश्यन् कुन्तीपुत्रो युधिष्ठिरः ।
अपश्यन्नर्जुनं तत्र बभूवाश्रुपरिप्लुतः ॥ ६१

सन्तप्यमानः कौन्तेयो भीमसेनमुवाच ह ॥ ६१॥

युधिष्ठिरः—

कदा द्रक्ष्यामि वै भीम [1]पार्थमत्र तवानुजम् ॥
मत्कृते हि कुरुश्रेष्ठस् तप्यते दुश्चरं तपः ॥ ६२॥

तस्याक्षहृदयज्ञानम् आख्यास्यामि कदा न्वहम् ॥ ६३

स हि श्रुत्वाऽक्षहृदयं समुपात्तं मया विभो ।
प्रहृष्टः पुरुषव्याघ्रो भविष्यति न संशयः ॥ ६४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ६४ श्लोकाः ]

---

1. क—कुन्तीपुत्रं धनञ्जयम्

## ॥ चतुष्षष्टितमोऽध्यायः ॥

अर्जुनविनाभावेन काम्यकवने निवासमरोचयानैः पाण्डवैस्तस्मान्निर्गमननिर्धारणम् ॥ १ ॥ युधिष्ठिरेण काम्यकवनमुपागतं नारदं प्रति भूप्रदक्षिणेन तीर्थयात्राफलप्रश्नः ॥ २ ॥

जनमेजयः—

भगवन् काम्यकान् पार्थे गते मे प्रपितामहे ।
किमकुर्वत पार्थास्ते तमृते सव्यसाचिनम् ॥ १

स हि तेषां महेष्वासो गतिरासीदनीकजित् ।
आदित्यानां यथा विष्णुस् तथैव प्रतिभाति मे ॥ २

तेनेन्द्रसमवीर्येण सङ्ग्रामेष्वनिवर्तिना ।
विनाभूताः कथं पार्थाः कथमासन् पितामहाः ॥ ३

वैशम्पायनः—

गते तु काम्यकात् तात पाण्डवे सव्यसाचिनि ।
बभूवुः कौरवेयास्ते दुःखशोकपरायणाः ॥ ४

आक्षिप्तसूत्रा मणयश् छिन्नपक्षा इवाण्डजाः ।
अप्रीतमनसस्सर्वे बभूवुरथ पाण्डवाः ॥ ५

वनं च तदभूत् तेन हीनमक्लिष्टकर्मणा ।
कुबेरेण यथा हीनं वनं चैत्ररथं तथा ॥ ६

तमृते ते नरव्याघ्राः पाण्डवा जनमेजय ।

मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा ॥ ७

ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः ।
निघ्नन्तो भरतश्रेष्ठ मेध्यान् बहुविधान् मृगान् ॥ ८

नित्यं हि पुरुषव्याघ्रा वन्याहारमरिन्दमाः ।
[1]प्रविसृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन् ॥ ९

एवं ते न्यवसंस्तत्र सोमपाः पुरुषर्षभाः ।
विषण्णवदनास्तत्र गते राजन् धनञ्जये ॥ १०

अथ विप्रोषितं राजन् पाञ्चाली मध्यमं पतिम् ।
स्मरन्ती पाण्डवश्रेष्ठम् इदं वचनमब्रवीत् ॥ ११

द्रौपदी—

योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
तमृते पाण्डवश्रेष्ठं वनं नाभाति मामकम् ॥ १२

शून्यामिव प्रपश्यामि तत्र तत्र महीमिमाम् ।
बह्वाश्चर्यमिदं चापि वनं कुसुमितद्रुमम् ॥ १३

न तथा रमणीयं वै तमृते सव्यसाचिनम् ।
नीलाम्बुदसमप्रख्यं मत्तमातङ्गविक्रमम् ॥ १४

तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे ॥ १४॥

यस्य वा धनुषो घोषश् श्रूयते चाशनिस्वनः ।

1. क-घ—प्रविहृत्य

न लभे शर्म तं राजन् स्मरन्ती सव्यसाचिनम् ॥ १५॥

वैशम्पायनः—

तथा लालप्यमानां तां निशाम्य परवीरहा ।
भीमसेनो महाराज द्रौपदीमिदमब्रवीत् ॥ १६॥

भीमसेनः—

मम प्रीतिकरं मन्ये यद्ब्रवीषि सुमध्यमे ।
तन्मे प्रीणाति हृदयम् अमृतप्राशनोपमम् ॥ १७॥

यस्य दीर्घौ समौ पीनौ भुजौ परिघसन्निभौ ।
मौर्वीकृतकिणौ वृत्तौ खड्गायुधगदाधरौ ॥ १८॥

[1]निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ ।
तमृते पुरुषव्याघ्रं नष्टसूर्यनिभं वनम् ॥ १९॥

यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा ।
सुराणामपि यत्तानां पृतनासु न बिभ्यति ॥ २०॥

[2]यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान् प्राप्तां च मेदिनीम् ॥ २१॥

तमृते फल्गुनं वीरं न लभे काम्यके धृतिम् ।
शून्यामिव च पश्यामि तत्र तत्र महीमिमाम् ॥ २२॥

नकुलः—

य उदीचीं दिशं गत्वा युधि जित्वा महाबलान् ।
गन्धर्वमुख्याञ्शतशो हयाँल्लेभे स वासविः ॥ २३॥

---

1. अ–घ—अर्धचतुष्टयं नास्ति 2. ख—अर्धचतुष्टयं नास्ति

राजंस् तित्तिरिकल्माषान् श्रीमतोऽनिलरंहसः ।
प्रादाद् धात्रे प्रियः प्रेम्णा राजसूये महाक्रतौ ॥ २४॥

तमृते भीमधन्वानं भीमादवरजं वने ।
कामये काम्यके वासं नेदानीममरोपम ॥ २५॥

सहदेवः—

यो धनानि च कन्याश्च युधि जित्वा महारथान् ।
शतशो घातयित्वाऽरीन् पृतनामध्यगस्तदा ॥ २६॥

यस्समेतान् मृधे जित्वा यादवानमितद्युतिः ।
एकस्सुभद्रामारोप्य वासुदेवस्य सम्मते ॥ २७॥

येनार्धराज्यमाच्छिद्य द्रुपदस्य महात्मनः ।
आचार्यदक्षिणा दत्ता [1]रणे द्रोणस्य भारत ॥ २८॥

तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यामुपनिवेशने ।
हृदयं मे महाराज न शाम्यति कदाचन ॥ २९॥

वनादस्माद्विवासं तु रोचयेऽहमरिन्दम ।
न हि नस्तमृते वीरं रमणीयमिदं वनम् ॥* ३०॥

वैशम्पायनः—

धनञ्जयोत्सुकास्ते तु वने तस्मिन् महारथाः ।
न्यवसन्त महाभागा द्रौपद्या सह कृष्णया ॥ ३१॥

---

1. ख-घ—गुरोर्द्रो
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अथापश्यन् महात्मानं देवर्षिं तत्र नारदम् ।
दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम् ॥　३२॥

स तैः परिवृतश्श्रीमान् भ्रातृभिः कुरुसत्तमः ।
विबभावतिदीप्तौजा दैवैरिव शतक्रतुः ॥　३३॥

यथा च वेदैस्सावित्री याज्ञसेनी तथा सती ।
न जहौ धर्मतः पार्थान् मेरुमर्कप्रभा यथा ॥　३४॥

अर्घ्यं पाद्यमथानीय त्वभ्यवादयदच्युतः ।
नारदस्तु महातेजास् स्वस्त्यास्त्वित्यभ्यभाषत ॥　३५॥

प्रतिगृह्य च तां पूजां नारदो भगवानृषिः ।
आश्वासयद्धर्मसुतं युक्तरूपमिवानघ ॥　३६॥

उवाच च महाप्राज्ञं धर्मराजं युधिष्ठिरम् ॥　३७

नारदः—

ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददामि ते ॥　३७॥

वैशम्पायनः—

अथ धर्मसुतो राजा प्रणम्य भ्रातृभिस्सह ।
उवाच प्राञ्जलिर्वाक्यं नारदं देवसम्मितम् ॥　३८॥

युधिष्ठिरः—

त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं प्रसादात् तव सुव्रत ॥　३९॥

यदि त्वहमनुग्राह्यो भ्रातृभिस्सहितोऽनघ ।
सन्देहं मे मुनिश्रेष्ठ हृदिस्थं छेत्तुमर्हसि ॥ ४०॥

प्रदक्षिणां यः पृथिवीं प्रतस्थे तीर्थतत्परः ।
किं फलं तस्य कार्त्स्न्येन त्वं ब्रह्मन् वक्तु[1]मर्हति ॥* ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये ४१॥ श्लोकाः ]

---

## ॥ पञ्चषष्टितमोऽध्यायः ॥

नारदेन तत्कथनाय पुलस्त्यभीष्मसंवादानुवादः ॥ १ ॥ पुलस्त्येन भीष्मं प्रति पुष्करादितीर्थमहिमानुवर्णनम् ॥ २ ॥

---

नारदः—

शृणु राजन्नवहितो यथा भीष्मेण भारत ।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ १

पुरा भागीरथीतीरे भीष्मो धर्मभृतां वरः ।
पित्र्यं व्रतं समास्थाय न्यवसन्मुनिवत् तदा ॥ २

[2]शुभे देशे महाराज पुण्ये देवर्षिसेविते ।

---

1. घ—मर्हसि * सर्वेषु कोशेषु नाध्यायसमाप्तिर्दृश्यते
2. ख—इदमर्धं नास्ति

गङ्गाद्वारे महाभाग देवगन्धर्वसेविते ॥ ३

स पितॄंस्तर्पयामास देवांश्च परमद्युतिः ।
ऋषींश्च तोषयामास विधिदृष्टेन कर्मणा ॥ ४

कस्य चित्त्वथ कालस्य जपन्नेव महातपाः ।
ददर्शाद्भुतसङ्काशं पुलस्त्यमृषिसत्तमम ॥ ५

स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया ।
प्रहर्षमतुलं लेभे विस्मयं परमं ययौ ॥ ६

उपस्थितं महाभागं पूजयामास भारत ।
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ ७

[1]शिरसा चार्घमादाय शुचिः प्रयतमानसः ।
नाम सङ्कीर्तयामास तस्मिन् ब्रह्मर्षिसत्तमे ॥ ८

भीष्मः—

भीष्मोऽहमस्मि भद्रं ते दासोऽस्मि तव सुव्रत ।
तव सन्दर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ ९

नारदः—

एवमुक्त्वा महाराज भीष्मो धर्मभृतां वरः ।
वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ १०

तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम् ।
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाऽभवत् ॥* ११

---

1. ख—इदमर्धं नास्ति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

पुलस्त्यः—

अनेन तव धर्मज्ञ प्रश्रयेण दमेन च ।
सत्येन च महाभाग परितुष्टोऽस्मि सर्वशः ॥ १२

[1]यस्येदृशस्ते धर्मोऽयं पितृवाक्याश्रितोऽनघ ।
तेन पश्यसि मां पुत्र प्रीतिर्ह्यस्ति मम त्वयि ॥ १३

अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते ।
यद्वक्ष्यासि कुरुश्रेष्ठ तस्य दातास्मि तेऽनघ ॥ १४

भीष्मः—

प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं यदहं दृष्टवान् प्रभुम् ॥ १५

यदि त्वहमनुग्राह्यस् तव धर्मभृतां वर ।
वक्ष्यामि हृत्स्थं सन्देहं तन्मे त्वं वक्तुमर्हसि ॥ १६

[2]अस्ति मे भगवन् कश्चित् तीर्थानि प्रति संशयः ।
तमहं श्रोतुमिच्छामि पृथक् सङ्कीर्तितं त्वया ॥ १७

प्रदक्षिणां यः पृथिवीं करोत्यमितविक्रमः ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥ १८

पुलस्त्यः—

हन्त तेऽहं प्रवक्ष्यामि यदृषीणां परायणम् ।
तदेकाग्रमनास्तात शृणु तीर्थेषु यत् फलम् ॥ १९

---

1. ख—अर्धचतुष्टयं नास्ति 2. ख—अर्धद्वयं नास्ति

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥　　२०

[1]प्रतिग्रहादपावृत्तस् सन्तुष्टो येन केन चित् ।
अहङ्कारनिवृत्तश्च स तीर्थफलमश्नुते ॥　　२१

अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तस्सर्वपापेभ्यस् स तीर्थफलमश्नुते ॥　　२२

अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥　　२३

ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् ।
फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ॥　　२४

न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥　　२५

प्राप्यन्ते पार्थिवैरेतैस् समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनोपकरणैर् एकात्मभिरसंहतैः ॥　　२६

यो दरिद्रैरपि विधिश् शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस् तं निबोध युधां वर ॥　　२७

ऋषीणां परमं गुह्यम् इदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥　　२८

---

1. अ-घ—अर्धचतुष्टयं नास्ति

अनुपोष्य त्रिरात्राणि तीर्थान्यनवगाह्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ २९

अग्निष्टोमादिभिर्यज्ञैर् इष्ट्वा विपुलदक्षिणैः ।
न तत्फलं समश्नाति तीर्थाभिगमनेन यत् ॥ ३०

त्रिलोकदेवदेवस्य तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं नाम विख्यातं महाभागस्समाविशेत् ॥ ३१

[1]दशकोटिसहस्राणि तीर्थानां वै महीपते ।
सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ॥ ३२

आदित्या वसवो रुद्रास् साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभो ॥ ३३

यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
दिव्ययोगा महाराज पुण्येन महताऽन्विताः ॥ ३४

मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः ।
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥ ३५

तस्मिंस्तीर्थे महाभाग नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसम्मतः ॥ ३६

पुष्करेषु महाभाग देवा[2]स्सर्षिगणाः पुरा ।
सिद्धिं सुमहतीं प्राप्ताः पुण्येन महताऽन्विताः ॥ ३७

1. क-ख—शत 2. क-ख-घ—स्सर्षिपुरोगमाः

तत्राभिषेकं यः कुर्यात् पितृदेवार्चने रतः ।
सोऽश्वमेधमवाप्नोति ब्रह्मलोके च पूज्यते ॥　३८

अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ॥　३९

शाकैर्मूलैः फलैर्वाऽपि येन वर्तयते स्वयम् ।
तेनैव प्राप्नुयात् प्राज्ञो हयमेधफलं नरः ॥　४०

ब्राह्मणः क्षत्रियो वैश्यश्शूद्रो वा राजसत्तम ।
न वियोनिं व्रजन्त्येते स्नातास्तीर्थेषु भारत ॥　४१

कार्तिक्यां तु विशेषेण योऽभिगच्छति पुष्करम् ।
फलं तत्राक्षयं तस्य लभते भरतर्षभ ॥　४२

[1]सायं प्रातस्स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ।
उपस्पृष्टं भवेत् तेन सर्वतीर्थेषु भारत ॥　४३

प्राप्नुयाच्च नरो लोकान् ब्रह्मणस्सदनेऽक्षयान् ॥　४३॥

जन्मप्रभृति यत् पापं स्त्रिया वा पुरुषस्य वा ।
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ॥　४४॥

यथा सुराणां सर्वेषाम् आदिस्तु मधुसूदनः ।
तथैव पुष्करं राजंस् तीर्थानामादिरुच्यते ॥　४५॥

उष्य द्वादशवर्षाणि पुष्करे नियतश्शुचिः ।

---

1. अ-घ—अर्धद्वयं नास्ति

क्रतून् सर्वानवाप्नोति ब्रह्मलोकं स गच्छति ॥ ४६॥

यस्तु वर्षशतं पूर्णम् अग्निहोत्रमुपासते ।
कार्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥ ४७॥

दुष्करं पुष्करे गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ४८॥

उष्य द्वादशरात्रं तु नियतो नियताशनः ।
प्रदक्षिणमुपावृत्तो जम्बूमार्गं समाविशेत् ॥ ४९॥

जम्बूमार्गं समासाद्य देवर्षिपितृसेवितम् ।
अश्वमेधमवाप्नोति [1]स्वर्गलोके च पूज्यते ॥ ५०॥

तत्रोष्य रजनीः पञ्च षष्ठकालक्षमी नरः ।
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमाम् ॥ ५१॥

जम्बूमार्गादुपावृत्तो गच्छेत् तण्डुलिकाश्रमम् ।
न दुर्गतिमवाप्नोति ब्रह्मलोके च पूज्यते ॥ ५२॥

आगस्त्यं सर आसाद्य पितृदेवार्चने रतः ।
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ५३॥

शाकवृत्तिः फलैर्वाऽपि कौमारं विन्दते पदम् ॥ ५४

कण्वाश्रमं ततो गच्छेच् छ्रीजुष्टं लोकविश्रुतम् ॥ ५४॥

धर्मारण्यं हि तत्पुण्यम् आद्यं च भरतर्षभ ।

---

1. क-ख—विष्णुलोकं स गच्छति ; घ—विष्णुलोके च पूज्यते

यत्र प्रविष्टमात्रोऽसौ पापेभ्यो विप्रमुच्यते ॥ ५५॥
अर्चयित्वा पितॄन् देवान् नियतो नियताशनः ।
सर्वकामसमृद्धस्स्याद् यज्ञस्य फलमश्नुते ॥ ५६॥
प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत् ।
हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै ॥ ५७॥
महाकालं ततो गच्छेन् नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ ५८॥
ततो गच्छेत धर्मज्ञस् स्थाणोस्तीर्थमुमापतेः ।
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥ ५९॥
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ॥ ६०॥
समृद्धमसपत्नं च श्रिया युक्तं नरोत्तमः ।
राज्ञां चैवाधिपत्यं हि तत्र गत्वा समाप्नुयात् ॥ ६१॥
नर्मदामथ चासाद्य नदीं त्रैलोक्यविश्रुताम् ।
तर्पयित्वा पितॄन् देवान् अग्निष्टोमफलं लभेत् ॥ ६२॥
[1]दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः ।
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ॥ ६३॥
चर्मिलामथ सम्प्राप्य नियतो नियताशनः ।

---

1. क-ख—अर्धचतुष्टयं नास्ति

रन्तिदेवाभ्यनुज्ञातम् अग्निष्टोमफलं लभेत् ॥ ६४॥

ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्बुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ६५॥

तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ६६॥

पिङ्गतीर्थमुपस्पृश्य ब्रह्मचारी समाहितः ।
कपिलानां नरश्रेष्ठ शतस्य फलमश्नुते ॥ ६७॥

ततो गच्छेत राजेन्द्र प्रभासं लोकविश्रुतम् ।
तीर्थं देवगणैः पूज्यम् ऋषिभिश्च निषेवितम् ॥ ६८॥

तत्र सान्निहितो नित्यं स्वयमेव हुताशनः ।
देवतानां मुखं वीर ज्वलनोऽनिलसारथिः ॥ ६९॥

तस्मिंस्तीर्थवरे स्नात्वा शुचिः प्रयतमानसः ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ७०॥

ततो गत्वा सरस्वत्यास् सागरस्य च सङ्गमे ।
गोसहस्रफलं प्राप्य स्वर्गलोके महीयते ॥ ७१॥
दीप्यमानोऽग्निवन्नित्यं प्रभया भरतर्षभ ॥ ७२

तत्र स्नात्वाऽपि राजेन्द्र विमलार्कसमद्युतिः ।
त्रिरात्रमुषितस्तत्र तर्पयन् पितृदेवताः ॥ ७३
प्रभासते यथा सोमो वाजिमेधं च विन्दति ॥ ७३॥

विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ।
वरदाने नरस्स्नात्वा गोसहस्रफलं लभेत् ॥　　७४॥

ततो द्वारवतीं गच्छेन्नियतो नियताशनः ।
पिण्डारके नरस्स्नात्वा लभेद्बहुसुवर्णकम् ॥　　७५॥

तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः ।
अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिन्दम ॥　　७६॥

त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन ।
महादेवस्य सान्निध्यं तत्रैव भरतर्षभ ॥　　७७॥

सागरस्य च सिन्धोश्च सङ्गमं प्राप्य भारत ।
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥　　७८॥

तर्पयित्वा पितॄन् देवान् ऋषींश्च भरतर्षभ ।
प्राप्नोति वारुणं लोकं दीप्यमानं स्वतेजसा ॥　　७९॥

शङ्कुकर्णेश्वरं देवम् अर्चयित्वा युधिष्ठिर ।
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥　　८०॥

प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
तीर्थं कुरुकुलश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ॥　　८१॥

दृमीति नाम्ना विख्यातं सर्वपापप्रमोचनम् ।
यत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥　　८२॥

तत्र स्नात्वाऽर्चयित्वा च रुद्रं देवगणैर्वृतम् ।

जन्मप्रभृति पापानि कृतानि नुदते नरः ॥ ८३॥
[1]द्रमी चात्र नरश्रेष्ठ सर्वदेवैरभिष्टुता ।
तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ॥ ८४॥
जित्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतं राजन् हत्वा दैवतकण्टकान् ॥ ८५॥
ततो गच्छेत राजेन्द्र वसोर्धारामभिष्टुताम् ।
गमनादेव तस्यां हि हयमेधमवाप्नुयात् ॥ ८६॥
स्नात्वा कुरुकुलश्रेष्ठ प्रयतात्मा तु मानवः ।
तर्प्य देवान् पितॄंश्चैव विष्णुलोके महीयते ॥ ८७॥
तीर्थे चात्र सरः पुण्यं वसूनां भरतर्षभ ।
तत्र स्नात्वा च पीत्वा च वसूनां सम्मतो भवेत् ॥ ८८॥
सिन्धूत्तममिति ख्यातं सर्वपापप्रणाशनम् ।
तत्र स्नात्वा नरश्रेष्ठ लभेद्बहुसुवर्णकम् ॥ ८९॥
ब्रह्मतुङ्गं समासाद्य शुचिः प्रयतमानसः ।
ब्रह्मलोकमवाप्नोति [2]सुकृती विरजा नरः ॥ ९०॥
[3]कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं स्वर्गलोकमवाप्नुयात् ॥ ९१॥

1. ख—अर्धचतुष्टयं नास्ति
2. क—सार्कृतिर्विरजा नरः; ख—सुकृती विगतज्वरः
अ—क्रमशो येऽनुकीर्तिताः 3. अ—अर्धषट्कं नास्ति

रेणुकायाश्च तत्रैव तीर्थं देवर्षिसेवितम् ।
तत्र स्नात्वा भवेद्विप्रो निर्मलश्चन्द्रमा यथा ॥　९२॥

अथ पञ्चनदं गत्वा नियतो नियताशनः ।
पञ्च यज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः ॥　९३॥

ततो गच्छेत धर्मज्ञ भीमायास्स्थानमुत्तमम् ।
तत्र स्नात्वा न योन्यां वै भवेद्भरतसत्तम ॥　९४॥

देव्याः पुत्रो भवेद्राजंस् तप्तकुण्डलभूषणः ।
गवां शतसहस्रस्य फलं चैवाप्नुयान्महत् ॥　९५॥

गिरिमुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम् ।
पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥　९६॥

ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम् ।
अद्यापि यत्र दृश्यन्ते मत्स्यास्सौवर्णराजताः ॥　९७॥

तत्र स्नात्वा नरश्रेष्ठ वाजपेयमवाप्नुयात् ।
[1]सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥　९८॥

ततो गच्छेत मलदां त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायां तु सन्ध्यायाम् उपस्पृश्य यथाविधि ॥　९९॥

चरुं नरेन्द्र सप्तार्चैर् यथाशक्ति निवेदयेत् ।
पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः ॥　१००॥

1. ख—इदमर्धं नास्ति

गवां शतसहस्रेण राजसूयशतेन च ।
अश्वमेधसहस्रेण श्रेयान् सप्तार्चिषश्चरुः ॥ १०१॥

ततो निवृत्तो राजेन्द्र भद्रापदमथाविशेत् ।
अभिगम्य महादेवम् अश्वमेधफलं लभेत् ॥ १०२॥

मणिमन्तं समासाद्य ब्रह्मचारी समाहितः ।
[1]एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् ॥ १०३॥

अथ गच्छेत राजेन्द्र देविकां लोकविश्रुताम् ।
प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ॥ १०४॥

त्रिशूलपाणेस्स्थानं च त्रिषु लोकेषु विश्रुतम ।
देविकायां नरस्स्नात्वा अथाभ्यर्च्य महेश्वरम ॥ १०५॥

यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ १०६॥

कामाख्यं तत्र रुद्रस्य तीर्थं देवर्षिसेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं सिद्धिं प्राप्नोति भारत ॥ १०७॥

यजनं याजनं चैव तथैव ब्रह्मवालुकाम ।
पुष्पन्नय उपस्पृश्य न शोचेन्मरणं ततः ॥ १०८॥

अर्धयोजनविस्तारां पञ्चयोजनमायताम् ।
एतां हि देविकामाहुः पुण्यां देवर्षिसेविताम् ॥ १०९॥

---

1. क-ख—त्रिरात्रोपोषितो ; ख—राजन्नश्वमेधफलं

ततो गच्छेत धर्मज्ञ दीर्घसूत्रं यथाश्रुतम् ॥　　११०
यत्र ब्रह्मादयो देवास् सिद्धाश्च परमर्षयः ।
दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः ॥　　१११
गमनादेव राजेन्द्र दीर्घसत्रमरिन्दम ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥　　११२
ततो विनशनं गच्छेन्नियतो नियताशनः ।
गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती ॥　　११३
चमसे चमसोद्भेदे नागोद्भेदे च दृश्यते ।
तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत् सदा ॥　　११४
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ ।
स्नात्वा तु चमसोद्भेदे गोसहस्रफलं लभेत् ॥　　११५
शिवोद्भेदे नरस्स्नात्वा गोसहस्रफलं लभेत् ।
[1]शतह्रदं च राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥　　११६
शतरूपप्रतिच्छन्नाः पुष्करा यत्र भारत ॥　　११६॥
सरस्वत्यां महाराज शतं संवत्सरा हि ते ।
स्नायन्ते भरतश्रेष्ठ वृत्तां वै कार्तिकीं तदा ॥　　११७॥
कुमारकोटिमासाद्य नियतः कुरुनन्दन ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥　　११८॥

---

1. क—नृगोद्भेदे नरस्स्नात्वा गोसहस्रमवाप्नुयात ।　　[अधिकः पाठः]

गवां मेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ११९

ततो गच्छेत धर्मज्ञ रुद्रकोटिं समास्थितः ।
पुरा यत्र महाराज ऋषिकोटिस्समागता ॥ १२०
प्रहर्षेण च संविष्टा रुद्रदर्शनकाङ्क्षया ॥ १२०॥

अहंपूर्वमहंपूर्वं द्रक्ष्यामि वृषभध्वजम् ।
एवं सम्प्रस्थिता राजन् ऋषयः किल भारत ॥ १२१॥

ततो योगीश्वरेणापि योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थम् ऋषीणां भावितात्मनाम् ॥ १२२॥

सृष्टा कोटीस्तु रुद्राणाम् ऋषीणामग्रतस्स्थिता ।
मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् ॥ १२३॥

तेषां तुष्टो महादेवो ऋषीणां भावितात्मनाम् ।
भक्त्या परमया तेषां वरं राजन् प्रदिष्टवान् ॥ १२४॥

अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ॥ १२५
तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरश्शुचिः ॥ १२५॥
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १२६

ततो गच्छेत राजेन्द्र सङ्गमं लोकविश्रुतम् ।
सरस्वत्या महाराज उपासन्ते जनार्दनम् ॥ १२७

यत्र ब्रह्मादयो देवा ऋषयस्सिद्धचारणाः ।
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ॥ १२८

तत्र स्नात्वा नरव्याघ्र विन्देद्बहु सुवर्णकम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं स गच्छति ॥ १२९

ऋषीणां यत्र सत्राणि समवाप्नोति मानवः ।
तत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ १३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये १३० श्लोकाः]

## ॥ षट्षष्टितमोऽध्यायः ॥

पुलस्त्येन भीष्मं प्रति नानातीर्थमहिमानुवर्णनम् ॥ १ ॥

पुलस्त्यः—

ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।
पापेभ्यो विप्रमुच्यन्ते तद्गतास्सर्वजन्तवः ॥ १

कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात् सोऽपि पापैः प्रमुच्यते ॥ २

तत्र मासं वसेद्धीरस् सरस्वत्यां युधां वर ।
यत्र ब्रह्मादयो देवा ऋषयस्सिद्धचारणाः ॥ ३

गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।

[1]ब्रह्मक्षेत्रं महापुण्यम् अभिगच्छन्ति भारत ॥ ४

मनसाऽप्यभिकामस्य कुरुक्षेत्रं युधां वर ।
पापानि विप्रणश्यन्ति स्वर्गलोकं च गच्छति ॥ ५

गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ६

ततश्च मन्दुकं राजन् द्वारपालं महाबलम् ।
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ७

ततो गच्छेत धर्मज्ञ विष्णोस्स्थानमनुत्तमम् ।
सततं नाम राजेन्द्र यत्र सन्निहितो हरिः ॥ ८

तत्र स्नात्वाऽर्चयित्वा च त्रिलोकप्रभवं हरिम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ९

ततः परिप्लवं गच्छेत् तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलमाप्नोति मानवः ॥ १०

पृथिव्यास्तीर्थमासाद्य गोसहस्रमवाप्नुयात् ॥ १०॥

[2]ततश्शालूकिनीं गत्वा तीर्थसेवी नराधिप ।
दशाश्वमेधे स्नात्वा च तदेव लभते फलम् ॥ ११॥

सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम् ।
अग्निष्टोममवाप्नोति नागलोकं च गच्छति ॥ १२॥

---

1. ख—अर्धत्रयं नास्ति 2. ख—इदमर्धं नास्ति

ततो गच्छेत धर्मज्ञ द्वारपालमरन्दुकम् ।
तत्रोष्य राजनीमेकां गोसहस्रफलं लभेत् ॥ १३॥

[1]ततः पञ्चनदं गत्वा नियतो नियताशनः ।
[2]कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ १४॥

अश्विनोस्तीर्थमासाद्य रूपवानभिजायते ॥ १५

ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितो विभुः ॥ १६

तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् । १६॥

कृतशौचं समासाद्य तीर्थसेवी कुरूद्वह ।
पौण्डरीकमवाप्नोति कृतशौचो भवेन्नरः ॥ १७॥

ततो मुञ्जवटं नाम महादेवस्य धीमतः ।
तत्रोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ १८॥

तत्रैव च महाराज यक्षी लोकपरिश्रुता ।
तां चाभिगम्य राजेन्द्र पुण्यलोकानवाप्नुयात् ॥ १९॥

कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ॥ २०॥

सम्मिते पुष्कराणां च स्नात्वाऽर्च्य पितृदेवताः ।
जामदग्न्येन रामेण आहृते सुमहात्मना ॥ २१॥

---

1. अ-ख-घ—नास्तीदमर्धम्  2. अ-घ—अर्धपञ्चकं नास्ति

कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति । २२
ततो रामह्रदान् गच्छेत् तीर्थसेवी नराधिप ॥ २२॥

तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ।
क्षत्रमुत्साद्य वीर्येण ह्रदाः पञ्च निवेशिताः ॥ २३॥
पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतिः ॥ २४

पितरस्तर्पितास्सर्वे तथैव च पितामहाः ।
ततस्ते पितरः प्रीता राममूचुर्महीपते ॥ २५

राम राम महाभाग प्रीतास्स्म तव भार्गव ।
अनया पितृभक्त्या च विक्रमेण च ते विभो ॥ २६
वरं वृणीष्व भद्रं ते यदीच्छसि महाद्युते ॥ २६॥

एवमुक्तस्स राजेन्द्र रामः प्रहरतां वरः ।
अब्रवीत् प्राञ्जलिर्वाक्यं पितॄन् स गमने स्थितान् ॥ २७॥

भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ।
पितृप्रसादादिच्छेयं तपस्याप्यायनं पुनः ॥ २८॥

यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।
ततस्तु पापान्मुच्येयं युष्माकं तेजसाऽस्म्यहम् ॥ २९॥
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ३०

एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ।
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ॥ ३१

तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ॥ ३२

ततश्च पापान्मुक्तस्त्वं कर्मभिस्ते च पातिताः ॥ ३२॥
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ॥ ३३

ह्रदेषु तेषु यस्स्नात्वा पितॄन् सन्तर्पयिष्यति ।
पितरस्तत्र वै प्रीता दास्यन्ति भुवि दुर्लभम् ॥ ३४
समीप्सितं मनःकामं स्वर्गलोकं च शाश्वतम् ॥ ३४॥

एवं दत्त्वा वरान् राजन् रामस्य पितरस्तदा ।
आमन्त्र्य भार्गवं प्रीत्या तत्रैवान्तर्दधुस्तदा ॥ ३५॥

एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ॥ ३६
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुचिव्रतः ।
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ॥ ३७
वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ।
स्ववंशमुद्धरेद्राजन् स्नात्वा वै वंशमूलके ॥ ३८
कायशोधनमासाद्य तीर्थं भरतसत्तम ।
शरीरशुद्धिस्स्नातस्य तस्मिंस्तीर्थे न संशयः ॥ ३९
शुद्धदेहश्च संयाति शुभाँल्लोकाननुत्तमान् ॥ ३९॥

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ॥ ४०॥

लोकोद्धारं समासाद्य तीर्थसेवी कुरूद्वह ।
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान् ॥ ४१॥
श्रीतीर्थं च समासाद्य विन्दते श्रियमुत्तमाम् ॥ ४२
कापिलं तीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वाऽर्चयित्वा तु दैवतांश्च पितृंस्तदा ॥ ४३
कपिलानां सहस्रस्य फलं विन्दति भारत ॥ ४३॥
सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ।
अर्चयित्वा पितॄन् देवान् उपवासपरायणः ॥ ४४॥
अग्निष्टोममवाप्नोति सूर्यलोकं च विन्दति ॥ ४५
गवां भवनमासाद्य तीर्थसेवी यथाक्रमम् ।
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ४६
शङ्खिनीं तत आसाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरस्स्नात्वा लभते रूपमुत्तमम् ॥ ४७
ततो गच्छेत राजेन्द्र द्वारपालमरुन्तुकम् ।
तस्य तीर्थं समासाद्य यक्षेन्द्रस्य महात्मनः ॥ ४८
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ॥ ४८॥
ततो गच्छेत राजेन्द्र ब्रह्मावर्तं नराधिप ।
ब्रह्मावर्ते नरस्स्नात्वा ब्रह्मलोकमवाप्नुयात् ॥ ४९॥
ततो गच्छेत राजेन्द्र सुतीर्थकमनुत्तमम् ॥ ५०

तत्र सन्निहिता राजन् पितरो दैवतैस्सह ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ५१

अश्वमेधमवाप्नोति पितृलोकं च गच्छति ॥ ५१॥

[1]ततोऽम्बवश्यं धर्मज्ञ समासाद्य यथाक्रमम् ।
कौशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम ॥ ५२॥

सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते । ५३

मातृतीर्थं च तत्रैव यत्र स्नातस्य भारत ।
प्रजा विवर्धते राजन्ननन्तां चाश्नुते श्रियम् ॥ ५४

ततश्शीतवनं गच्छेन् नियतो नियताशनः ।
तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ॥ ५५

पुनाति दर्शनादेतद् दण्डेनैकं नराधिप ।
[2]केशानभ्युक्ष्य वै तस्मिन् पूतो भवति भारत ॥ ५६

तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम् ॥ ५६॥

यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ।
[3]गतिं गच्छन्ति परमां स्नात्वा भरतसत्तम ॥ ५७॥

श्वानलोमापनयने तीर्थे भरतसत्तम ।
[4]प्राणायामैर्निर्हरन्ति श्वानलोमान् द्विजोत्तमाः ॥ ५८॥

---

1. ख—इदमर्धं नास्ति　　2. ख—अर्धद्वयं नास्ति
3. ख—इदमर्धं नास्ति　　4. ख—नेदमर्धम्

पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ॥ ५९

दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते ।
तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ॥ ६०

ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन् व्याधेन परिपीडिताः ॥ ६१

विगाह्य तस्मिन् सरसि मानुषत्वमुपागताः ॥ ६१॥

तस्मिंस्तीर्थे नरस्स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ६२॥

मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ।
आगता नाम विख्याता नदी सिद्धनिषेविता ॥ ६३॥

श्यामाकभोजनं तत्र यः प्रयच्छति मानवः ।
देवान् पितॄन् समुद्दिश्य तस्य धर्मफलं महत् ॥ ६४॥

एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजितः ॥ ६५

तत्र स्नात्वाऽर्चयित्वा च पितॄन् स्वान् दैवतानि च ।
उषित्वा रजनीमेकाम् अग्निष्टोमफलं लभेत् ॥ ६६

ततो गच्छेत राजेन्द्र ब्रह्मणस्स्थानमुत्तमम् ।
ब्रह्मोदुम्बरमित्येव प्रकाशं भरतर्षभ ॥ ६७

तत्र सप्तर्षिकुण्डेषु स्नातस्य कुरुपुङ्गव ।

[1]केदारे चैव राजेन्द्र कपिष्ठलमहामुनेः ॥ ६८

ब्रह्माणमधिगत्वा च शुचिः प्रयतमानसः ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ६९

कपिष्ठलस्य केदारं समासाद्य सुदुर्लभम् ।
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः ॥ ७०

ततो गच्छेत राजेन्द्र शङ्करं लोकविश्रुतम् ॥ ७०॥

कृष्णपक्षे चतुर्दश्याम् अभिगम्य वृषध्वजम् ।
लभेत सर्वकामान् हि स्वर्गलोकं च गच्छति ॥ ७१॥

तिस्रः कोट्यस्तु तीर्थानां शङ्करे कुरुनन्दन ।
रुद्रकोटिस्तथा कूपे ह्रदेषु च महीपते ॥ ७२॥

इडास्पदं च तत्रैव तीर्थं भरतसत्तम ॥ ७३

तत्र स्नात्वाऽर्चयित्वा च पितॄन् देवांश्च भारत ।
[2]न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ७४

किंदाने च नरस्स्नात्वा किंजप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यं च भारत ॥ ७५

कलश्यां चाप्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति भारत ॥ ७६

शङ्करस्य तु पूर्वेण नारदस्य महात्मनः ।

---

1. ख—इदमर्धं नास्ति 2. क-ख—अर्धत्रयं नास्ति

तीर्थं कुरुवरश्रेष्ठ अनाजन्मेति विश्रुतम् ॥ ७७

तत्र तीर्थे नरस्स्नात्वा प्राणांश्चोत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान् प्राप्नोति दुर्लभान् ॥ ७८

शुक्लपक्षे दशम्यां तु पुण्डरीकं समाविशेत् ।
तत्र स्नात्वा नरो राजन् पौण्डरीकफलं लभेत् ॥ ७९

तत्र त्रिविष्टपं गच्छेत् त्रिपु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या नदी पापप्रमोचनी ॥ ८०

तत्र स्नात्वाऽर्चयित्वा च पूजयित्वा वृषध्वजम् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ८१

ततो गच्छेत राजेन्द्र फलजीवनमुत्तमम् ॥ ८१॥

तत्र देवास्सदा राजन् फलजीवनमाश्रिताः ।
नभश्चरन्ति विपुलं बहुवर्षसहस्रकम् । ८२॥

[1]दृषद्वत्यां नरस्स्नात्वा तर्पयित्वा च देवताः ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ॥ ८३॥

तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम ।
गोसहस्रस्य राजेन्द्र फलं विन्दति मानवः ॥ ८४॥

पाणिखाते नरस्स्नात्वा तर्पयित्वा च देवताः ।
तत्र स्नात्वा नरो राजन् सर्वयज्ञफलं लभेत् ॥ ८५॥

---

1. अ-घ—अर्धपञ्चकं नास्ति

अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ।
राजसूयमवाप्नोति ऋषिलोकं च विन्दति ॥　　८६॥

ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम् ॥　　८७
यत्र तीर्थानि सर्वाणि मिश्रितानि महात्मना ।

व्यासेन नरशार्दूल द्विजार्थमिति नश्श्रुतम् ॥　　८८
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥　　८८॥

ततो व्यासवनं गत्वा नियतो नियताशनः ।
मनोजवे नरस्स्नात्वा गोसहस्रफलं लभेत् ॥　　८९॥

[1]गत्वा मधुपर्दीं चैव देव्यास्तीर्थे नरश्शुचिः ।
तत्र स्नात्वाऽर्चयित्वा च पितॄन् देवांश्च पूरुषः ॥　　९०॥

स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ॥　　९१
कौशिक्यास्सङ्गमे यस्तु दृषद्वत्याश्च भारत ।
स्नाति वै नियताहारस् सर्वपापैः प्रमुच्यते ॥　　९२

ततो व्यासस्थली नाम यत्र व्यासेन धीमता ।
पुत्रशोकाभितप्तेन देहत्यागार्थनिश्चयः ॥　　९३
कृतो वै देवराजेन पुनरुत्थापितस्तदा ॥　　९३॥
अभिगत्वा स्थलीं तत्र गोसहस्रफलं लभेत् ॥　　९४

किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ।

---

1. क-ख—अर्धत्रयं नास्ति

गच्छेत् पारमिकां सिद्धिम् ऋणैर्मुक्तः कुरुद्वह ॥ ९५

अहश्च सुदिनं चैव द्वे तीर्थे च सुदुर्लभे ।
तयोस्स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ॥ ९६

व्यङ्गधूमं ततो गच्छेत् त्रिषु लोकेषु विश्रुतम् ॥ ९६॥
तत्र गङ्गाह्रदे स्नात्वा ह्यर्चयित्वा च भारत ।

शूलपाणिं महादेवम् अश्वमेधफलं लभेत् ॥ ९७॥
देवतीर्थे नरस्स्नात्वा गोसहस्रफलं लभेत् ॥ ९८

[1]अथ वामनकं गच्छेत् त्रिषु लोकेषु विश्रुतम् ॥ ९८॥
तत्र विष्णुपदे स्नात्वा अर्चयित्वा च वामनम् ।

सर्वपापविशुद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ९९॥
कुलंपुने नरस्स्नात्वा पुनाति स्वकुलं नरः ॥ १००

पवनस्य ह्रदं गत्वा मरुतां तीर्थमुत्तमम् ।
तत्र स्नात्वा नरव्याघ्र वायुलोके महीयते ॥ १०१

श्रीकुञ्जं च सरस्वत्यास् तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्नग्निष्टोममवाप्नुयात् ॥ १०२

ततो नैमिशकुञ्जं तु समासाद्य यथाक्रमम् ।

---

1. ख-घ—अमराणां ह्रदे स्नात्वा †स्वर्गलोके महीयते ।
शालिहोत्रस्य राजेन्द्र शालिशूर्पे यथाविधि ॥
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ [अधिकः पाठः]

† अमरेषु नराधिप अमराणां प्रसादेन इति पादद्वयं घकोशे अधिकम्

ऋषयः किल राजेन्द्र नैमिशीयास्तपोधनाः ॥ १०३
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा ॥ १०३॥
ततः कुञ्जस्सरस्वत्याः कृतो भरतसत्तम ।
ऋषीणामवकाशस्स्याद् यथा तुष्टिकरो भवेत् ॥ १०४॥
तस्मिन् कुञ्जे नरस्स्नात्वा अग्निष्टोमफलं लभेत् ॥ १०५
[1]कन्यातीर्थे नरस्स्नात्वा गोसहस्रफलं लभेत् ॥ १०५॥
ततो गच्छेन्नरव्याघ्र ब्रह्मणस्तीर्थमुत्तमम् ।
तत्र वर्णान्तरस्स्नात्वा ब्राह्मण्यं लभते नरः ॥ १०६॥
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम् ॥ १०७
ततो गच्छेन्नरव्याघ्र सोमतीर्थमनुत्तमम् ।
तत्र स्नात्वा नरो राजन् सोमलोकमवाप्नुयात् ॥ १०८
सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप ।
यत्र मङ्कणकस्सिद्धो महर्षिर्लोकविश्रुतः ॥ १०९
पुरा मङ्कणको राजन् कुशाग्रेणेति विश्रुतम् ।
क्षतः किल करे राजंस् तस्य शाकरसोऽस्रवत् ॥ ११०
स वै शाकरसं दृष्ट्वा हर्षाविष्टो महातपाः ।
प्रनृत्तः किल विप्रर्षिर् विस्मयोत्फुल्ललोचनः ॥ १११
ततस्तस्मिन् प्रनृत्ते तु स्थावरं जङ्गमं च यत् ।

---
1. क-ख—इदमर्धं नास्ति

प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ११२

ब्रह्मादिभिस्सुरै राजन् ऋषिभिश्च तपोधनैः ।

[1]विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ॥ ११३

ब्रह्मादयः—

यथा न नृत्यते देव तथा त्वं कर्तुमर्हसि ॥ ११३॥

पुलस्त्यः—

ततः प्रनृत्तमासाद्य हर्षाविष्टेन चेतसा ।

सुराणां हितकामार्थम् ऋषिं देवोऽभ्यभाषत ॥ ११४॥

देवः—

भोभो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् ।

हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव ॥ ११५॥

ऋषिः—

किं न पश्यसि मे देव कराच्छाकरसं स्रुतम् ।

यं दृष्ट्वाऽहं प्रनृत्तो वै हर्षेण महताऽन्वितः ॥ ११६॥

पुलस्त्यः—

तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ।

अहं वै विस्मयं विप्र न गच्छामीति पश्य माम् ॥ ११७॥

[2]एवमुक्तो नरश्रेष्ठ महादेवेन वै तदा ।

अङ्गुष्ठाग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽभवत् ॥ ११८॥

---

1. ख—इदमर्धं नास्ति

2. क-घ—एवमुक्त्वा

ख—इत्युक्त्वा स नरश्रेष्ठ महादेवो द्विजर्षभम् । [पाठान्तरम्]

ततो भस्म क्षताद्राजन् निर्गतं हिमसन्निभम् ।
तद्दृष्ट्वा व्रीडितो राजन् स मुनिः पादयोर्गतः ॥ ११९॥

ऋषिः—

नान्यं देवमहं मन्ये रुद्रात् परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृत् ॥ १२०॥

[1]त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ १२१

त्वामेव भगवन् सर्वे प्रविशन्ति युगक्षये ।
देवैरपि न शक्यं ते परिज्ञातुं कुतो मया ॥ १२२

त्वयि सर्वे प्रदृश्यन्ते सुरा ब्रह्मादयोऽनघ ।
सर्वस्त्वमसि लोकानां कर्ता कारयिता च ह ॥ १२३

त्वत्प्रसादात् सुरास्सर्वे निवसन्त्यकुतोभयाः ॥ १२३॥

पुलस्त्यः—

एवं स्तुत्वा महादेवम् ऋषिस्स प्रणतोऽभवत् ॥ १२४

ऋषिः—

त्वत्प्रसादान्महादेव तपो मे न [2]क्षयेत वै ॥ १२४॥

पुलस्त्यः—

ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् ॥ १२५

देवः—

तपस्ते वर्धतां विप्र मत्प्रसादात् सहस्रधा ।

---

1. ख—अर्धत्रयं नास्ति 2. क-घ—क्षरेत घ—क्षमेत

आश्रमे चेह वत्स्यामि त्वया सह महामुने ॥ १२६

सप्तसारस्वते स्नात्वा यो मामर्चयिता द्विजः ।
न तस्य दुर्लभं किञ्चिद् इह लोके परत्र च ॥ १२७
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ॥ १२७॥

पुलस्त्यः—

ततस्त्वौशनसं गच्छेत् त्रिषु लोकेषु विश्रुतम् ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १२८॥

कार्तिकेयश्च भगवांस् त्रिसंध्यं किल भारत ।
सान्निध्यमकरोन्नित्यं भार्गवप्रियकाम्यया ॥ १२९॥

कपालमोचनं तीर्थं सर्वपापप्रमोचनम् ।
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते ॥ १३०॥

अग्नितीर्थं ततो गच्छेत् तत्र स्नात्वा नरर्षभ ।
अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत् ॥ १३१॥

विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरव्याघ्र ब्राह्मण्यमभिजायते ॥ १३२॥

ब्रह्मयोनिं समासाद्य [1]शुचिः प्रयतमानसः ।
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते ॥ १३३॥
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥ १३४

1. ख—अयं पादोऽनन्तरश्च न स्तः

ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
पृथूदकमिति ख्यातं कार्तिकेयस्य धीमतः ॥　　१३५
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥　　१३५॥

अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा ।
यत् किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ॥　　१३६॥
[1]तत् सर्वं नश्यते तत्र स्नातमात्रस्य भारत ।
अश्वमेधफलं चापि स्वर्गलोकं च गच्छति ॥　　१३७॥
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वती ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ॥　　१३८॥
[2]उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ।
[3]अश्वमेधफलं चापि स्वर्गलोकं च गच्छति ॥　　१३९॥

पृथूदके जप्यपरो नैव श्वो मरणं तपेत् ।
गीतं सनत्कुमारेण व्यासेन च महात्मना ॥　　१४०॥
वेदे च नियतं राजन् अभिगच्छेत् पृथूदकम् ॥　　१४१
पृथूदकात् पुण्यतरं नान्यत् तीर्थं नरोत्तम ।
[4]एतन्मेध्यं पवित्रं च पावनं च न संशयः ॥　　१४२

तत्र स्नात्वा दिवं यान्ति येऽपि पापकृतो नराः ।

---

1. ख-घ—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति
3. क-ख—नास्तीदमर्धम्　　4. क-ख—अर्धचतुष्टयं नास्ति

पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः ॥ १४३

मधुस्रवं च तत्रैव तीर्थं कुरुकुलोद्वह ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥ १४४

ततो गच्छेन्नरश्रेष्ठ तीर्थं देव्या यथाक्रमम् ।
सरस्वत्यारुणायाश्च सङ्गमे लोकविश्रुते ॥ १४५

त्रिरात्रोपोषितस्स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ॥ १४६

आसप्तमं कुलं चैव पुनाति भरतर्षभ ॥ १४६॥

अतीव तीर्णं तत्रैव तीर्थं कुरुकुलोद्वह ।
विप्राणामनुकम्पार्थं शार्ङ्गिणा निर्मितं पुरा ॥ १४७॥

व्रतोपनयनाभ्यां वाऽप्युपवासेन वा द्विजः ।
क्रियामन्त्रैश्च संयुक्तो ब्राह्मणस्स्यान्न संशयः ॥ १४८॥

क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ ।
चीर्णव्रतो भवेद्विप्रो दृष्टमेतत् पुरातने ॥ १४९॥

समुद्राश्चापि चत्वारश् शार्ङ्गिणाऽत्र समाहिताः ॥ १५०

यत्र स्नात्वा नरव्याघ्र न दुर्गतिमवाप्नुयात् ।
फलानि गोसहस्राणां चतुर्णां विन्दते च सः ॥ १५१

ततो गच्छेत राजेन्द्र तीर्थं शतसहस्रकम् ।
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते ॥ १५२

उभयोर्हि नरस्स्नात्वा गोसहस्रफलं लभेत् ।
दानं वाऽप्युपवासो वा सहस्रगुणितं भवेत् ॥ १५३

ततो गच्छेत राजेन्द्र रेणुकातीर्थ[1]मुत्तमम् ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १५४

[1]सर्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ॥ १५४॥

तत्र ब्रह्मा स्वयं नित्यं देवैस्सह महीपते ।
अन्वास्यते कुरुश्रेष्ठ नारायणपुरोगमैः ॥ १५५॥

सान्निध्यं चैव राजेन्द्र रुद्रपत्न्याः कुरूत्तम ।
अर्चयित्वा नदीं देवीं न दुर्गतिमवाप्नुयात् ॥ १५६॥

विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
पुण्येन महता युक्तस् सतां लोके महीयते ॥ १५७॥

[2]यत्र योगेश्वरस्स्थाणुस् स्वयमेव वृषध्वजः ।
तमर्चयित्वा देवेशं गमनादेव सिद्ध्यति ॥ १५८॥

औजसं चारुणं तीर्थं स्नात्वा दीप्यति तेजसा ॥ १५९

[3]यत्र ब्रह्मादिभिर्देवैर् ऋषिभिश्च तपोधनैः ।
सैनापत्येन देवानाम् अभिषिक्तो गुहस्तदा ॥ १६०

औजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह ॥ १६१॥

---

1. अ—नास्तीदमर्धम्
2. ख—अर्धद्वयं नास्ति
3. ख—अर्धचतुष्टयं नास्ति

कुरुतीर्थे नरस्स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा कुरुलोकं प्रपद्यते ॥ १६२॥

स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः ।
स्वर्गलोकमवाप्नोति ब्रह्मलोकं च गच्छति ॥ १६३॥

ततो गच्छेत नरकं तीर्थसेवी कुरूद्वह ।
तत्र स्नात्वा नरव्याघ्र न दुर्गतिमवाप्नुयात् ॥ १६४॥

तत्रैव च महाराज विश्वेश्वरमुमापतिम् ।
अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः ॥ १६५॥

नारायणं चाभिगम्य पद्मनाभमरिन्दम ।
शोभमानो महाराज विष्णुलोकं प्रपद्यते ॥ १६६॥

तीर्थेषु सर्वदेवानां स्नातस्स पुरुषर्षभ ।
[1]सर्वदुःखैः परित्यक्तो द्योतते शशिवन्नरः ॥ १६७॥

ततस्स्वस्तिपुरं गच्छेत् तीर्थसेवी नराधिप ।
[2]प्रदक्षिणमुपावृत्य गोसहस्रफलं लभेत् ॥ १६८॥

पावनं तीर्थमासाद्य तर्पयेत् पितृदेवताः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति भारत ॥ १६९॥

गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ ।
तिस्रः कोट्यश्च तीर्थानां तस्मिन् कूपे महीपते ॥ १७०॥

---

1. ख—अर्धषट्कं नास्ति    2. क—नास्तीदमर्धम्

तत्र स्नात्वा नरो राजन् स्वर्गलोकं प्रपद्यते ॥　　१७१

आपगायां नरस्स्नात्वा अर्चयित्वा महेश्वरम् ।
गाणपत्यमवाप्नोति कुलं चोद्धरते स्वकम् ॥　　१७२

ततस्स्थाणुवनं गच्छेत् त्रिषु लोकेषु विश्रुतम् ।
तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात् ॥　　१७३

बदरीपावनं गच्छेद् वसिष्ठस्याश्रमं गतः ।
बदरीं भक्षयेत् तत्र त्रिरात्रोपोषितो नरः ॥　　१७४

सम्यग्द्वादशवर्षाणि बदरादस्य यत् फलम् ।
त्रिरात्रोपोषितस्यैव भवेत्तुल्यं नराधिप ॥　　१७५

[1]इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप ।
अहोरात्रोपवासेन शक्रलोके महीयते ॥　　१७६

एकरात्रं समासाद्य एकरात्रोषितो नरः ।
नियतस्सत्यवादी च [2]ब्रह्मलोके महीयते ॥　　१७७

ततो गच्छेत धर्मज्ञ तीर्थं त्रैलोक्यविश्रुतम् ।
आदित्यस्याश्रमं गत्वा तेजोराशेर्महात्मनः ॥　　१७८

तस्मिंस्तीर्थे नरस्स्नात्वा स्थानं महदवाप्नुयात् ।
आदित्यलोकं व्रजति कुलं चैव समुद्धरेत् ॥　　१७९

सोमतीर्थे नरो गत्वा तीर्थसेवी कुरूद्वह ।

---

1. क-घ—इन्द्रतीर्थं　　2. क-ख—सत्य

सोमलोकमवाप्नोति स वै नास्त्यत्र संशयः ॥ १८०

ततो गच्छेत धर्मज्ञ दधीचस्य महात्मनः ।
तीर्थं पुण्यतमं राजन् पावनं लोकविश्रुतम् ॥ १८१

यत्र सारस्वतो राजन् सोऽङ्गिरास्ततपसो निधिः ।
तस्मिंस्तीर्थे नरस्स्नात्वा वाजिमेधफलं लभेत् ॥ १८२

सारस्वतीं गतिं चैव लभते नात्र संशयः ॥ १८२॥

ततः कन्याश्रमं गच्छेन् नियतो ब्रह्मचर्यया ॥ १८३

त्रिरात्रमुषितो राजन्नुपवासपरायणः ।
लभेत् कन्याशतं दिव्यं ब्रह्मलोकं च गच्छति ॥ १८४

ततो गच्छेत धर्मज्ञ तीर्थं सन्निहतामपि ॥ १८४॥

तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
मासिमासि समायान्ति पुण्येन महताऽन्विताः ॥ १८५॥

सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
अश्वमेधशतस्याग्र्यं फलं प्राप्नोति मानवः ॥ १८६॥

पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ।
नद्यो नदास्तटाकानि सर्वप्रस्रवणानि च ॥ १८७॥

उदपानाश्च वप्राश्च पुण्यान्यायतनानि च ।
मासि मासि समायान्ति सन्निहत्यां न संशयः ॥ १८८॥

यत् किञ्चिद्दुष्कृतं कर्म स्त्रियो वा पुरुषस्य वा ।
स्नातमात्रस्य तत् सर्वं नश्यते नात्र संशयः ॥ १८९॥

पद्मवर्णेन यानेन ब्रह्मलोकं स गच्छति ॥ १९०

अभिवाद्य ततो यक्षं द्वारपालमरुन्दुकम् ।
कोटिरूपमुपस्पृश्य लभेद्बहु सुवर्णकम् ॥ १९१

गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नातस्तु धर्मज्ञ ब्रह्मचारी समाहितः ॥ १९२
राजसूयाश्वमेधाभ्यां फलं विन्दति शाश्वतम् ॥ १९२॥

पृथिव्यां नैमिशं पुण्यम् अन्तरिक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥ १९३॥

पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ १९४॥

दक्षिणेन सरस्वत्या उत्तरेण दृषद्वतीम् ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ॥ १९५॥

कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते ॥ १९६॥

ब्राह्मी वेदिः कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ।
सदा वसन्ति ये राजन् न ते शोच्याः कथञ्चन ॥ १९७॥

अरन्दुकारुन्दुकयोर्यदन्तरं
रामह्रदानां च मरुन्दुकस्य ।
एतत् कुरुक्षेत्रसमन्तपञ्चकं
पितामहस्योत्तरवेदिरुच्यते ॥ १९८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ २३ ॥ तीर्थयात्रापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये १९८॥ श्लोकाः]

---

## ॥ सप्तषष्टितमोऽध्यायः ॥

पुलस्त्येन भीष्मं प्रति नानातीर्थमाहात्म्यकथनम् ॥

---

पुलस्त्यः—

[1]ततो गच्छेत धर्मज्ञ धर्मतीर्थमनुत्तमम् ॥ ॥
तत्र स्नात्वा नरो राजन् [2]धर्मशीलस्समाहितः ।
आसप्तमं कुलं राजन् पुनीते नात्र संशयः ॥ १॥

ततो गच्छेत [3]धर्मज्ञ ज्ञानपावनमुत्तमम् ।
अग्निष्टोममवाप्नोति मुनिलोकं च गच्छति ॥ २॥

---

1. क-नास्तीदमर्धम् 2. ख—अयं पादोऽनन्तरश्च न स्तः
3. क—राजेन्द्र मारापतनमुत्तमम् ख—धर्मज्ञ कारापचन
घ—धर्मज्ञ कारापतनमुत्तमम्

सौगन्धिकवनं राजंस् ततो गच्छेत मानवः ॥ ३

तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
सिद्धचारणगन्धर्वकिन्नरारक्षमहोरगाः ॥ ४

तद्वनं प्रविशन्नेव सर्वपापैः प्रमुच्यते ॥ ४॥

ततो हि सा सरिच्छ्रेष्ठा नदीनामुत्तमा नदी ।
[1]प्लक्षा देवी स्रुता राजन् महारण्या सरस्वती ॥ ५॥

तत्राभिषेकं कुर्वीत वल्मीकान्निःसृते जले ।
अर्चयित्वा पितॄन् देवान् अश्वमेधफलं लभेत् ॥ ६॥

[2]ईशानाध्युषितं नाम तत्र तीर्थं सुदुर्लभम् ।
षट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः ॥ ७॥

कपिलानां सहस्रं च वाजिमेधं च विन्दति ।
तत्र स्नात्वा नरव्याघ्र दृष्टमेतत् पुरातनैः ॥ ८॥

सुगन्धाञ्शातकुम्भांश्च पञ्चयज्ञांश्च भारत ।
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ॥ ९॥

त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १०॥

गाणपत्यं च लभते देहं त्यक्त्वा न संशयः ॥ ११

---

1. क—प्लक्षो देवप्रदा राजन् महापुण्या
ख—प्लक्षा देवस्रुता राजन् महापुण्य
2. क—कवेराध्युषितं

ततो गच्छेत राजेन्द्र देव्यास्स्थानं सुदुर्लभम् ।
शाकम्भरीति विख्याता त्रिषु लोकेषु भारत ॥ १२

[1]दिव्यं वर्षसहस्रं हि शाकेन भरतर्षभ ।
आहारं सा कृतवती मासिमासि नराधिप ॥ १३

ऋषयोऽभ्यागतास्तत्र देव्या भक्तास्तपोधनाः ।
आतिथ्यं च कृतं तेषां शाकेन किल भारत ॥ १४
ततश्शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम् ॥ १४॥

शाकम्भरीं समासाद्य ब्रह्मचारी [2]जितेन्द्रियः ।
त्रिरात्रमुषितश्शाकं भक्षयेन्नियतश्शुचिः ॥ १५॥

शाकाहारस्य यत्सम्यग् वर्षैर्द्वादशभिः फलम् ।
तत् फलं तस्य भवति देव्याश्छन्देन भारत ॥ १६॥

ततो गच्छेत् सुवर्णाक्षं त्रिषु लोकेषु विश्रुतम् ।
यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत् पुरा ॥ १७॥

वरांश्च सुबहूँल्लेभे दैवतेषु सुदुर्लभान् ।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥ १८॥

अपिचास्मत्प्रियतमो लोके कृष्ण भविष्यसि ।
त्वन्मुखं च जगत् सर्वं भविष्यति न संशयः ॥ १९॥

[3]तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम् ।

---

1. ख—इदमर्धं नास्ति 2. क-ख—समाहितः
3. अ—अर्धचतुष्टयं नास्ति

अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥　　२०॥

धूमावतीं ततो गच्छेत् त्रिरात्रोपोषितो नरः ।
मनसा प्रार्थितान् कामाँल्लभते नात्र संशयः ॥　　२१॥

[1]देव्यास्तद् दक्षिणार्धे तु रथावर्तो नराधिप ।
तत्रारोहेत धर्मज्ञ श्रद्दधानो जितेन्द्रियः ॥　　२२॥
महादेवप्रसादाच्च गच्छेत परमां गतिम् ॥　　२३

प्रदक्षिणमपावृत्य ततो गच्छेत भारत ।
धारां नाम महाप्राज्ञ सर्वपापप्रणाशिनीम् ॥　　२४
तत्र स्नात्वा नरव्याघ्र न शोचति नरो भुवि ॥　　२४॥

ततो गच्छेत धर्मज्ञ नमस्कृत्य महागिरिम् ।
अशीतियोजनशतं [2]पुरस्तात् स्वर्गमुच्यते ॥　　२५॥

अशीतिं धर्मपृष्ठात्तु प्रवदन्ति मनीषिणः ।
षष्टिं प्रयागाद्राजेन्द्र कुरुक्षेत्रात् तु द्वादश ॥　　२६॥

[3]संयुक्तमेव राजेन्द्र गङ्गाद्वारं त्रिविष्टपम् ।
स्वर्गद्वारेण तत्तुल्यं गङ्गाद्वारं न संशयः ॥　　२७॥
तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः ।
पौण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् ॥　　२८॥

---

1. ख—इदमादि अर्धत्रयं नास्ति
2. क-ख—पुष्करं तीर्थमुच्यते ;　घ—पुष्करात्
3. ख—अर्धद्वयं नास्ति

[1]सप्तगङ्गे त्रिगङ्गे च [2]चक्रवर्ते च तर्पयेत् ।
देवान् पितॄंश्च विधिवत् पुण्ये लोके महीयते ॥ २९॥
ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३०॥
कपिलावटं च गच्छेत तीर्थसेवी नराधिप ।
[3]तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३१॥
नागराजस्य राजेन्द्र कपिलस्य महात्मनः ।
तीर्थं तु भरतश्रेष्ठ सर्वलोकेषु विश्रुतम् ॥ ३२॥
तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप ।
कपिलानां सहस्रस्य फलं प्राप्नोति मानवः ॥ ३३॥
ततो गच्छेत राजेन्द्र शन्तनोस्तीर्थमुत्तमम् ।
तत्र स्नात्वा नरव्याघ्र न दुर्गतिमवाप्नुयात् ॥ ३४॥
गङ्गासमुद्रयोश्चैव स्नाति यस्सङ्गमे नरः ।
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत् ॥ ३५॥
ततो गच्छेत राजेन्द्र सुगन्धं लोकविश्रुतम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ ३६॥

---

1. ख—ततो गच्छेत राजेन्द्र गङ्गाद्वारं त्रिविष्टपम् ।
स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः ।
तत्र स्नात्वा नरो धीमान् कृतकृत्यो भविष्यति ॥ [अधिकः पाठः]

2. क-ख—शङ्कावर्ते

3. क—एकादशार्धानि न सन्ति

रुद्रावर्तं ततो गच्छेत् तीर्थसेवी नराधिप ।
तत्र स्नात्वा नरो राजन् स्वर्गलोके महीयते ॥ ३७॥

[1]गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च सङ्गमे ।
स्नात्वाऽश्वमेधं प्राप्नोति स्वर्गलोकं च गच्छति ॥ ३८॥

[2]भद्रकर्णेश्वरं गत्वा देवमर्च्य यथाविधि ।
न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३९॥

ततः कुब्जावनं गच्छेत् तीर्थसेवी यथाक्रमम् ।
गोसहस्रमवाप्नोति स्वर्गलोकं च गच्छति ॥ ४०॥

[3]अरुन्धतीवटं गच्छेत् तीर्थसेवी नराधिप ॥ ४१

सामुद्रकमुपस्पृश्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः ॥ ४२
गोसहस्रफलं विन्देत् कुलं चैव समुद्धरेत् ॥ ४२॥

ब्रह्मावर्तं ततो गच्छेद् ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति सोमलोकं च गच्छति ॥ ४३॥

यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनम् ।
अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ॥ ४४॥

दर्वीसङ्क्रमणं प्राप्य तीर्थं त्रैलोक्यपूजितम् ।

---

1. ख—अर्धद्वयं नास्ति
2. क—अर्धचतुष्टयं नास्ति
3. अ—दशार्धानि न सन्ति

अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ४५॥

[1]सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवितम् ।
तत्रोषित्वा निशां पञ्च विन्देद्बहु सुवर्णकम् ॥ ४६॥

अथ देवं समासाद्य नरः परमदुर्गमम् ।
अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ॥ ४७॥

ऋषिकुल्यां समासाद्य वासिष्ठं चैव भारत ।
[2]वासिष्ठीं समभिक्रम्य सर्वे वर्णा द्विजातयः ॥ ४८॥

नरस्स्नात्यृषिकुल्यायाम् ऋषिलोकं प्रपद्यते ।
यदि तत्र वसेन्मासं शाकाहारो नराधिप ॥ ४९॥

[3]भृगुतुन्दं समासाद्य वाजिमेधफलं लभेत् ।
गत्वा वीरप्रमोक्षं च सर्वपापैः प्रमुच्यते ॥ ५०॥

कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत ।
अग्निष्टोमातिरात्राभ्यां फलमाप्नोति पुण्यकृत् ॥ ५१॥

ततस्सन्ध्यां समासाद्य विद्यातीर्थमनुत्तमम् ।
उपस्पृश्य च विद्यानां सर्वासां पारगो भवेत् ॥ ५२॥

महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने ।
एककालं निराहारो लोकान् प्राप्नोति पुष्कलान् ॥ ५३॥

---

1. क—नास्तीदमर्धम् 2. क—अर्धद्वयं नास्ति
3. क—द्वादशाहस्य यज्ञस्य फलं स लभते नरः। [अधिकः पाठः]

षष्ठकालोपवासेन मासमुष्य महालये ।
सर्वपापविशुद्धात्मा विन्देद्बहु सुवर्णकम् ॥ ५४॥

अथ वेतसिकं गत्वा पितामहनिषेवितम् ।
अश्वमेधमवाप्नोति गच्छेच्चौशनसीं गतिम् ॥ ५५॥

अथ सुन्दरकातीर्थं प्राप्य सिद्धनिषेवितम् ।
[1]रूपस्य भागी भवति दृष्टमेतत् पुरातनैः ॥ ५६॥

ततो वै ब्राह्मणं गच्छेद् ब्रह्मचारी जितेन्द्रियः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ ५७॥

ततश्च नैमिशं गच्छेत् पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैर्वृतः ॥ ५८॥

नैमिशं प्रार्थयानस्य पापस्यार्धं प्रणश्यति ।
[2]प्रविष्टमात्रस्तु नरस् सर्वपापैः प्रमुच्यते ॥ ५९॥

तत्र मासं वसेद्धीरो नैमिशे तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि नैमिशे तानि भारत ॥ ६०॥

अभिषेककृतस्तत्र नियतो नियताशनः ।
[3]गवां मेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ६१॥

पुनात्यासप्तमं चैव कुलं भरतसत्तम ॥ ६२

1. क—अर्धचतुष्टयं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

यस्त्यजेन्नैमिशे प्राणान् उपवासपरायणः ।
स मोदेत् सर्वलोकस्थ एवमाहुर्मनीषिणः ॥ ६३
नित्यं पुण्यं च मेध्यं च नैमिशं कुरुसत्तम ॥ ६३॥

गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः ।
वाजपेयमवाप्नोति ब्रह्मभूतश्च जायते ॥ ६४॥

सरस्वतीं समासाद्य तर्पयेत् पितृदेवताः ।
सारस्वतेषु लोकेषु मोदते नात्र संशयः ॥ ६५॥

ततश्च बाहुदां गच्छेद् ब्रह्मचारी समाहितः ।
देवसत्रस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ६६॥

ततश्चीरवतीं गच्छेत् पुण्यां पुण्यतमैर्वृताम् ।
पितृदेवार्चनरतो वाजिमेधमवाप्नुयात् ॥ ६७॥

विमलाशोकमासाद्य विराजति यथा [1]शची ।
तत्रोषित्वा निशामेकां स्वर्गलोके महीयते ॥ ६८॥

[2]गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम् ।
यत्र रामो गतस्स्वर्गं सभृत्यबलवाहनः ॥ १९॥

देहं त्यक्त्वा दिवं यातस् तस्य तीर्थस्य तेजसा ।
रामस्य च प्रसादेन व्यवसायेन चानघ ॥ ७०॥

तस्मिंस्तीर्थे नरस्स्नात्वा गोप्रतारे नराधिप ।

---

1. क-ख-घ—शशी 2. ख—अर्धषट्कं नास्ति

सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ७१॥

रामतीर्थे नरस्स्नात्वा गोमत्यां कुरुनन्दन ।
अश्वमेधमवाप्नोति पुनाति च कुलं नरः ॥ ७२॥

[1]शतसाहस्रकं तत्र तीर्थं भरतसत्तम ॥ ७३

तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः ।
गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ ॥ ७४

ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् ॥ ७४॥

कोटितीर्थे नरस्स्नात्वा अर्चयित्वा गुहं नृप ।
गोसहस्रफलं विद्यात् तेजस्वी च भवेन्नरः ॥ ७५॥

मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम् ।
गोमतीगङ्गयोश्चैव सङ्गमे लोकविश्रुते ॥ ७६॥
अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ॥ ७७

ततो वाराणसीं गत्वा अर्चयित्वा वृषध्वजम् ।
कपिलानां ह्रदे स्नात्वा राजसूयफलं लभेत् ॥ ७८

वाराणस्यां विशेषेण यत्र विश्वेश्वरश्शिवः ।
देव्या सह महादेवो गङ्गां समवगाहते ॥ ७९

---

1. ख—यत्र रामो गतस्स्वर्गं सभृत्यबलवाहनः ।
रामस्य च प्रसादेन व्यवसायेन चानघ ।
गोप्रतारे नरस्स्नात्वा स्वर्गलोके महीयते । [अधिकः पाठः]

तत्र मासं वसेद्धीरो ब्रह्मचारी समाहितः ।
[1]यावज्जीवकृतं पापं मासेनैकेन शुद्ध्यति ॥ ८०

ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः ।
अश्वमेधमवाप्नोति गमनादेव भारत ॥ ८१

यत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
तत्र दत्तं पितॄणां तु अक्षय्यमुपपद्यते ॥ ८२

महानद्यामुपस्पृश्य तर्पयेत् पितृदेवताः ।
अक्षयान् प्राप्नुयाल्लोकान् कुलं चैव समुद्धरेत् ॥ ८३

ततो ब्रह्मसरो गच्छेद् ब्रह्मारण्योपशोभितम् ।
पौण्डरीकमवाप्नोति प्रभातामेव शर्वरीम् ॥ ८४

तस्मिन् सरसि राजेन्द्र ब्रह्मणो यूप उद्धृतः ।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥ ८५

ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् ।
एकरात्रोषितो राजन् प्रयच्छेत् तिलधेनुकाम् ॥ ८६

सर्वपापविशुद्धात्मा सोमलोकं व्रजेद् ध्रुवम् ॥ ८६॥
तत्र चिह्नं महद्राजन्नद्यापि हि न संशयः ॥ ८७

कपिला सह वत्सेन पर्वते विचरत्युत ।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि तत्र वै ॥ ८८

---

1. क—नास्तीदमर्धम्

तेपूपस्पृश्य राजेन्द्र [1]पदेषु कुरुनन्दन ।
यत् किञ्चिदशुभं पुंसस् तत् प्रणश्यति भारत ॥ ८९
ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः ।
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥ ९०
ब्राह्मणेन व्रतं चीर्णं भवेद् द्वादशवार्षिकम् ।
[2]इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ॥ ९१
[3-4]उद्यन्तं च ततो गच्छेत् पर्वतं गीतनादितम् ।
सावित्रं तु पदं तत्र दृश्यते भरतर्षभ ॥ ९२
तत्र सन्ध्यामुपासीत ब्राह्मणस्संशितव्रतः ।
उपासिता भवेत् सन्ध्या तेन द्वादशवार्षिकी ॥ ९३
योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ ।
तत्राभिगम्य मुच्येत पुरुषो योनिसंसरात् ॥ ९४
कृष्णशुक्लचतुर्दश्यां गङ्गायां यो वसेन्नरः ।
पुनात्यासप्तमं राजन् कुलं नास्त्यत्र संशयः ॥ ९५

---

1. ("पदेषु कुरुनन्दने"ति पादः "यत्किञ्चिदशुभं पुंस" इति पादश्च ककोशे न स्तः)
2. ख—इदमर्धं नास्ति
3. क—ततो गच्छेत तं राजन् कुलीनो नात्र संशयः ।
   एष्टव्या बहवः पुत्रा यद्येकोऽपिगयां व्रजेत् ॥
   यावज्जीवकृतं पापं मासेनैकेन शुध्यति ।
   ततो गयां समासाद्य ब्रह्मचारी समाहितः ॥ [अधिकः पाठः]
4. क—नवार्धानि न सन्ति

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वा वरयेत् कन्यां नीलं वा वृषमुत्सृजेत् ॥ ९६

ततः फल्गुं व्रजेद्राजंस् तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च महतीं व्रजेत् ॥ ९७

ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः ।
यत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥ ९८

[1]ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ॥ ९८॥

तत्रार्चयित्वा राजेन्द्र ब्रह्माणममितौजसम् ।
[2]राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ९९॥

ततो राजगृहं गच्छेत् तीर्थसेवी नराधिप ।
उपस्पृश्य तपोदेषु कक्षीवानिव मोदते ॥ १००॥

यक्षिण्या नैत्यकं तत्र प्राश्नीत पुरुषश्शुचिः ।
यक्षिण्यास्तु प्रसादेन मुच्यते भ्रूणहत्यया ॥ १०१॥

मणिनागं ततो गत्वा गोसहस्रफलं लभेत् ॥ १०२

नैत्यकं भुञ्जते यस्तु मणिनागस्य मानवः ।
दष्टस्याशीविषेणाशु न तस्य क्रमते विषम् ॥ १०३

---

1. ख—गत्वा च तत्र धर्मात्मन्नश्वमेधफलं लभेत् । [अधिकः पाठः]

2. क—ततो गच्छेत राजेन्द्र धर्मपृष्ठं समाहितः ।
यत्र धर्मो महाराज नित्यमास्ते युधिष्ठिरः ॥
गत्वाऽपि तत्र धर्मात्मन्नश्वमेधफलं लभेत् । [अधिकः पाठः]

तत्रोष्य रजनीमेकां सर्वपापैः प्रमुच्यते ॥ १०३॥
ततो गच्छेत ब्रह्मर्षेर् गौतमस्याश्रमं नरः ॥ १०४
अहल्याया ह्रदे गत्वा गच्छेत परमां गतिम् ।
अभिगम्य श्रियं राजन् विन्दते श्रियमुत्तमाम् ॥ १०५
तत्रोदपानं धर्मज्ञ त्रिषु लोकेषु विश्रुतम् ।
तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात् ॥ १०६
जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः ।
तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ॥ १०७
ततो विनशनं गच्छेत् सर्वपापप्रमोचनम् ।
वाजपेयमवाप्नोति सोमलोकं च गच्छति ॥ १०८
गण्डकीयं ततो गच्छेत् सर्वतीर्थजलोद्भवाम् ।
वाजपेयमवाप्नोति सूर्यलोकं च गच्छति ॥ १०९
ततो विपाशां धर्मज्ञ समाविश्य तपोधन ।
गुह्यकेषु महाराज मोदते नात्र संशयः ॥ ११०
अथ किम्पुरमासाद्य नदं सिद्धनिषेवितम् ।
पौण्डरीकमवाप्नोति सूर्यलोकं च गच्छति ॥ १११
ततो विशल्यमासाद्य नदं त्रैलोक्यविश्रुतम् ।
अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ ११२
अथ माहेश्वरीं धारां समासाद्य नराधिप ।

अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ११३

दिवौकसां पुष्करिणीं समासाद्य नरश्शुचिः ।
न दुर्गतिमवाप्नोति वाजिमेधं फलं लभेत् ॥ ११४

माहेश्वरपदं गच्छेद् ब्रह्मचारी समाहितः ।
माहेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् ॥ ११५

तत्र कोटिस्तु तीर्थानां विश्रुता भरतर्षभ ॥ ११५॥

कूर्मरूपेणासुरेण रजन्यां वै दुरात्मना ।
ह्रियमाणा हृता पूर्वं विष्णुना प्रभविष्णुना ॥ ११६॥

तत्राभिषेकं कुर्वाणस् तीर्थकोट्यां युधिष्ठिर ॥
पौण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ॥ ११७॥

ततो गच्छेत राजेन्द्र स्थानं नारायणस्य वै ।
सदा सन्निहितो यत्र विष्णुर्वसति भारत ॥ ११८॥

[1]सालग्राम इति ख्यातो विष्णोरद्भुतकर्मणः ।
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ॥ ११९॥

[2]अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ १२०

तत्रोपदानं धर्मज्ञ सर्वपापप्रमोचनम् ।
समुद्रास्तत्र चत्वारः कूपे सन्निहितास्सदा ॥ १२१

तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ॥ १२१॥

1. ग—इदमर्धं नास्ति 2. अ—अर्धपञ्चकं नास्ति

[1]अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
विराजति यथा सोम ऋणैर्मुक्तो युधिष्ठिर ॥ १२२॥

[2]जातिस्मरमुपस्पृश्य शुचिः प्रयतमानसः ।
जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः ॥ १२३॥

वटेश्वरपुरे योगी अर्चयित्वा तु केशवम् ।
ईप्सिताँल्लभते कामान् उपवासान्न संशयः ॥ १२४॥

ततस्तु वामनं गत्वा सर्वपापप्रमोचनम् ।
अभिगम्य हरिं देवं न दुर्गतिमवाप्नुयात् ॥ १२५॥

भरतस्याश्रमं गच्छेत् सर्वपापप्रमोचनम् ॥ १२६

[3]कौशिकीमभिसेवेत महापापप्रणाशिनीम् ।
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १२७

ततो गच्छेत धर्मज्ञ चम्पकारण्यमुत्तमम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १२८

[4]अथ ज्येष्ठिलमासाद्य तीर्थं भरतसत्तम ।
उपोष्य रजनीमेकां [5]गोसहस्रफलं लभेत् ॥ १२९

तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिम् ।
मित्रावरुणयोर्लोकान् आप्नोति भरतर्षभ ॥ १३०

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. क—नास्तीदमर्धम्
4. क-ग—अर्धद्वयं नास्ति
5. ख-घ—अग्निष्टोमफलं

कन्यासंवेद्यमासाद्य नियतो नियताशनः ।
[1]मनोः प्रजापतेर्लोकान् आप्नोति भरतर्षभ ॥ १३१

कन्यायां ये प्रयच्छन्ति पानमन्नं च भारत ।
तदक्षय्यमिति प्राहू ऋषयस्संशितव्रताः ॥ १३२

निश्चीरां तु समासाद्य त्रिषु लोकेषु विश्रुताम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ १३३

ये तु दानं प्रयच्छन्ति निश्चीरासङ्गमे नराः ।
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः ॥ १३४

तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् ॥ १३५

देवकूटं समासाद्य ब्रह्मर्षिगणसेवितम् ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १३६

ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदम् ।
यत्र सिद्धिं परां प्राप्तो विश्वामित्रोऽथ कौशिकः ॥ १३७

तत्र मासं वसेद्धीरः कौशिक्यां भरतर्षभ ।
अश्वमेधेन यत् पुण्यं तन्मासेनाधिगच्छति ॥ १३८

सर्वतीर्थमये चैव यो वसेत महाह्रदे ।
न दुर्गतिमवाप्नोति विन्देद्बहु सुवर्णकम् ॥ १३९

1. क-ग—नास्तीदमर्धम्

कुमारमभिगत्वा च वीराश्रमनिवासिनम् ।
अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः ॥ १४०

अग्निधारां समासाद्य त्रिषु लोकेषु विश्रुताम् ।
अग्निष्टोममवाप्नोति न च स्वर्गान्निवर्तते ॥ १४१

पितामहसरो गत्वा शैलराजप्रतिष्ठितम् ।
तत्राभिषेकं कुर्वाण अग्निष्टोममवाप्नुयात् ॥ १४२

पितामहस्य सरसः प्रसूता लोकपावनी ।
कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता ॥ १४३

यत्र स्नात्वा कृतार्थोऽस्मीत्यात्मानमवगच्छति ।
[1]षष्ठकालोपवासेन मुच्यते ब्रह्महत्यया ॥ १४४

शिखरं वै महादेव्या गौर्यास्त्रैलोक्यविश्रुतम्
[2]समारुह्य नरश्रेष्ठ स्तनकुण्डेषु संविशेत् ॥ १४५

तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
हयमेधमवाप्नोति शक्रलोकं च गच्छति ॥ १४६

ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति शक्रलोकं च गच्छति ॥ १४७

नन्दिन्यां च समासाद्य कूपं त्रिदशसेवितम् ।
नरमेधस्य यत् पुण्यं तत्राप्नोति कुरूद्वह ॥ १४८

---

1. ख—इदमर्धं नास्ति　　2. क-ग—नास्तीदमर्धम्

[1]कालङ्क्यासङ्गमे स्नात्वा कौशिक्यरुणयोः पुनः ।
त्रिरात्रोपोषितो विद्वान् सर्वपापैः प्रमुच्यते ॥ १४९

उर्वशीतीर्थमासाद्य ततस्सोमाश्रमं व्रजेत् ॥ १४९॥
कुम्भकर्णाश्रमे गत्वा पूज्यते दिवि मानवः ॥ १५०

स्नात्वा [2]कोलमुखे पुण्ये ब्रह्मचारी समाहितः ।
जातिस्मरत्वं प्राप्नोति दृष्टमेतत् पुरातनम् ॥ १५१

भृगुतुन्दं समासाद्य विपाप्मा भवति द्विजः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति ॥ १५२

[3]सकृन्नद्यां समासाद्य पूतात्मा भवति द्विजः ।
सर्वपापविशुद्धात्मा शक्रलोकं च गच्छति ॥ १५३

ऋषभद्वीपमासाद्य मेध्यं क्रौञ्चनिषूदनम् ।
सरस्वत्यामुपस्पृश्य विमानस्थो विराजते ॥ १५४

औद्दालकं समासाद्य तीर्थं मुनिनिषेवितम् ।
तत्राभिषेकं कुर्वीत सर्वपापैः प्रमुच्यते ॥ १५५

धर्मतीर्थं समासाद्य पुण्यं ब्रह्मनिषेवितम् ।
वाजपेयमवाप्नोति नरो नास्त्यत्र संशयः ॥ १५६

---

1. क-ख-ग—कालिका घ—कालिक्या
2. क-ख—शोकामुखे + यतव्रतः; ग—कोके; घ—लोकमुखे
3. क-ख-ग—अर्धद्वयं नास्ति

अथ [1]चापां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डार्कमभिगम्यैव गोसहस्रफलं लभेत् ॥ १५७

ततो लवेलिकां गच्छेत् पुण्यां पुण्योपसेविताम् ।
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥ १५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये १५८ श्लोकाः ]

---

## ॥ अष्टषष्टितमोऽध्यायः ॥

नारदेन युधिष्ठिरं प्रति भीष्माय पुलस्त्योदिततीर्थमहिमानुवादपूर्वकमिष्टदेशगमनम् ॥

---

पुलस्त्यः—

अथ सन्ध्यां समासाद्य सम्बन्धे तीर्थ उत्तमे ।
उपस्पृश्य नरो विद्वान् भवेन्नास्त्यत्र संशयः ॥ १

रामस्य तु प्रसादेन तीर्थं राजन् कृतं पुरा ।
तल्लौहित्यं समासाद्य विन्द्याद्बहु सुवर्णकम् ॥ २

करतोयं समासाद्य त्रिरात्रोपोषितो नरः ।
अश्वमेधं दशगुणं पितामहकृतो विधिः ॥ ३

1. क-घ—पम्पां ; ख—तथा चम्पां

[1]गङ्गायास्तत्र राजेन्द्र सागरस्य च सङ्गमे ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ४

गङ्गायास्त्वपरं तीरं प्राप्य यस्स्नाति भारत ।
त्रिरात्रमुषितो राजन् सर्वान् कामानवाप्नुयात् ॥ ५

[2]ततो वैतरणीं गत्वा सर्वपापप्रमोचनीम् ।
[3]विरजं तीर्थमासाद्य विराजति यथा शशी ॥ ६

प्रभवेच्च कुले पुण्ये सर्वपापं व्यपोहति ।
गोसहस्रफलं लब्ध्वा पुनाति च कुलं नरः ॥ ७

शोणस्य ज्योतिरथ्याश्च सङ्गमे स्नाति यो नरः ।
तर्पयित्वा पितॄन् देवान् अग्निष्टोमफलं लभेत् ॥ ८

[4]शोणस्य नर्मदायाश्च प्रभवे कुरुनन्दन ।
वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत् ॥ ९

ऋषभं तीर्थमासाद्य कोसलायां नराधिप ।
वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः ॥ १०
[5]गोसहस्रफलं विन्द्यात् कुलं चैव समुद्धरेत् ॥ १०॥

कोसलां तु समासाद्य कलतीर्थमुपस्पृशेत् ।
[6]ऋषभैकादशफलं लभते नात्र संशयः ॥ ११॥

---

1. अ-ब—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति 3. क—विरजा
4. क—अर्धचतुष्टयं नास्ति; ग—अर्धद्वयं नास्ति 5. ख—इदमर्धं नास्ति
6. क—अश्वमेधफलं पुण्यं लभते नास्त्यत्र संशयः। [ पाठान्तरम् ]

पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्देत् कुलं चैव समुद्धरेत् ॥　　१२॥

ततो बदरिकातीर्थे स्नात्वा प्रयतमानसः ।
दीर्घमायुरवाप्नोति स्वर्गलोकं च गच्छति ॥　　१३॥

[1]ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम् ।
रामतीर्थे नरस्स्नात्वा वाजिमेधफलं लभेत् ॥　　१४॥

मतङ्गस्य तु केदारस् तत्रैव कुरुनन्दन ।
तत्र स्नात्वा नरो राजन गोसहस्रफलं लभेत् ॥　　१५॥

श्रीपर्वतं समासाद्य नदीतीर उपस्पृशेत् ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥　　१६॥

श्रीपर्वते महादेवो देव्या सह महाद्युतिः ।
वसते परमप्रीतो ब्रह्मा च त्रिदशैस्सह ॥　　१७॥

तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति परां सिद्धिं च गच्छति ॥　　१८॥

ऋषभं पर्वतं गत्वा पाण्ड्येषु सुरपूजितम् ।
वाजपेयमवाप्नोति नाकपृष्ठे च मोदते ॥　　१९॥

तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
सिद्धचारणगन्धर्वा ऋषिसङ्घाप्सरोगणाः ॥　　२०॥

---

1. क-ग—नास्तीदमर्धम्

ईशानं तत्र चाभ्यर्च्य त्रिरात्रोपोषितो नरः ।
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत् ॥ २१॥
ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥ २२॥
ततस्तीरे समुद्रस्य कन्यातीर्थमुपस्पृशेत् ।
तत्रोपस्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥ २३॥
अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् ।
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् ॥ २४॥
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
भूतयक्षपिशाचाश्च किन्नरास्समहोरगाः ॥ २५॥
[1]सिद्धचारणगन्धर्वमानुषाः पन्नगास्तथा ।
[2]सरितस्सागराश्शैला उपासन्त उमापतिम् ॥ २६॥
तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः ।
[3]अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ २७॥
उष्य द्वादशरात्रं तु कृतात्मा भविता नरः ॥ २८
तत एव च गायत्र्यास् स्थानं त्रैलोक्यविश्रुतम् ।
त्रिरात्रोपोषितस्तत्र गोसहस्रफलं लभेत् ॥ २९

---

1. ख—इदमर्धं नास्ति
2. ख-ग-घ—सरितस्सागराश्चैव महादेवमुपासते । [पाठान्तरम्]
3. ख-घ—दशाश्वमेधानाप्नोति गाणपत्यं च विन्दति । [पाठान्तरम्]

निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप ॥ २९॥

गायत्रीं पठते यत्र योनिसङ्करसम्भवः ।
[1]गाथां च गीतिकां वापि तत्र सम्पद्यते नृप ॥ ३०॥

संवर्तस्य तु विप्रर्षेर् वापीमासाद्य दुर्लभाम् ।
रूपस्य भागी भवति सुभगश्चैव जायते ॥ ३१॥

ततो बेण्णां समासाद्य तर्पयेत् पितृदेवताः ।
मयूरहंससंयुक्तं विमानमधिरोहति ॥ ३२॥

ततो गोदावरीं प्राप्य नदीं सिद्धनिषेविताम् ।
अवाप्य गोमेधफलं वासुकेर्लोकमाप्नुयात् ॥ ३३॥

बेण्णायास्सङ्गमे स्नात्वा वाजिमेधफलं लभेत् ॥ ३४
[2]वरदासङ्गमे स्नात्वा गोसहस्रफलं लभेत् ॥ ३४॥

ब्रह्मस्थानं समासाद्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं गच्छेत् स्वर्गलोकं च गच्छति ॥ ३५॥

कुशप्लवनमासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितस्स्नात्वा हयमेधफलं लभेत् ॥ ३६॥

ततो देवह्रदे रम्ये कृष्णबेण्णाजलोद्भवे ।
[3]जातिमात्रह्रदे चैव तथा कन्याश्रमे नृप ॥ ३७॥

---

1. ख—इदमर्धं नास्ति; घ—गाथा वा गीतिका वापि तस्य
2. ख—इदमर्धं नास्ति
3. क-ग—बेण्णायास्सङ्गमे स्नात्वा गोसहस्रफलं लभेत् । [अधिकः पाठः]
ख—इदमर्धद्वयं नास्ति

यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः ।
अग्निष्टोमशतं विन्देद् गमनादेव भारत ॥ ३८॥

सर्वदेवह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ३९

जातिमात्रह्रदे स्नात्वा भवेज्जातिस्मरो नरः ॥ ३९॥

ततश्शूर्पाकरं गच्छेज् जामदग्न्यनिषेवितम् ।
रामतीर्थे नरस्स्नात्वा विन्देद्बहु सुवर्णकम् ॥ ४०॥

सप्तगोदावरे स्नात्वा नियतो नियताशनः ।
महत् पुण्यमवाप्नोति देवलोकं च गच्छति ॥ ४१॥

ततो देवपथं गच्छेन् नियतो नियताशनः ।
देवसत्रस्य यत् पुण्यं तदवाप्नोति मानवः ॥ ४२॥

ततोऽवाप्य महापुण्यां पयोष्णीं सरितां वराम् ।
पितृदेवार्चनपरो गोसहस्रफलं लभेत् ॥ ४३॥

दण्डकारण्यमासाद्य महाराज उपस्पृशेत् ।
गोसहस्रफलं तस्य स्नातमात्रस्य भारत ॥ ४४॥

शरभङ्गाश्रमं गत्वा विन्देद् बहु सुवर्णकम् ॥ ४५

तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत् तत्र ऋषिस्सारस्वतः पुरा ॥ ४६

तत्र वेदान् प्रनष्टांस्तु मुनेरङ्गिरसस्सुतः ।
उपविष्टो महर्षीणाम् उत्तरीयेषु भारत ॥ ४७

ओंकारेण यथान्यायं सम्यगुच्चारितेन च ।
येन यत् पूर्वमभ्यस्तं तस्य तत् समुपस्थितम् ॥ ४८

ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
तथा नारायणो देवो महादेवस्तथैव च ॥ ४९

पितामहश्च भगवान् देवैस्सह महाद्युतिः ।
भृगुं निवेदयामास याजनार्थे महाद्युतिम् ॥ ५०

ततस्स चक्रे भगवान् ऋषीणां विधिवत् तदा ।
[1]सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा ॥ ५१

आज्यभागेन वै तत्र तर्पितास्तु यथाविधि ।
देवास्त्रिभुवनं याता ऋषयश्च यथासुखम् ॥ ५२

तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ।
पापं प्रणश्यते सर्वं स्त्रिया वा पुरुषस्य वा ॥ ५३

तत्र मासं [2]वसेद्धीरो नियतो नियताशनः ।
[3]ब्रह्मलोकं व्रजेद्राजन् कुलं चैव समुद्धरेत् ॥ ५४

मेधाविकं समासाद्य पितृन् देवांश्च तर्पयेत् ।
अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ॥ ५५

[4]ततः कारञ्जरं गत्वा पर्वतं लोकविश्रुतम् ।

---

1. क-ग—नास्तीदमर्धम् 2. क—वसेद्धीमान् कुलं चैव समुद्धरेत्
3. क-ग—नास्तीदमर्धम्
4. क-घ—तत्र ; ख—ततः कालाञ्जनं ; अ—ततः करञ्जरं

तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ५६

[1]योऽऽत्मानं साधयेत् तत्र गिरौ कारञ्जरे नृप ।
स्वर्गलोके स पूज्येत नरो नास्त्यत्र संशयः ॥ ५७

ततो गिरिवरश्रेष्ठे चित्रकूटे विशां पते ।
मन्दाकिनीं समासाद्य नदीं पापप्रमोचनीम् ॥ ५८

तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
अग्निष्टोममवाप्नोति गतिं च परमां व्रजेत् ॥ ५९

[2]ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् ।
यत्र देवो महादेवो नित्यं सन्निहितो नृप ॥ ६०

पुमांस्तत्र नरश्रेष्ठ दर्शनादेव सिध्यति ॥ ६०॥
कोटितीर्थे नरस्स्नात्वा गोसहस्रफलं लभेत् ॥ ६१

प्रदक्षिणमुपावृत्य [3]ज्येष्ठस्थानं व्रजेन्नृप ।
अभिगम्य महादेवं विराजति यथा शशी ॥ ६२

तत्र कूपे महाराज विश्रुता भरतर्षभ ।
समुद्रास्तत्र चत्वारो निवसन्ति युधां वर ॥ ६३

तत्रोपस्पृश्य राजेन्द्र कृत्वा चाभिप्रदक्षिणम् ।
नियतात्मा नरः पूतो गच्छेत परमां गतिम् ॥ ६४

---

1. क-ग—अर्धद्वयं नास्ति 2. क—नास्तीदमर्धम्
3. क-ग—अयं पादोऽनन्तरश्च न स्तः

ततो गच्छेत् कुरुश्रेष्ठ शृङ्गिबेरपुरं महत् ।
[1]यत्र तीर्णो महाराज रामो दाशरथिः पुरा ॥ ६५

गङ्गायां तु नरस्स्नात्वा ब्रह्मचारी समाहितः ।
विधूतपाप्मा भवति वाजपेयं च विन्दति ॥ ६६

[2]अभिगम्य महादेवम् अभ्यर्च्य च नराधिप ।
प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ॥ ६७

ततो गच्छेत राजेन्द्र प्रयागमृषिभिस्स्तुतम् ।
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥ ६८

लोकपालाश्च साध्याश्च पितरो लोकसम्मताः ।
सनत्कुमारप्रमुखास् तथैव परमर्षयः ॥ ६९

अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽपरे ।
तथा नागास्सुपर्णाश्च सिद्धाश्च परमर्षयः ॥ ७०

सरितस्सागराश्चैव गन्धर्वाप्सरसस्तथा ।
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ ७१

त्रीणि चाप्यग्निकुण्डानि येषां मध्ये च जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥ ७२

तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
यमुना गङ्गया सार्धं सङ्गता लोकपावनी ॥ ७३

---

1. क-ग—नास्तीदमर्धम्		2. ख—अर्धद्वयं नास्ति

गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ।
प्रयागं जघनस्यान्तम् उपस्थमृषयो विदुः ॥ ७४

प्रयागं सप्रतिष्ठानं कम्बलाश्वतरं तथा ।
तीर्थं भोगवती चैव नदी प्रोक्ता प्रजापतेः ॥ ७५

तत्र देवाश्च यज्ञाश्च मूर्तिमन्तो युधां वर ।
प्रजापतिमुपासन्ते ऋषयश्च महाव्रताः ॥ ७६
यजन्ते क्रतुभिर्देवास् तथा चक्रचरा नृप ॥ ७६॥

ततः पुण्यतरं नास्ति त्रिषु लोकेषु भारत ।
प्रयागस्सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो ॥ ७७॥

श्रवणाच्च प्रयागस्य नामसङ्कीर्तनादपि ।
मृत्तिकालम्भनाच्चापि नरः पापात् प्रमुच्यते ॥ ७८॥

तत्राभिषेकं यः कुर्यात् सङ्गमे संशितव्रतः ।
पुण्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥ ७९॥

एषा यजनभूमिर्हि देवानामपि सत्कृता ।
अत्र दत्तं सुसूक्ष्मं च महद् भवति भारत ॥ ८०॥

न वेदवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागगमनं प्रति ॥ ८१॥

दशतीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः ।
येषां सान्निध्यमत्रैव कीर्तितं कुरुनन्दन ॥ ८२॥

चातुर्वेद्ये च यत् पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे ॥ ८३॥

तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ।
तत्राभिषेकं यः कुर्यात् सोऽश्वमेधफलं लभेत् ॥ ८४॥

तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् ।
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ॥ ८५॥

यत्र गङ्गा महाराज स देशस्तत् तपोवनम् ।
[1]अधीत्य द्विजमध्ये च विमलत्वमवाप्नुयात् ॥ ८६॥

सिद्धिक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ ८७

इदं सत्यं द्विजातीनां साधूनामात्मनश्च यत् ।
सुहृदां च समेतानां शिष्यस्यानुगतस्य च ॥ ८८

इदं धर्म्यमिदं पुण्यम् इदं मेध्यमिदं सुखम् ।
इदं स्वर्गमिदं रम्यं इदं पावनमुत्तमम् ॥ ८९

महर्षीणामिदं पुण्यं सर्वपापप्रमोचनम् ।
अधीत्य द्विजमध्ये च निर्मलत्वमवाप्नुयात् ॥ ९०

यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं सदा शुचिः ।
[2]जातीश्च बह्वीस्स्मरतो नाकपृष्ठे च मोदते ॥ ९१

अन्यान्यपि च तीर्थानि कीर्तितान्यागमानि च ।

---

1. क-ख-ग—इदमर्धं नास्ति　　2. ग—अर्धद्वयं नास्ति

मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ॥ ९२

एतानि वसुभिस्साध्यैर् आदित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च स्नातानि सुकृतैषिभिः ॥ ९३

एवं त्वमपि कौरव्य विधिनाऽनेन सुव्रत ।
व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्धते ॥ ९४

[1]भाषितैः कारणैः पूर्वम् आस्तिक्याच्छ्रुतिदर्शनात् ।
[2]नाव्रतो नाकृतात्मा च नाशुचिर्न च तस्करः ॥ ९५

स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ९५॥

त्वया तु सत्यवृत्तेन नित्यं धर्मार्थदर्शिना ।
पितरस्तारितास्सर्वे सर्वे च प्रपितामहाः ॥ ९६॥

पितामहपुरोगाश्च देवास्सर्षिगणा नृप ।
तव धर्मेण धर्मज्ञ नित्यमेवाभितोषिताः ॥ ९७॥

अवाप्स्यसि च लोकांश्च वसूनां वासवोपम ।
कीर्तिं च महतीं भीष्म प्राप्स्यसे भुवि शाश्वतीम् ॥ ९८॥

नारदः—

एवमुक्त्वाऽभ्यनुज्ञातः पुलस्त्यो भगवानृषिः ।
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ ९९॥

---

1. ख—इदमर्धं नास्ति
2. क-ग-घ—प्राप्यन्ते तानि तीर्थानि सद्भिश्शास्त्रार्थदर्शिभिः ।
[ इदमर्धमधिकम् ]

भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान् ।
पुलस्त्यवचनाच्चैव पृथिवीमनुचक्रमे ॥ १००॥

अनेन विधिना यस्तु पृथिवीं सञ्चरिष्यति ।
अश्वमेधफलं साग्रं फलं प्रेत्य स भोक्ष्यते ॥ १०१॥

[1]अतश्चार्थगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम ।
[2]भीष्मः कुरूणां प्रवरो यथा पूर्वमवाप्तवान ॥ १०२॥

ऋषीन् नेतासि यस्मात् त्वं तेन तेऽष्टगुणं फलम् ॥ १०३

रक्षोगणविकीर्णानि तीर्थान्येतानि भारत ।
अगम्यानि मनुष्येन्द्रैस् त्वामृते कुरुनन्दन ॥ १०४

इदं देवर्षिचरितं सर्वतीर्थानुसश्रितम् ।
यः पठेत् काल्यमुत्थाय सर्वपापैः प्रमुच्यते ॥ १०५

ऋषिमुख्यास्सदा यत्र वाल्मीकिस्त्वथ काश्यपः ।
आत्रेयस्त्वथ कौण्डिन्यो विश्वामित्रोऽथ गौतमः ॥ १०६

असितो देवलश्चैव मार्कण्डेयोऽथ गालवः ।
[3]वसिष्ठश्च महातेजा मुनिरौद्दालकस्तथा ॥ १०७

शौनकस्सह पुत्रेण व्यासश्च जपतां वरः ।
भारद्वाजो मुनिश्रेष्ठो दुर्वासाश्च महातपाः ॥ १०८

एते ऋषिवरास्सर्वे त्वत्प्रतीक्षास्तपोधनाः ।

1. क-ग—अर्धद्वयं नास्ति 2. ख—नेदमर्धम् 3. ख—अर्धमिदं नास्ति

एभिस्सह महाराज तीर्थान्येतान्यनुव्रज ॥ १०९

एष ते लोमशो नाम देवर्षिरमितद्युतिः ।
समेष्यति महाराज तेन सार्धमनुव्रज ॥ ११०

[1]मया च सह धर्मज्ञ तीर्थान्येतान्यनुव्रज ।
प्राप्स्यसे महतीं सिद्धिं यथा राजा महाभिषक् ॥ १११

यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ ११२

यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
[2]तथा त्वमपि राजेन्द्र भ्राजसे रश्मिमानिव ॥ ११३

[3]यथा मनुर्यथेक्ष्वाकुर् यथा पूरुर्महायशाः ।
यथा वैन्यो महातेजास् तथा त्वमपि विश्रुतः ॥ ११४

यथा च वृत्रहा सर्वान् सपत्नान्निर्दहन् पुरा ।
तथा शत्रुक्षयं कृत्वा प्रजास्त्वं पालयिष्यसि ॥ ११५

स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं प्राप्स्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥ ११६

वैशम्पायनः—

एवमाश्वास्य राजानं नारदो भगवानृषिः ।
अनुज्ञाप्य महाराज तत्रैवान्तरधीयत ॥ ११७

---

1. ख—इदमर्धं नास्ति
2. क-ख-ग—नास्तीदमर्धम्
3. ख—अर्धद्वयं नास्ति

युधिष्ठिरोऽपि धर्मात्मा तमेवार्थमचिन्तयत् ।
तीर्थयात्राश्रितं पुण्यम् ऋषीणां प्रत्यवेदयत् ॥ ११८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[ अस्मिन्नध्याये ११८ श्लोकाः ]

## ॥ एकोनसप्ततितमोऽध्यायः ॥

युधिष्ठिरेण धौम्यं प्रति अर्जुनेन विना स्वस्य काम्यकवनेऽनभिरुचिकथनपूर्वकं निवासाय स्थानान्तरकथनप्रार्थना ॥

वैशम्पायनः—

भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः ।
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ॥ १

युधिष्ठिरः—

मया स पुरुषव्याघ्रो जिष्णुस्सत्यपराक्रमः ।
अस्त्रहेतोर्महाबाहुर् अमितात्मा प्रवासितः ॥ २

स हि वीरोऽनुरक्तश्च समर्थश्च तपोधनः ।
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ॥ ३

अहं ह्येतावुभौ ब्रह्मन् कृष्णावरिनिघातिनौ ।
अभिजानामि विक्रान्तौ तथा व्यासः परन्तपौ ॥ ४

त्रियुगं पुण्डरीकाक्षौ वासुदेवधनञ्जयौ ।

नारदोऽपि तथा वेद योऽप्यशंसत् सदा मम ॥ ५
तथाऽहमपि जानामि नरनारायणावृषी ।
शक्तोऽयमित्यतो मत्वा मया स प्रेषितोऽर्जुनः ॥ ६
इन्द्रादनवमश्शक्रं सुरसूनुस्सुराधिपम् ।
द्रष्टुमस्त्राणि चादातुम् इन्द्रादिति विवासितः ॥ ७
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः ।
धृतराष्ट्रस्य पुत्रेण धृता युधि महाबलाः ॥ ८
सर्वे वेदविदश्शूरास् सर्वेऽस्त्रकुशलास्तथा ।
सर्वे महारथा ख्यातास् सर्वे जितपरिश्रमाः ॥ ९
योद्धुकामाश्च पार्थेन सततं वै महाबलाः ॥ ९॥
स च दिव्यास्त्रवित् कर्णस् सूतपुत्रो महारथः ।
योऽस्त्रवेगानिलबलश् शरार्चिस्तलनिःस्वनः ॥ १०॥
रजोधूम्रोऽस्त्रसम्पातो धार्तराष्ट्रानिलोद्धतः ।
निसृष्ट इव कालेन युगान्तज्वलनो यथा ॥ ११॥
मम सैन्यमयं कक्षं प्रधक्ष्यति महाबलः ॥ १२
तं स कृष्णानिलोद्धूतो दिव्यास्त्रजलदो महान् ।
श्वेतवाजिबलाकाभृद् गाण्डीवेन्द्रायुधोज्ज्वलः ॥ १३
स च तं शरधाराभिः प्रदीप्तं कर्णपावकम् ।
उदीर्णोऽर्जुनमेघोऽयं शमयिष्यति संयुगे ॥ १४
स साक्षादेव सर्वाणि शक्रात् परपुरञ्जयः ।

दिव्यान्यस्त्राणि बीभत्सुर् यथावत् प्रतिपत्स्यते ॥ १५

अलं स तेषां सर्वेषाम् इति मे धीयते मतिः ।
[1]नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया ॥ १६

ते वयं पाण्डवं सर्वे गृहीतास्त्रं धनञ्जयम् ।
द्रष्टारो न हि बीभत्सुर् भारमुद्यम्य सीदति ॥ १७

वयं तु तमृते वीरं वनेऽस्मिन् द्विपदां वर ।
अवधानं न गच्छामः काम्यके सह कृष्णया ॥ १८

भवानन्यद्वनं साधु बह्वन्नं जलवच्छुचि ।
आख्यातु रमणीयं च सेवितं पुण्यकर्मभिः ॥ १९

यत्र कञ्चिद्वयं कालं वसन्तस्सत्यविक्रमम् ।
प्रतीक्षामोऽर्जुनं वीरं वर्षकामा इवाम्बुदम् ॥ २०

विविधानाश्रमान् कांश्चिद् द्विजातिभ्यः परिश्रुतान् ।
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् ॥ २१

आचक्ष्व न हि मे ब्रह्मन् रोचते तमृतेऽर्जुनम् ।
वनेऽस्मिन् काम्यके वासो गच्छामोऽन्यां दिशं प्रति ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

---

1. ख—इदमर्धं न

## ॥ सप्ततितमोऽध्यायः ॥

धौम्येन युधिष्ठिराय प्राचीस्थनानातीर्थकथनम् ॥

वैशम्पायनः—

तान् सर्वानुत्सुकान् दृष्ट्वा पाण्डवान् दीनचेतसः ।
आश्वासयंस्ततो धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ १

धौम्यः—

ब्राह्मणानुमतान् पुण्यान् आश्रमान् भरतर्षभ ।
दिशस्तीर्थानि शैलांश्च शृणु मे वदतो नृप ॥ २

पूर्वं प्राचीं दिशं राजन् राजर्षिगणसेविताम् ।
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथास्मृति ॥ ३

तस्यां देवर्षिजुष्टायां नैमिशं नाम भारत ।
यत्र तीर्थानि देवानां सुपुण्यानि पृथक्पृथक् ॥ ४

यत्र सा गोमती नाम पुण्या देवर्षिसेविता ।
यज्ञभूमिश्च देवानां शामित्रं च विवस्वतः ॥ ५

यस्यां गिरिवरः पुण्यो गयो राजर्षिसेवितः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥ ६

यदर्थे पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
[1]एष्टव्या बहवः पुत्रा यदि कश्चिद् गयां व्रजेत् ॥ ७

---

1. क-ग—नास्तीदमर्धम्

महानदी च तत्रैव तथा हयशिरोऽनघ ।
यत्रासौ कीर्त्यते विप्रैर् अक्षय्यकरणो वटः ॥ ८
यत्र दत्तं पितृभ्योऽन्नम् अक्षय्यं भवति प्रभो ।
सा च पुण्यजला तत्र फल्गुनामा महानदी ॥ ९
बहुमूलफला चैव कौशिकी भरतर्षभ ।
विश्वामित्रोऽभ्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥ १०
गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः ।
अयजत् तत्र बहुभिः क्रतुभिर्भूरिदक्षिणैः ॥ ११
पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम् ।
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः ॥ १२
तत्रानुवंशं भगवान् जामदग्न्यस्तथा जगौ ।
विश्वामित्रस्य तां दृष्ट्वा विभूतिं त्वतिमानुषीम् ॥ १३
कान्यकुब्जेऽपिबत् सोमम् इन्द्रेण सह कौशिकः ।
ततः क्षत्रादपाक्रामद् ब्राह्मणोऽस्मीति चाब्रवीत् ॥ १४
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर सङ्गमं लोकविश्रुतम् ॥ १५
यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्मिन् भरतसत्तम ॥ १६
अगस्त्यस्य च राजेन्द्र तत्राश्रमपदं महत् ।
हिरण्यबिन्दुः कथितो गिरौ कालञ्जरे नृप ॥ १७

अत्यन्यान् पर्वतान् राजन् पुण्यो गिरिवरश्शिवः ।
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः ॥ १८

अयजत् तत्र कौन्तेय पूर्वमेव पितामहः ।
यत्र भागीरथी गङ्गा सदस्यासीद्युधिष्ठिर ॥ १९

यत्र सा ब्रह्मशालेति पुण्या ख्याता विशाम्पते ।
धूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनम् ॥ २०

पवित्रो मङ्गलीयश्च ख्यातो लोके सनातनः ।
केदारश्च मतङ्गस्य महानाश्रम उत्तमः ॥ २१

कुण्डोदः पर्वतो रम्यो बहुमूलफलोदकः ।
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् ॥ २२

यत्र देववनं पुण्यं तापसैरुपशोभितम् ।
बाहुला च नदी यत्र नन्दा च गिरिमूर्धनि ॥ २३

तीर्थानि सरितश्शैलाः पुण्यान्यायतनानि च ।
प्राच्यां दिशि महाराज कीर्तितानि मया तव ॥ २४

तिसृष्वन्यानि राजेन्द्र दिक्षु तीर्थानि मे शृणु ।
सरितः पर्वतांश्चैव पुण्यान्यायतनानि च ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ अस्मिन्नध्याये २५ श्लोकाः ]

## ॥ एकसप्ततितमोऽध्यायः ॥

धौम्येन युधिष्ठिरं प्रति दक्षिणदिक्स्थनानातीर्थानुकीर्तनम् ॥

धौम्यः—

दक्षिणेन तु पुण्यानि शृणु तीर्थानि भारत ।
विस्तरेण यथाबुद्धि कीर्त्यमानानि भारत ॥ १

यस्यामाख्यायते पुण्या दिशि गोदावरी नदी ।
बह्वारामा बहुजला तापसाचरिता शुभा ॥ २

वेण्णा [1]भीमवती चोभे नद्यौ पापभयापहे ।
मृगद्विजसमाकीर्णे तापसालयभूषिते ॥ ३

राजर्षेस्तस्य च सरिन् नृगस्य भरतर्षभ ।
रम्यतीर्था बहुजला [2]तापसाचरिता शुभा ॥ ४

अपि चात्र महाबाहो मार्कण्डेयो महातपाः ।
अनुवंश्यां जगौ गाथां नृगस्य वसुधाधिप ॥ ५

नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतम् ।
अमाद्यदिन्द्रस्सोमेन दक्षिणाभिर्द्विजातयः ॥ ६

माठरस्य वनं पुण्यं बहुमूलफलं शिवम् ।

1. क-ग-घ—हैमवती; ख—भीमरथी
2. क-ख-ग—पयोष्णी द्विजसेविता

[1]यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ ॥ ७

प्रवेण्युत्तरपार्श्वे तु पुण्ये कण्वाश्रमे तथा ।
तापसानामरण्यानि कीर्तितानि यथाश्रुति ॥ ८

वेदी शूर्पारके तात जमदग्नेर्महात्मनः ।
रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ॥ ९

अशोकतीर्थं मर्त्येषु कौन्तेय बहुलाश्रमम् ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणं च युधिष्ठिर ॥ १०

कुमार्यः कथिताः पुण्याः पुण्येषु भरतर्षभ ।
ताम्रपर्णीं तु कौन्तेय कीर्तयिष्यामि तां शृणु ॥ ११

यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत ॥ १२

शीततोयो बहुजलः पुण्यस्तात शिवश्च सः ।
ह्रदः परमदुष्प्रापो मानवैरकृतात्मभिः ॥ १३

तत्रैव तृणसोमाग्नेस् सम्पन्नः फलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसहे गिरौ ॥ १४

वैडूर्यपर्वतस्तत्र श्रीमान् मणिमय[2]श्शुभः ।
अगस्त्यस्याश्रमश्चैव बहूमूलफलोदकः ॥ १५

---

1. क-ग—आपश्च + स्रोतसो गिरः ; ख—इदमर्धं नास्ति ; घ—यूपं च
2. ख-घ—श्शिवः

सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि ते ।
आश्रमान् सरितश्शैलान् सरांसि च नराधिप ॥ १६

तमसो मज्जनं विप्रास् तत्रापि कथयन्त्युत ।
प्रभासं चोदधेस्तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १७

तत्र पिण्डारकं नाम तापसाचरितं शिवम् ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् ॥ १८

तत्र देवर्षिवर्येण नारदेनानुकीर्तितः ।
पुराणश्श्रूयते श्लोकस् तं निबोध युधिष्ठिर ॥ १९

पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।
उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीयते ॥ २०

[1]पुण्या द्वारवती तत्र यत्रासौ मधुसूदनः ।
साक्षाद्देवः पुराणोऽसौ स हि धर्मस्सनातनः ॥ २१

ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ २२

पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ॥ २३

---

1. ख—एष नारायणश्श्रीमान् क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ॥ [ अधिकः पाठः ]

[1]त्रैलोक्यं पुण्डरीकाक्षो देवदेवस्सनातनः ।
[2]आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये २४ श्लोकाः]

---

## ॥ द्विसप्ततितमोऽध्यायः ॥

धौम्येन युधिष्ठिरं प्रति प्रतीचीस्थतीर्थकथनम् ॥

---

धौम्यः—

अवन्तीषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि ।
यानि यत्र पवित्राणि पुण्यान्यायतनानि च ॥ १

प्रियङ्ग्वाम्रवणोपेता वानीरवनमालिनी ।
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ॥ २

निकेतः ख्यायते पुण्यो यत्र विश्रवसो मुनेः ।
जज्ञे धनपतिर्यत्र कुबेरो नरवाहनः ॥ ३

वैडूर्यशिखरो नाम पुण्यो गिरिवरश्शुभः ।

---

1. ख—मङ्गलं भगवान् विष्णुर् मङ्गलं मधुसूदनः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ॥ [ अधिकः पाठः ]
2. ख—आदिरन्तो ह्यचिन्त्यात्मा मध्यश्च [ पाठान्तरम् ]

दिव्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ४
तस्य शैलस्य शिखरे सरस्तरुवनाकुलम् ।
प्रफुल्लनलिनं राजन् देवगन्धर्वसेवितम् ॥ ५
बह्वाश्चर्यं महाराज दृश्यते तत्र पर्वते ।
पुण्ये स्वर्गोपमे दिव्ये पुण्यर्षिगणसेविते ॥ ६
ह्लादिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित् ।
विश्वामित्रनदी पारा पुण्या परपुरञ्जय ॥ ७
यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः ।
पपात स पुनर्लोकाँल्लेभे धर्मान् सनातनान् ॥ ८
तत्र पुण्यो ह्रदस्तात मैनाकश्चैव पर्वतः ।
बहुमूलफलो वीर असितो नाम पर्वतः ॥ ९
आश्रमः कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर ।
च्यवनस्याश्रमश्चैव ख्यातस्सर्वत्र पाण्डव ॥ १०
तत्राल्पेनैव सिद्ध्यन्ति मानवास्तपसा विभो ॥ १०॥
जम्बूमार्गो महाराज ऋषीणां भावितात्मनाम् ।
आश्रमश्शाम्यते श्रेष्ठो मृगद्विजगणायुतः ॥ ११॥
जम्बूमार्गो महाराज सततं तापसैर्युतः ।
केतुमाला च मेध्या च गङ्गारण्यं च भूमिप ॥ १२॥
ख्यातं च सैन्धवारण्यं पुण्यं मुनिनिषेवितम् ॥ १३

पितामहसरः पुण्यं पुष्करं नाम भारत ।
वैखानसानां सिद्धानाम् ऋषीणामाश्रमः प्रियः ॥ १४

अप्यत्र संस्तवार्थाय प्रजापति[1]रथो जगौ ।
पुष्करेषु नरश्रेष्ठ गाथां सुकृतिनां शृणु ॥ १५

मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः ।
पापानि विप्रणश्यन्ति नाकपृष्ठे च पूज्यते ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ अस्मिन्नध्याये १६ श्लोकाः ]

## ॥ त्रिसप्ततितमोऽध्यायः ॥

धौम्येन युधिष्ठिरं प्रत्युदीचीस्थतीर्थकथनम् ॥

धौम्यः—

उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै ।
तानि ते कीर्तयिष्यामि पुण्यान्यायतनानि च ॥ १

सरस्वती पुण्यतमा ह्रादिनी वनमालिनी ।
समुद्रगा महावेगा यमुना यत्र पाण्डव ॥ २

1. ख-ग-घ—रुदाजगौ

यत्र पुण्यतमं तीर्थं प्लक्षावतरणं शुभम् ।
यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथं द्विजाः ॥ ३

पुण्यं चाख्यायते दिव्यं शिवमग्निशिरोऽनघ ।
सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ॥ ४

एतस्मिन्नेव चार्थेऽसौ इन्द्रगीता युधिष्ठिर ।
गाथा चरति लोकेऽस्मिन् गीयमाना द्विजातिभिः ॥ ५

अग्नयस्सहदेवेन ये चिता यमुनामनु ।
शतं शतसहस्राणि सहस्रशतदक्षिणाः ॥ ६

तत्रैव भरतो राजा चक्रवर्ती महायशाः ।
विंशतिं सप्त चाष्टौ च हयमेधा[1]नुपाहरत् ॥ ७

कामकृद्यो द्विजातीनां श्रुतस्तात मया पुरा ।
अत्यन्तमाश्रमः पुण्यश् शङ्करस्तत्र विश्रुतः ॥ ८

सरस्वती नदी सद्भिस् सततं पार्थ पूजिता ।
वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ॥ ९

दृषद्वती पुण्यतमा यत्र ख्याता युधिष्ठिर ।
तत्र वै वर्ण्यवर्णौ च सुपुण्यौ मनुजाधिप ॥ १०

वेदज्ञौ वेदविदितौ विद्यावेदविदावुभौ ।
यजन्तौ क्रतुभिर्नित्यं पुण्यैर्भरतसत्तम ॥ ११

---

1. क-ख-ग-घ—नुदाहरत्

समेत्य बहुशो देवास् सेन्द्रास्सवरुणाः पुरा ।
विशाखयूपेऽतप्यन्त [1]तस्मात् पुण्यतमस्स च ॥ १२

ऋषिर्महान् महाभागो जमदग्निर्महायशाः ।
पलाशकेषु पुण्येषु रम्येष्वयजताभिभूः ॥ १३

यत्र सर्वास्सरिच्छ्रेष्ठास् साक्षात् तमृषिसत्तमम् ।
स्वंस्वं तोयमुपादाय परिवार्योपतस्थिरे ॥ १४

अपि चात्र महाराज स्वयं विश्वावसुर्जगौ ।
इमं श्लोकं तदा वीर यज्ञं वीक्ष्य महात्मनः ॥ १५

[2]यजमानस्य वै देवान् जमदग्नेर्महात्मनः ।
आगम्य सरितस्सर्वान् मधुना समतर्पयन् ॥ १६

गन्धर्वयक्षरक्षोभिर् अप्सरोभिश्च शोभितम् ।
किरातकिन्नरावासं शैलं शिखरिणां वरम् ॥ १७

बिभेद तरसा गङ्गा गङ्गाद्वारे युधिष्ठिर ।
पुण्यं तत् ख्यायते राजन् ब्रह्मर्षिगणसेवितम् ॥ १८

सनत्कुमारः कौरव्य पुण्यं कनखलं तथा ।
पर्वतश्च पुरुर्नाम यत्र जातः पुरूरवाः ॥ १९

भृगुर्यत्र तपस्तेपे महर्षिगणसेवितः ।
स राजन्नाश्रमः ख्यातो भृगुतुन्दो महागिरिः ॥ २०

1. अ—पुण्यात्
2. क-ख—नास्तीदमर्धम्

[1]यस्य भूतं भविष्यच्च भवच्च भरतर्षभ ।
नारायणः प्रभुर्विष्णुश् शाश्वतः पुरुषोत्तमः ॥ २१

तस्यातियशसः पुण्यां विशालां बदरीमनु ।
आश्रमः ख्यायते पुण्यस् त्रिषु लोकेषु भारत ॥ २२

उष्णतोयवहा गङ्गा शीततोयवहाऽपरा ।
सुवर्णसिकता राजन् विशालां बदरीमनु ॥ २३

ऋषयो यत्र देवाश्च महाभागा महौजसः ।
प्राप्य नित्यं नमस्यन्ते देवं नारायणं प्रभुम् ॥ २४

यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत् पार्थ तीर्थान्यायतनानि च ॥ २५

तत् पुण्यं तत् परं ब्रह्म तत् तीर्थं तत् तपोवनम् ।
तत्र देवर्षयस्सिद्धास् सर्वे चैव तपोधनाः ॥ २६

आदिदेवो महायोगी यत्रास्ते मधुसूदनः ।
पुण्यानामपि तत् पुण्यं मा भूत् ते संशयोऽत्र वै ॥ २७

एतानि राजन् पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च ॥ २८

एतानि वसुभिस्साध्यैर् आदित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च सेवितानि महात्मभिः ॥ २९

1. ख—इदमर्धं नास्ति

चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः ।
भ्रातृभिश्च महाभागैर् उत्कण्ठां विजयिष्यसे ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

लोमशेनेन्द्रवचनाद्युधिष्ठिरं प्रति पार्थस्य पाशुपतादिप्राप्तिकथनपूर्वकमिन्द्रसन्देशनिवेदनम् ॥ १ ॥ लोमशेन युधिष्ठिरं प्रति स्वसाहित्येन तीर्थयात्राविधायकपार्थवचननिवेदनम् ॥ २ ॥ युधिष्ठिरेण लोमशाज्ञयाऽधिकपरिजनविसर्जनम् ॥ ३ ॥

वैशम्पायनः—

एवं सम्भाषमाणे तु धौम्ये कौरवनन्दन ।
लोमशस्सुमहातेजा ऋषिस्तत्राजगाम ह ॥ १

तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ।
उदतिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ २

तमभ्यर्च्य यथान्यायं धर्मपुत्रो युधिष्ठिरः ।
पप्रच्छागमने हेतुम्[1] अटने च प्रयोजनम् ॥ ३

1. ख—अयं पादोऽनन्तरश्च न स्तः

स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥　　४

लोमशः—

सञ्चरन्नस्मि कौन्तेय सर्वाल्लोकान् यदृच्छया ।
गतश्शक्रस्य भवनं तत्रापश्यं सुरेश्वरम् ॥　　५

तव च भ्रातरं वीरम् अपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ॥　　६

आसीत् पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ।
आह मां तत्र देवेशो गच्छ पाण्डुसुतानिति ॥　　७

सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ।
वचनात् पुरुहूतस्य पार्थस्य च महात्मनः ॥　　८

आख्यास्ये ते प्रियं तात महत् पाण्डवनन्दन ।
भ्रातृभिस्सहितो राजन् कृष्णया चैव तच्छृणु ॥　　९

यस्त्वयोक्तो महाबाहुर् अस्त्रार्थं पाण्डवर्षभ ।
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं महत् ॥　　१०

यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागतम् ।
अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना ॥　　११

तत् समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ।
वज्रं चान्यानि चास्त्राणि दण्डादीनि युधिष्ठिर ॥　　१२

यमात् कुबेराद्वरुणाद् इन्द्राच्च कुरुनन्दन ।
अस्त्राण्यधीतवान् पार्थो दिव्यान्यमितविक्रमः ॥ १३

विश्वावसोस्तु तनयाद् गीतं नृत्तं च साम च ।
वादित्रं च यथान्यायं [1]प्रत्यविन्दद् यथाविधि ॥ १४

एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमाप्तवान् ।
सुखं वसति बीभत्सुर् अनुजस्यानुजस्तव ॥ १५

यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ।
तच्च ते कथयिष्यामि युधिष्ठिर निबोध तत् ॥ १६

इन्द्रः—

भवान् मनुष्यलोकाय गमिष्यति न संशयः ।
ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम ॥ १७

आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ।
सुरकार्यं महत् कृत्वा यदशक्यं दिवौकसाम् ॥ १८

तपसा तु त्वमात्मानं भ्रातृभिस्सह योजय ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ १९

अहं च कर्णं जानामि यथावत् पुरुषर्षभ ।
न स पार्थस्य सङ्ग्रामे कलामर्हति षोडशीम् ॥ २०

यच्चापि ते भयं तस्मान्मनसिस्थमरिन्दम ।
तच्चाप्यपहरिष्यामि [2]सव्यसाचाविहागते ॥ २१

---

1. ख—अयं पादोऽनन्तरश्च न स्तः 2. क-ख-घ—सव्यसाचिनि चागते

यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति ।
तच्च ते लोमशस्सर्वं कथयिष्यत्यसंशयम् ॥ २२

यच्च किञ्चित् तपोयुक्तं फलं तीर्थेषु भारत ।
ब्रह्मर्षिरेव यद्ब्रूयात् तच्छ्रद्धेयं न चान्यथा ॥* २३

लोमशः—

धनञ्जयेन चाप्युक्तं यत् तच्छृणु युधिष्ठिर ।
भ्रातरं मेऽनुजैस्साधं योजयेर्धर्म्यया धिया ॥ २४

त्वं हि धर्मं परं वेत्थ तपांसि च तपोधन ।
श्रीमतां चापि जानासि धर्मं राज्ञां सनातनम् ॥ २५

स भवान् यत् परं वेद पावनं पुरुषान् प्रति ।
तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवम् ॥ २६

यथा तीर्थानि गच्छेत गाश्च दद्यात् स पार्थिवः ।
तथा सर्वात्मना कार्यम् इति मां विजयोऽब्रवीत् ॥ २७

भवता चानुगुप्तोऽसौ चरेत् तीर्थानि सर्वशः ।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ २८

दधीचिरिव देवेन्द्रं यथा चाप्यङ्गिरा रविम् ।
तथा रक्षस्व कौन्तेयं राक्षसेभ्यो द्विजोत्तम ॥ २९

यातुधाना हि बहवो राक्षसाः पर्वतोपमाः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

त्वया हि गुप्तान् कौन्तेयान् नातिवर्तेयुरन्तिकात् ॥ ३०

सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ३१

द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ३२

इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा शुभावहा ॥ ३३

नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत् ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ३४

[1]त्वं तु धर्मरतिर्नित्यं धर्मज्ञस्सत्यसङ्गरः ।
विमुक्तस्सर्वपापेभ्यो भूय एव भविष्यसि ॥ ३५

यथा भगीरथो राजा राजानश्च गयादयः ।
यथा ययातिः कौन्तेय तथा त्वमपि पाण्डव ॥ ३६

युधिष्ठिरः—

न हर्षात् सम्प्रपश्यामि वाक्यस्यास्योत्तरं मुने ।
स्मरेद्धि देवराजोऽयं किं नामाभ्यधिकं ततः ॥ ३७

भवता सङ्गमो यस्य भ्राता चैव धनञ्जयः ।
वासवस्स्मरते यस्य को नामाभ्यधिकस्ततः ॥ ३८

---

1. इदमर्धं नास्ति

यच्च मां भगवानाह तीर्थानां दर्शनं प्रति ।
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ ३९

तद्यदा मन्यसे द्रष्टा गमने तीर्थदर्शने ।
तदैव गन्तास्मि दृढम् एष मे निश्चयः परः ॥ ४०

वैशम्पायनः—
गमने कृतबुद्धिं तं पाण्डवं लोमशोऽब्रवीत् ।
लोमशः—
लघुर्भव महाराज लघुस्स्वैरं गमिष्यसि ॥ ४१

युधिष्ठिरः—
भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये ।
ये चाप्यनुगताः पौरा राजभक्तिपुरस्कृताः ॥ ४२

धृतराष्ट्रं महाराजम् अभिगच्छन्तु चैव ते ।
स ददाति यथाकालम् उचिता यस्य या भृतिः ॥ ४३

स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः ।
अस्मत्प्रियहितार्थाय पाञ्चाल्यो वः प्रदास्यति ॥ ४४

वैशम्पायनः—
ततो भूयिष्ठशः पौरा गुरौ भारे समाहिते ।
विप्राश्च यतयो युक्ता जग्मुर्नागपुरं प्रति ॥ ४५

तान् सर्वान् धर्मराजस्य प्रेम्णा राजाऽम्बिकासुतः ।
प्रतिजग्राह विधिवद् धनैश्च समतर्पयत् ॥ ४६

ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैस्सह ।
लोमशेन च सुप्रीतस् त्रिरात्रं काम्यकेऽवसत् ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]

## ॥ पञ्चसप्ततितमोऽध्यायः ॥

युधिष्ठिरेण लोमशादिभिस्सह तीर्थसेवनाय प्रस्थानम् ॥

वैशम्पायनः—

ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः ।
अभिगम्य तदा राजन्निदं वचनमब्रुवन् ॥ १

ब्राह्मणाः—

राजंस्तीर्थानि गन्तासि पुण्यानि भ्रातृभिस्सह ।
देवर्षिणा च सहितो लोमशेन महात्मना ॥ २

अस्मानपि महाभाग नेतुमर्हसि पाण्डव ।
अस्माभिर्हि न शक्यानि त्वदृते कुरुनन्दन ॥ ३

श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च ।
अगम्यानि नरैरल्पैस् तीर्थानि मनुजेश्वर ॥ ४

भवतो भ्रातरश्शूरा धनुर्धरवरास्तथा ।
भवद्भिः पालिताश्शूरैर् गच्छामो वयमच्युत ॥ ५

भवत्प्रसादाद्धि वयं प्राप्नुयामः फलं शुभम् ।
तीर्थानां पृथिवीपाल वनानां च विशां पते ॥ ६

तव वीर्यपरित्राताश् शुद्धास्तीर्थपरिप्लुताः ।
[1]भवेम धूतपाप्मानस् तीर्थसंदर्शनान्नृप ॥ ७

भवानपि नरेन्द्रस्य कार्तवीर्यस्य भारत ।
अष्टकस्य च राजर्षेर् लोमपादस्य चैव ह ॥ ८

भरतस्य च वीरस्य सार्वभौमस्य पाण्डव ।
त्वं हि प्राप्स्यति दुष्प्रापाँल्लोकांस्तीर्थपरिप्लुतः ॥ ९

प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्वतान् ।
गङ्गाद्यास्सरितश्चैव प्लक्षादींश्च वनस्पतीन् ॥ १०

त्वया सह महीपाल द्रष्टुमिच्छामहे वयम् ।
भवद्भिः पालिताश्शूरैस् तीर्थान्यायतनानि च ॥ ११

यदि ते ब्राह्मणेष्वस्ति काचित् प्रीतिर्जनाधिप ।
कुरु क्षिप्रं वचोऽस्माकं ततश्श्रेयोऽभिपत्स्यसे ॥ १२

तीर्थानि हि महाबाहो तपोविघ्नकरैस्सदा ।
अनुकीर्णानि रक्षोभिस् तेभ्यो नस्त्रातुमर्हसि ॥ १३

तीर्थान्युक्तानि धौम्येन नारदेन च धीमता ।

---

1. ग—अर्धपञ्चकं नास्ति

यान्युवाच च देवर्षिर् लोमशस्सुमहातपाः ॥ १४

विधिवत् तानि सर्वाणि पर्यटस्व नराधिप ।
धूतपाप्मा सहास्माभिर् लोमशेनाभिपालितः ॥ १५

वैशम्पायनः—

[1]स राजा पूज्यमानस्तैर् हर्षादश्रुपरिप्लुतः ।
भीमसेनादिभिर्वीरैर् भ्रातृभिः परिवारितः ॥ १६

बाढमित्यब्रवीत् सर्वास् तानृषीन् पाण्डवर्षभः ।
लोमशं समनुज्ञाप्य धौम्यं चैव पुरोहितम् ॥ १७

ततस्स पाण्डवश्रेष्ठो भ्रातृभिस्सहितो वशी ।
द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे ॥ १८

अथ व्यासो महाभागस् तथा नारदपर्वतौ ।
काम्यके पाण्डवं द्रष्टुं समाजग्मुर्मनीषिणः ॥ १९

तेषां युधिष्ठिरो राजा पूजां चक्रे यथाविधि ।
सत्कृतास्ते महाभाग युधिष्ठिरमथाब्रुवन् ॥ २०

व्यासनारदपर्वताः—

युधिष्ठिर यमौ भीम मनसा कुरुतार्जवम् ।
मनसा कृतशौचा वै शुद्धास्तीर्थानि गच्छत ॥ २१

[2-3]शरीरनियमं प्राहुर् ब्राह्मणा मानुषं व्रतम् ।

---

1. ख—इदमर्धं नास्ति
2. अ—अर्धचतुष्टयं नास्ति
3. ख—नास्तीदमर्धम्

मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः ॥　　२२
मनो ह्यदुष्टं शौचाय पर्याप्तं वै नराधिप ।
[1]मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि गच्छत ॥　　२३
ते यूयं मानसैश्शुद्धाश् शरीरनियमव्रतैः ।
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ ॥　　२४

वैशम्पायनः—

ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः ।
कृतस्वस्त्ययनास्सर्वे मुनिभिर्दिव्यमानुषैः ॥　　२५
लोमशस्योपसङ्गृह्य पादौ द्वैपायनस्य च ।
नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च ॥　　२६
धौम्येन सहिता वीरास् तथा तैर्वनवासिभिः ।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥　　२७
कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास् तीर्थान्यन्वचरंस्ततः ॥　　२८
इन्द्रसेनादिभिर्भृत्यै [2]रथैः परिचतुर्दशैः ।
महानसव्यापृतैश्च तथाऽन्यैः परिचारकैः ॥　　२९
सायुधा बद्धनिस्त्रिंशास् तूणवन्तस्समार्गणाः ।
प्राङ्मुखाः प्रययुर्वीराः पाण्डवा जनमेजय ॥　　३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

1. ख—नास्तीदमर्धम्　　2. ख—अयं पादोऽनन्तरश्च न स्तः

## ॥ षट्सप्ततितमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति धर्माधर्मयोः समृद्ध्यसमृद्धिलक्षणोदर्ककारणत्वाभिधानम् ॥ १ ॥

---

युधिष्ठिरः—

न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम ।
तथाऽस्मि दुःखसन्तप्तो यथा नान्यो महीपतिः ॥ १

परांश्च निर्गुणान् मन्ये तानधर्मरतानपि ।
ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना ॥ २

लोमशः—

नात्र दुःखं त्वया राजन् कार्यं पार्थ कथञ्चन ।
यदधर्मेण वर्धेरन्नधर्मरुचयो नराः ॥ ३

वर्धत्यधर्मेण नरस् ततो भद्राणि पश्यति ।
[1]ततस्सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ४

यत्र धर्मेण वर्तन्ते राजानो राजसत्तम ।
सर्वान् सपत्नान बाधन्ते राज्यं चैषां विवर्धते ॥ ५

मया हि दृष्टा दैतेया दानवाश्च महीपते ।
वर्धमाना ह्यधर्मेण क्षयं चोपगताः पुनः ॥ ६

पुरा देवयुगे चैव दृष्टं सर्वं मया विभो ।

---

1. ग—नास्तीदमर्धम्

अरोचयन् सुरा धर्मं धर्मं तत्यजिरेऽसुराः ॥　　७

तीर्थानि देवा विविशुर् नाविशन् भारतासुराः ।
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ॥　　८

दर्पान्मानस्समभवन्मानात् क्रोधो व्यजायत ।
क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् ।　　९

तानलज्जान् गतश्रीकान् हीनवृत्तान् [1]यथाचरान् ।
क्षमा लक्ष्मीश्च धर्मश्च नचिरात् प्रजहुस्ततः ॥　　१०

लक्ष्मीस्तु देवानगमद् अलक्ष्मीरसुरान्नृप ॥　　१०॥

तानलक्ष्मीसमाविष्टान् दर्पोपहतचेतसः ।
दैतेयान् दानवांश्चैव कलिरप्याविशत् तदा ॥　　११॥

तानलक्ष्मीसमाविष्टान् [2]दानवान् कलिना तथा ।
दर्पाभिभूतान् कौन्तेय क्रियाहीनानचेतसः ॥　　१२॥

तथाभिभूतानचिराद् विनाशस्समपद्यत ॥　　१३

निर्यशस्कास्ततो दैत्याः कृत्स्नशो विलयं गताः ।
[3]अधर्मरुचयो राजन्नलक्ष्म्या समधिष्ठिताः ॥　　१४

ततो देवास्सागरांश्च सरितश्च सरांसि च ।

---

1. क-ख-ग—वृथाव्रतान् ः　घ—यथा च तान्
2. ख—अयं पादोऽनन्तरश्च न स्तः
3. ख—इदमर्धं नास्ति

अभ्यगच्छन् धर्मशीलाः पुण्यान्यायतनानि च ॥ १५

तपोभिः क्रतुभिर्दानैर् आशीर्वादैश्च पाण्डव ।
प्रजहुस्सर्वपापानि श्रेयश्च प्रतिपेदिरे ॥ १६

एवं हि दानवन्तश्च क्रियावन्तश्च सर्वशः ।
तीर्थान्यगच्छन्विबुधास् तेनापुर्भूतिमुत्तमाम् ॥ १७

तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः ।
पुनर्लप्स्यासि तां लक्ष्मीम् एष पन्थास्सनातनः ॥ १८

यथैव हि नृगो राजा शिबिरौशीनरो यथा ।
भगीरथो वसुमना गयः पूरुः पुरूरवाः ॥ १९

चरमाणाश्च युक्ताश्च स्पर्शनादम्भसश्च ते ।
तीर्थानां दर्शनात् पूता दर्शनाच्च महात्मनाम् ॥ २०

अलभन्त यशः पुण्यं धनानि च विशां पते ।
तथा त्वमपि राजेन्द्र लब्ध्वा सुविपुलां श्रियम् ॥ २१

यथा चेक्ष्वाकुरभवत् सपुत्रजनबान्धवः ।
मुचुकुन्दोऽथ मान्धाता मरुत्तश्च विशां पतिः ॥ २२

कीर्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ।
देवर्षयश्च कार्त्स्न्येन तथा त्वमपि लप्स्यसे ॥ २३

धार्तराष्ट्रास्तु दर्पेण मोहेन च वशीकृताः ।
अचिराद् विनशिष्यन्ति दैत्या इव न संशयः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[अस्मिन्नध्याये २४ श्लोकाः]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

युधिष्ठिरादिभिः क्रमेण ब्रह्मसरस्तीर्थगमनम् ॥ १ ॥ तत्र शमठेन युधिष्ठिरादीन् प्रति गययज्ञवर्णनम् ॥ २ ॥

---

वैशम्पायनः—
ते तथा सहिता वीरा वसन्तस्तत्रतत्र ह ।
क्रमेण पृथिवीपाल नैमिशारण्यमागताः ॥ १

ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप ।
कृताभिषेकाः प्रददुर् गाश्च वित्तं च भारत ॥ २

तत्र देवान् पितॄन् विप्रांस् तर्पयित्वा पुनः पुनः ।
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च कौरवाः ॥ ३

पालकोट्यां वृषप्रस्थे गिरावुष्य च पाण्डवाः ।
बाहुदायां महीपाल [1]चेरुस्सर्वेऽभिषेचनम् ॥ ४

---

1. क-ख—चक्रुस्स

प्रयागे देवयजने देवानां पृथिवीपते ।
ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् ॥ ५
गङ्गायमुनयोश्चापि सङ्गमे सत्यसङ्गराः ।
विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु ॥ ६
तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः ।
जग्मुः पाण्डुसुता राजन् ब्राह्मणैस्सह भारत ॥ ७
तत्र ते न्यवसन् वीरास् तपश्चातस्थुरुत्तमम् ।
[1]सन्तर्पयन्तस्सततं वन्येन हविषा द्विजान् ॥ ८
ततो महीधरं जग्मुर् धर्मज्ञेनाभिसत्कृतम् ।
राजर्षिणा पुण्यकृता गयेनानुपमद्युता ॥ ९
सरो गयशिरो यत्र पुण्या चैव महानदी ।
ऋषिजुष्टं सुपुण्यं तत् तीर्थं ब्रह्मसरोऽतुलम् ॥ १०
अगस्त्यो भगवान् यत्र गतो वैवस्वतं प्रति ।
उवास च स्वयं यत्र धर्मराजस्सनातनः ॥ ११
सर्वासां सरितां चैव समुद्भेदो विशां पते ।
यत्र सन्निहितो नित्यं महादेवः पिनाकधृक् ॥ १२
तत्र ते पाण्डवा राजंश् चातुर्मास्यैस्तदेजिरे ।
[2]ऋषियज्ञेन महता तत्राक्षयवटो महान् ॥ १३

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

ब्राह्मणास्तत्र शतशस् समाजग्मुस्तपोधनाः ।
वर्तमानेषु वै तस्य चातुर्मास्येषु भारत ॥ १४
तत्र विद्यातपोवृद्धा ब्राह्मणा वेदपारगाः ।
कथाः प्रचक्रिरे पुण्यास् सदस्याश्च महात्मनाम् ॥ १५
तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः ।
शमठोऽकथयद्राजन्नाधूर्तरजसं गयम् ॥ १६

शमठः—

आधूर्तरजसः पुत्रो गयो राजर्षिसत्तमः ।
पुण्यानि तस्य कर्माणि तानि मे शृणु भारत ॥ १७
यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः ।
यत्रान्नपर्वता राजन्नासञ् शतसहस्रशः ॥ १८
घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा ।
व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः ॥ १९
[1]अहन्यहनि चाप्येतद् याचतां सम्प्रदीयते ।
अन्यत्तु ब्राह्मणा राजन् भुञ्जतेऽन्नं सुसंस्कृतम् ॥ २०
तत्र वै दक्षिणाकाले ब्रह्मघोषा दिवं गताः ।
[2]न च प्रज्ञायते किञ्चिद् ब्रह्मशब्देन भारत ॥ २१
पुण्येनोच्चरिता राजन् भूर्दिशः खं तथा नृप ।

1. ख—अर्धद्वयं नास्ति 2. ख—अर्धमेकं नास्ति

आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतम् ॥ २२

तत्र स्म गाथां गायन्ति मनुष्या भरतर्षभ ।
अन्नपानगुणैस्तृप्ता देशे देशे सुवर्चसः ॥ २३

गयस्य यज्ञे के त्वद्य प्राणिनो भोक्तुमीप्सवः ।
[1]तत्र भोजनशेषस्य पर्वताः पञ्चविंशतिः ॥ २४

न स्म पूर्वे जनाश्चक्रुर् न करिष्यन्ति चापरे ।
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः ॥ २५

कथं तु देवा हविषा गयेन परितर्पिताः ।
पुनश्शक्ष्यन्त्युपादातुम् अन्यैर्दत्तानि कानिचित् ॥ २६

एवंविधास्सुबहवस् तस्य यज्ञो महात्मनः ।
बभूवुरस्य सरसस् समीपे कुरुनन्दन ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[अस्मिन्नध्याये २७ श्लोकाः]

---

1. अ-घ—अर्धचतुष्टयं नास्ति

## ॥ अष्टसप्ततितमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रत्यगस्त्यचरितकथनारम्भः ॥ १ ॥ वातापील्वलवृत्तकथनम् ॥ २ ॥ तथा लोपामुद्रोत्पत्तिप्रकारकथनम् ॥ ३ ॥ विदर्भराजेन सन्तानार्थं कन्यां कामयमानायागस्त्याय लोपामुद्राया यथाविधि प्रदानम्॥ ४ ॥ अगस्त्येन लोपामुद्राया महार्हवसनाभरणत्याजनेन वल्कलादिग्राहणपूर्वकं स्वाश्रमं प्रत्यानयनम् ॥ ५ ॥ ऋतुकाले समाहूतया तया महार्हवसनाभरणानि याचितेनागस्त्येन तत्सम्पादनाय प्रस्थानम् ॥ ६ ॥

---

वैशम्पायनः—

ततस्सम्प्रस्थितो राजा कौन्तेयो भूरिदक्षिणः ।
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह ॥ १
तत्रैव लोमशं राजा पप्रच्छ वदतां वरः ।

युधिष्ठिरः—

अगस्त्येनेह वातापिः किमर्थमुपशामितः ॥ २
आसीद्वा किम्प्रभावश्च स दैत्यो मानवान्तकः ।
किमर्थं चोद्यतो मन्युर् अगस्त्यस्य महात्मनः ॥ ३

लोमशः—

इल्वलो नाम दैतेय आसीत् कौरवनन्दन ।
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ ४
स ब्राह्मणं तपोयुक्तम् उवाच दितिनन्दनः ॥ ४॥

इल्वलः—

पुत्रं मे भगवानेकम् इन्द्रतुल्यं प्रयच्छतु ॥ ५

लोमशः—

तस्मै स ब्राह्मणो नादात् पुत्रं वासवसम्मितम् ।

चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ६
तदा प्रभृति राजेन्द्र ब्रह्महाऽसुरसत्तमः ।
मन्युमान् भ्रातरं छागं मायावी प्रचकार ह ॥ ७
समाह्वयति यं वाचा गतं वैवस्वतक्षयम् ।
स पुनर्देहमास्थाय जीवन् स्म प्रतिदृश्यते ॥ ८
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् ।
ब्राह्मणान् भोजयित्वाऽसौ पुनरेव समाह्वयत् ॥ ९
तस्य स्वनेन महता स्वरेण गिरमीरिताम् ।
श्रुत्वाऽतिमायो बलवान् क्षिप्रं ब्राह्मणकण्टकः ॥ १०
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः ।
वातापिः प्रहसन् राजन् निश्चक्राम विशां पते ॥ ११
एवं स ब्राह्मणान् राजन् भोजयित्वा पुनःपुनः ।
हिंसयामास दैतेय इल्वलो दुष्टचेतनः ॥ १२
अगस्त्यश्चापि भगवान् एतस्मिन् काल एव तु ।
पितॄन् ददर्श गर्ते तु लम्बमानानवाङ्मुखान् ॥ १३
सोऽपृच्छल्लम्बमानांस् तान् भगवन्तश्च किंपराः ।
किमर्थं वेह [1]लम्बध्वं गर्ते यूयमधोमुखाः ॥ १४
संतानहेतोरिति ते तमूचुर्ब्रह्मवादिनः ॥ १४॥

1. क-ग—लम्बध्वे

ते तस्मै कथयामासुर् वयं ते पितरस्स्वकाः ।
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः ॥ १५॥
यदि नो जनयेथास्त्वम् अगस्त्यापत्यमुत्तमम् ।
स्यान्नोऽस्मान्निरयान्मोक्षस् त्वं चापि भज नो गतिम् ॥ १६॥
स तानुवाच तेजस्वी सत्यधर्मपरायणः ॥ १७

अगस्त्यः—

करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः ॥ १७॥

लोमशः—

ततः प्रसवसन्तानं चिन्तयन् भगवानृषिः ।
आत्मनः प्रसवस्यार्थे नापश्यत् सदृशीं स्वयम् ॥ १८॥
[1]स तस्य तस्य सत्त्वस्य तत्तदङ्गमनुत्तमम् ।
सङ्गृह्य तत्स्वैरङ्गैर् निर्ममे स्त्रियमुत्तमाम् ॥ १९॥
स तां विदर्भराजाय पुत्रकामाय श्राम्यते ।
निर्मितामात्मनोऽगस्त्यो मुनिः प्रादान्महातपाः ॥ २०॥
सा तत्र यज्ञे सुभगा विद्युत्सौदामनी यथा ।
विभ्राजमाना वपुषा व्यवर्धत शुभानना ॥ २१॥
जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत ॥ २२॥
अभ्यनन्दत तां सर्वे ब्राह्मणा वसुधाधिप ।
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः ॥ २३॥

---

1. ख—सन्वाऽपि स्वस्य सर्पस्य

ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रम् अग्नेरिव शिखा शुभा ॥ २४॥

तां यौवनगतां राजन् शतं कन्यास्स्वलङ्कृताः ।
दासी शतं च कल्याणीम् [1]उपातस्थुर्वशानुगाः ॥ २५॥

सा स्म दासीशतवृता मध्ये कन्याशतस्य च ।
आस्ते तेजस्विनी कन्या रोहिणीव दिविप्रभा ॥ २६॥

यौवनस्थामपि च तां शीलाचारसमन्विताम् ।
न वव्रे पुरुषः कश्चिद् भयात् तस्य महात्मनः ॥ २७॥

सा तु सत्यवती कन्या रूपेणाप्सरसोऽप्यति ।
तोषयामास पितरं शीलेन स्वजनं तथा ॥ २८॥

वैदर्भीं तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता ।
मनसा चिन्तयामास कस्मै दद्यामिमां सुताम् ॥* २९॥

यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तामनिन्दिताम् ।
तदाऽभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम् ॥ ३०॥

अगस्त्यः—

राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् ।
वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे ॥ ३१॥

---

1. ख-ग-व—उपतस्थुर्

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

लोमशः—

एवमुक्तस्स मुनिना महीपालो विचेतनः ।
प्रत्याख्यानाय चाशक्तः प्रदातुमपि नेच्छति ॥ ३२॥

ततस्स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः ॥ ३३

विदर्भराजः—

महर्षिर्वीर्यवानेष क्रुद्धश्शापाग्निना दहेत् ॥ ३३॥

लोमशः—

तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम् ।
लोपामुद्राऽभिगम्येदं काले वचनमब्रवीत् ॥ ३४॥

लोपामुद्रा—

मत्कृते न महीपाल पीडामभ्येतुमर्हसि ।
प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः ॥ ३५॥

लोमशः—

दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने ।
लोपामुद्रां ततः प्रादाद् विधिपूर्वं विशां पते ॥ ३६॥

प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामभाषत ॥ ३७

अगस्त्यः—

महार्हाण्युत्सृजैतानि वासांस्याभरणानि च ॥ ३७॥

लोमशः—

ततस्सा तानि वासांसि तनूनि च मृदूनि च ।

समुत्ससर्ज रम्भोरूर् दिव्यान्याभरणानि च ॥ ३८॥
ततश्चीराणि जग्राह वल्कलान्यजिनानि च ।
समानव्रतचर्या च बभूवायतलोचना ॥ ३९॥
गङ्गाद्वारमुपागम्य भगवान् ऋषिसत्तमः ।
उग्रमातिष्ठत तपस् सह पत्न्याऽनुकूलया ॥ ४०॥
सा प्रीत्या बहुमानाच्च पतिं पर्यचरत् तदा ।
अगस्त्यश्च परां प्रीतिं भार्यायाम [1]हरत् प्रभुः ॥ ४१॥
ततो बहुतिथे काले लोपामुद्रां विशां पते ।
तपसा द्योतितां स्नातां ददर्श भगवान् ऋषिः ॥ ४२॥
स तस्याः परिचारेण शौचेन च दमेन च ।
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ ४३॥
ततस्सा प्राञ्जलिर्भूत्वा लज्जमानेव भामिनी ।
तदा सप्रणयं वाक्यं [2]भगवन्तमथाब्रवीत् ॥ ४४॥

लोपामुद्रा—

असंशयं प्रजाहेतोर् भार्यां पतिरविन्दत ।
तथा त्वयि मम प्रीतिस् तामृषे कर्तुमर्हसि ॥ ४५॥
यथा पितुर्गृहे विप्र प्रासादे शयनं मम ।
तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ ४६॥
इच्छामि त्वां स्रग्विणं च भूषणैश्च विभूषितम् ।

---

1. क-ग—गमत्; ख—माहरत् 2. ख-ग-घ—भर्तारमिदमब्रवीत्

उपसर्तुं यथाकामं दिव्याभरणभूषिता ॥ ४७॥

अगस्त्यः—

न वै धनानि विद्यन्ते लोपामुद्रे तथा मम ।
यथाविधानि कल्याणि पितुस्तव सुमध्यमे ॥ ४८॥

लोपामुद्रा—

ईशोऽसि तपसा सर्वं समाहर्तुं ममेप्सितम् ।
क्षणेन जीवलोके यद् वसु किञ्चन विद्यते ॥ ४९॥

अगस्त्यः—

एवमेतद्यथाऽऽत्थ त्वं तपोव्ययकरं तु मे ।
यथा तु मे न प्रणश्येत् तपस्तदुपधारय ॥ ५०॥

लोपामुद्रा—

अल्पावशिष्टः कालोऽयम् ऋतौ मम तपोधन ।
न चान्यथाऽह[1]मिच्छामि त्वामुपैतुं कथञ्चन ॥ ५१॥

न चापि धर्ममिच्छामि विलोप्तुं ते तपोधन ।
एतत् तु मे यथाकामं सम्पादयितुमर्हसि ॥ ५२॥

अगस्त्यः—

[2]यस्त्वेष कामस्सुभगे तव बुद्ध्या विनिश्चितः ।
हन्त गच्छाम्यहं भद्रे चर काममिह स्थिता ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[अस्मिन्नध्याये ५३॥ श्लोकाः]

---

1. ख-ग-घ—मिच्छेयं 2. क-ग-ख—यद्येष

## ॥ एकोनाशीतितमोऽध्यायः ॥

धनयाचनाय श्रुतर्वादिनृपवलयमुपगतेनागस्त्येन तद्धनानां समायव्ययतापरिज्ञानेन तैस्सह इल्वलं प्रति गमनम् ॥

लोमशः—

ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु ।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ १

स विदित्वा तु नृपतिः कुम्भयोनिमुपागतम् ।
विषयान्ते सहामात्यः प्रत्यगृह्णात् सुसत्कृतम् ॥ २

तस्मै चार्घ्यं यथान्यायम् आनीय पृथिवीपतिः ।
प्राञ्जलिः प्रणतो भूत्वा पप्रच्छागमनेऽर्थितम् ॥ ३

अगस्त्यः—

वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ मे ॥ ४

लोमशः—

तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत् ।
अतो विद्वन्नुपागच्छ [1]यदत्राभ्यधिकं वसु ॥ ५

तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
[2]सर्वथा प्राणिनां पीडाम् उपादानादमन्यत ॥ ६

1. ख—यदन्यत्राधि 2. ख—इदमर्धं नास्ति

स श्रुतर्वाणमादाय वाध्र्यश्वमगमत् ततः ।
स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि ॥ ७

तयोरर्घ्यं च पाद्यं च वाध्र्यश्वः प्रत्यवेदयत् ।
अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे ॥ ८

अगस्त्यः—

वित्तकामाविह प्राप्तौ [1]वाध्र्यश्व पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नौ ॥ ९

लोमशः—

तत आयव्ययौ पूर्णौ [2]जामाताऽस्य न्यवेदयत् ।
ततो ज्ञात्वा समादत्तां यदत्राप्यतिरिच्यते ॥ १०

तत आयव्ययौ दृष्ट्वा समौ सममतिस्स तौ ।
सर्वथा प्राणिनां पीडाम् उपादानादमन्यत ॥ ११

पौरुकुत्सं ततो जग्मुस् त्रसदस्युं महाधनम् ।
अगस्त्यश्च श्रुतर्वा च वाध्र्यश्वश्च महीपतिः ॥ १२

त्रसदस्युस्तु तान् सर्वान् प्रत्यगृह्णाद्यथाविधि ।
अभिगम्य महाराज विषयान्ते स चाहतः ॥ १३

अर्चयित्वा यथान्यायम् इक्ष्वाकू राजसत्तमः ।
समाश्वस्तांस्ततोऽपृच्छत् प्रयोजनमुपक्रमे ॥ १४

---

1. क-ख-ग—विद्यावां 2. क-ख-ग—ताभ्यां राजा

अगस्त्यः—

वित्तकामानिह प्राप्तान् विद्धि नः पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः ॥ १५

लोमशः—

तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ।
ततो ज्ञात्वा समादद्ध्वं यदत्र व्यतिरिच्यते ॥ १६
तत आयव्ययौ दृष्ट्वा तस्यापि स मुनिस्तदा ।
सर्वथा प्राणिनां पीडाम् उपादानादमन्यत ॥ १७
ततस्सर्वे समेत्याथ ते नृपास्तं महामुनिम् ।
इदमूचुर्महाराज समवेक्ष्य परस्परम् ॥ १८

राजानः—

अयं वै दानवो ब्रह्मन् धनवानिल्वलो भुवि ।
तमभिक्रम्य सर्वेऽद्य वयं याचामहे वसु ॥ १९

लोमशः—

तेषां तदासीदुचितम् इल्वलस्योपभिक्षणम् ।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ ३३ ॥तीर्थयात्रापर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

## ॥ अशीतितमोऽध्यायः ॥

इल्वलेनागस्त्याय मेषीकृतवातापिमांसपरिवेषणम् ॥ १ ॥ इल्वलेन वातापेराह्वानेऽगस्त्येन स्वेन तस्य जीर्णीकरणोक्तिः ॥ २ ॥ भीतेनेल्वलेनागस्त्याय धनदानपूर्वकं तज्जिघांसया तदनुगमनम् ॥ ३ ॥ अगस्त्येन हुङ्कारेणेल्वलस्य भस्मीकरणपूर्वकं लोपामुद्रायै बहुधनदानेन तस्यां गुणवदेकापत्योत्पादनम् ॥ ४ ॥

---

लोमशः—

इल्वलस्तान् विदित्वा तु महर्षिसहितान् नृपान् ।
उपस्थितान् सहामात्यो विषयान्ते ह्यपूजयत् ॥　१

तेषां ततोऽसुरश्रेष्ठस् त्वातिथ्यमकरोत् तदा ।
सुसंस्कृतेन कौरव्य भ्रात्रा वातापिना नृप ॥　२

ततो राजर्षयस्सर्वे विषण्णा गतचेतसः ।
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ॥　३

अथाब्रवीदगस्त्यस्तान् राजर्षीन् ऋषिसत्तमः ।

अगस्त्यः—

विषादो वो न कर्तव्यो ह्यहं भोक्ष्ये महासुरम् ॥　४

लोमशः—

स तुर्यासनमाक्रम्य निषसाद महामुनिः ।
तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥　५

अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ।
भुक्तवत्यसुरोऽऽह्वानम् अकरोऽत् तस्य इल्वलः ॥　६

इल्वलः—

वातापे प्रतिबुध्यस्व दर्शयन् बलतेजसी ।
तपसा दुर्जयो यावद् एष त्वां नातिवर्तते ॥ ७

लोमशः—

ततस्तस्योदरं भेत्तुं वातापिर्वेगमाहरत् ।
तमबुध्यत तेजस्वी कुम्भयोनिर्महातपाः ॥ ८
स वीर्यात् तपसोग्रस्तु ननर्द भगवान् ऋषिः ॥ ८॥

अगस्त्यः—

एष जीर्णोऽसि वातापे मया लोकस्य शान्तये ॥ ९

लोमशः—

इत्युक्त्वा स्वकराग्रेण उदरं समताडयत् ।
त्रिरेवं प्रतिसंरब्धस् तेजसा प्रज्वलन्निव ॥ १०
ततो वायुः प्रादुरभूद् अगस्त्यस्य महात्मनः ।
इल्वलश्च विषण्णोऽभूद् दृष्ट्वा जीर्णं महासुरम् ॥ ११
प्राञ्जलिश्च सहामात्यैर् इदं वचनमब्रवीत् ॥ ११॥

इल्वलः—

किमर्थमुपयातास्स्थ ब्रूत किं करवाणि वः ॥ १२

लोमशः—

तमगस्त्यो हसन् वाक्यम् इल्वलं प्रत्यभाषत ॥ १२॥

अगस्त्यः—

ईसो ह्यसुर विद्मस्त्वां वयं सर्वे धनेश्वरम् ॥ १३

इमे च ताताधनिनो धनार्थश्च महान् मम ।
यथाशक्त्यविहिंस्यान्यान् संविभागं प्रयच्छ नः ॥　　१४

लोमशः—

ततोऽवमत्य तमृषिम् इल्वलो वाक्यमब्रवीत् ॥　　१४॥

इल्वलः—

ईप्सितं यदिह ब्रूहि तद्धि दास्यामि ते वसु ॥　　१५

अगस्त्यः—

गवां शतसहस्राणि राज्ञामेकैकशो वसु ।
[1]तावदेव सुवर्णस्य दित्सितं ते महासुर ॥　　१६

मह्यं ततो वै द्विगुणं रथं चैव हिरण्मयम् ।
मनोजवौ वाजिनौ द्वौ दित्सितं ते महासुर ॥　　१७

लोमशः—

इल्वलस्तु मुनिं प्राह सर्वमस्ति यथाऽऽत्थ माम् ।
रथं तु समवोचो मां नैनं विद्म हिरण्मयम् ॥　　१८

अगस्त्यः—

न मे वागनृता काचिद् उक्तपूर्वा महासुर ।
विज्ञायतां रथस्साधु व्यक्तमेव हिरण्मयः ॥　　१९

लोमशः—

विज्ञायमानस्स रथः कौन्तेयासीद्धिरण्मयः ।

---

1. अ-घ—नास्तीदमर्धम्

ततस्स व्यथितो दैत्यो ददावभ्यधिकं वसु ॥ २०

विवाजी च सुवाजी च तस्मिन् युक्तौ रथे हयौ ।
ऊहतुस्तौ वसूनाशु तावगस्त्याश्रमं प्रति ॥ २१
सर्वान् राज्ञस्सहागस्त्यान् निमेषादिह भारत ॥ २१॥

[1]इल्वलस्त्वनुगम्यैनं हन्तुमैच्छन्महासुरः ।
भस्म चक्रे महातेजा हुङ्कारेण महासुरम् ॥ २२॥

अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा ।
कृतवांश्च मुनिस्सर्वं लोपामुद्राचिकीर्षितम् ॥ २३॥

लोपामुद्रा—

कृतवानसि तत् सर्वं भगवन् मम काङ्क्षितम् ।
उत्पादय सकृन्मह्यम् अपत्यं वीर्यवत्तरम् ॥ २४॥

अगस्त्यः—

तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने ।
[2]विचारणामपत्ये तु वक्ष्यामि शृणु तां मम ॥ २५॥

सहस्रं तेऽस्तु पुत्राणां शतं वा तत्समं तव ॥
दश वा शततुल्यास्स्युर् एको वाऽपि सहस्रवत् ॥ २६॥

लोपामुद्रा—

सहस्रसम्मितः पुत्र एको मेऽस्तु तपोधन ॥ २७

1. ख-च—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

एको हि बहुभिश्श्रेयान् विद्वान् साधुरसाधुभिः ॥ २७॥

लोमशः—

स तथेति प्रतिज्ञाय तया समगमन्मुनिः ।
समये समशीलिन्या श्रद्धावान् श्रद्दधानया ॥ २८॥

तत आधाय गर्भं तम् अगमद्वनमेव सः ।
तस्मिन् वनं गते गर्भो ववृधे सप्त शारदान् ॥ २९॥

सप्तमेऽब्दे गते चापि प्राच्यवत् स महाकविः ।
ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ॥ ३०॥

साङ्गोपनिषदान् वेदान् जपन्नेव महातपाः ।
तस्य पुत्रोऽभवदृषेस् स तेजस्वी महान् ऋषिः ॥ ३१॥

स बाल एव तेजस्वी पितुस्तस्य निवेशने ।
इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ ३२॥

तथायुक्तं तु तं दृष्ट्वा मुमुदे स मुनिस्तदा ।
एवं स जनयामास भारतापत्यमुत्तमम् । ३३॥

लेभिरे पितरश्चास्य लोकान् राजन् यथेप्सितान् ॥ ३४

अगस्त्यस्याश्रमश्चायम् [1]अत ऊर्ध्वं विशाम्पते ।
ख्यातो भुवि महाराज तेजसा तस्य धीमतः ॥ ३५

प्राह्लादिरेवं वातापिर् ब्रह्मघ्नो दुष्टचेतनः ।

1. ख—अयं पादोऽनन्तरश्च न स्तः

एवं विनिहतो राजन्नगस्त्येन महात्मना ॥ ३६

[1]तस्यायमाश्रमो राजन् रमणीयैर्गुणैर्युतः ।
एषा भागीरथी पुण्या यथेष्ट[2]मवगाह्यताम् ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[अस्मिन्नध्याये ३७ श्लोकाः]

## ॥ एकाशीतितमोऽध्यायः ॥

वृत्रासुरनिपीडितशक्रादिभिर्ब्रह्मवचनाद्वज्रनिर्माणाय दधीचं प्रति तच्छरीरास्थिप्रार्थनम् ॥ १ ॥ त्वष्ट्रा दधीचास्थिभिर्वज्रायुधनिर्माणम् ॥ २ ॥ इन्द्रेण वृत्रहननम् ॥३॥ ततो देवगणाभिपीडनात् समुद्रं प्रविष्टैर्दैत्यैर्जगद्विनाशनाध्यवसायः ॥ ४ ॥ समुद्रान्तर्हितैर्दैत्यै रात्रौरात्रौ बहिर्निर्गत्याश्रमेषु ऋषिगणेषु निहतेषु देवगणैर्नारायणस्य शरणीकरणम् ॥ ५ ॥ विष्णुना समुद्रान्तर्हितदैत्यनिधने समुद्रशोषणस्योपायत्वं ज्ञापितैर्देवैर्ब्रह्मलोकगमनम् ॥ ६ ॥ ब्रह्मचोदनया देवैरगस्त्यमेत्य सागरशोषणप्रार्थनम् ॥ ७ ॥

युधिष्ठिरः—

भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः ।
कर्मणां विस्तरं श्रोतुम् अगस्त्यस्य द्विजोत्तम ॥ १

लोमशः—

[3]श्रृणु राजन् कथां पुण्याम् अद्भुतामातिमानुषीम् ।
अगस्त्यस्य महाराज प्रभावममितौजसः ॥ २

1. ख—इदमर्धं नास्ति
2. क—मवगाहत; ख—मवगम्यताम्; ग—मवगाह्यताम्
3. घ—अर्धद्वयं नास्ति

आसन् कृतयुगे घोरा दानवा युद्धदुर्मदाः ।
कालेया इति विख्याता गणाः परमदारुणाः ॥ ३

ते तु वृत्रं समासाद्य नानाप्रहरणोद्यताः ।
समन्तात् पर्यधावन्त महेन्द्रप्रमुखान् सुरान् ॥ ४

ततो वृत्रवधे यत्नम् अकुर्वंस्त्रिदशाः पुरा ।
पुरन्दरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ॥ ५

कृताञ्जलींस्तु तान् सर्वान् परमेष्ठिरुवाच ह ॥ ५॥

परमेष्ठी—

विदितं मे सुरास्सर्वं यद्वो भयमुपस्थितम् ।
तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ ॥ ६॥

[1]दधीच इति विख्यातो महान् ऋषिरुदारधीः ।
तं गत्वा सहितास्सर्वे वरं वै सम्प्रयाचत ॥ ७॥

स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ॥ ८

स वाच्यस्सहितैस्सर्वैर् भवद्भिर्जयकाङ्क्षिभिः ।
स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस्य हिताय वै ॥ ९

स शरीरात् समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ।
तस्य चास्थि तथा घोरं वज्रं संह्रियतां दृढम् ॥ १०

महच्छत्रुहणं भीमं षडश्रं भीमनिःस्वनम् ।

---

1. अ—दधीचिरिति

तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः ॥ ११

एतद्वस्सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ॥ ११॥

लोमशः—

एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् ।
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः ॥ १२॥

सरस्वत्याः परे पारे नानाद्रुमलतायुतम् ।
षट्पदोद्गीतनिनदैर् विघुष्टं सामगैरिव ॥ १३॥

पुंस्कोकिलरवोन्मिश्रं जीवञ्जीवकनादितम् ।
[1]महिषैश्च वराहैश्च भ्रमरैरमरैरपि ॥ १४॥

तत्र तत्रानुचरितं मृगेन्द्रभयवेदितैः ।
करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः ॥ १५॥

सरोवगाढैः क्रीडद्भिस् समन्तादनुनादितम् ।
[2]अपरैश्चापि संलीनैर् गुहाकन्दरवासिभिः ॥ १६॥

[3]सिंहव्याघ्रैर्महानादान् नदद्भिरनुनादितम् ॥
तेषु तेष्ववकाशेषु शोभितं सुमनोहरम् ॥ १७॥

त्रिविष्टपसमप्रख्यं दधीचाश्रममागताः ॥ १८

तत्रापश्यन् दधीचं ते दिवाकरसमद्युतिम् ।
जाज्वल्यमानं वपुषा यथा साक्षात् पितामहम् ॥ १९

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति 3. ख—इदमर्धं नास्ति

तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च ।
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना ॥ २०

ततो दधीचः परमप्रीतस्
सुरोत्तमांस्तानिदमभ्युवाच ॥ २०॥

दधीचः—
करोमि यद्वो हितमद्य देवास्
स्वं चापि देहं स्वयमुत्सृजामि ॥ २१

लोमशः—
स एवमुक्त्वा द्विपदां वरिष्ठः
प्राणान् वशी स्वान् सहसोत्ससर्ज ॥ २१॥
ततस्सुरास्ते जगृहुः परासोर्
अस्थीनि तस्याथ यथोपदेशम् ।
प्रहृष्टरूपाश्च जयाय देवास्
त्वष्टारमागम्य तमर्थमूचुः ॥ २२॥
त्वष्टा तु तेषां वचनं निशम्य
प्रहृष्टरूपः प्रयतः प्रयत्नात् ।
चकार वज्रं भृशमुग्ररूपं
कृत्वा च शक्रं स उवाच हृष्टः ॥ २३॥

त्वष्टा—
अनेन वज्रप्रवरेण देव
भस्मीकुरुष्वाद्य सुरारिमुग्रम् ।

ततो हतारिस्सगणस्सुखं वै
प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ॥ २४॥

लोमशः—

त्वष्ट्रा तथोक्तस्स [1]पुरन्दरस्तु
वज्रं प्रहृष्टः प्रयतो ह्यगृह्णात् ॥* २५

ततस्स वज्री बलभिद् दैवतैरभिरक्षितः ।
आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ २६

[2]कालेयैश्च महाकायैस् समन्तादभिरक्षितम् ।
समुद्यतप्रहरणैस् सशृङ्गैरिव पर्वतैः ॥ २७

ततो युद्धं समभवद् देवानां सह दानवैः ।
मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ॥ २८

उद्यतप्रतिविष्टानां खड्गानां वीरबाहुभिः ।
आसीत् सुतुमुलश्शब्दश् शरीरेष्वभिपातितः ॥ २९

शिरोभिः प्रपतद्भिश्चाप्यन्तरिक्षान्महीतलम् ।
[3]फालैरिव महीपाल वृन्ताद्भ्रष्टैरदृश्यत ॥ ३०

ते हेमकवचा भूत्वा कालेयाः परिघायुधाः ।

1. अ-घ—पुरस्कृतस्तु
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
2. अ-क-ग-घ—कालकेयैर् 3. क-ग—फलैरिव ; ख-घ—तालैरिव

त्रिदशानभ्यधावन्त दावदग्धा इवाद्रयः ॥ ३१

तेषां वेगवतां वेगं सहितानां प्रधावताम् ।
न शेकुस्त्रिदशास्सोढुं ते भग्नाः प्राद्रवन् भयात् ॥ ३२

तान् दृष्ट्वा द्रवतो भीतान् सहस्राक्षः पुरन्दरः ।
वृत्रे विवर्धमाने च कश्मलं महदाविशत् ॥ ३३

तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुस्सनातनः ।
स्वतेजो ऽव्यदधाच्छक्रे बलमस्य विवर्धयन् ॥ ३४

विष्णुनाऽऽप्यायितं दृष्ट्वा शक्रं देवगणास्ततः ।
स्वंस्वं तेजस्समादध्युस् तथा ब्रह्मर्षयोऽमलाः ॥ ३५

स समाप्यायितश्शक्रो विष्णुना दैवतैस्सह ।
ऋषिभिश्च महाभागैर् बलवान् समपद्यत ॥ ३६

ज्ञात्वा बलस्थं त्रिदशाधिपं तु
　ननाद वृत्रो महतो निनादान् ।
तस्य प्रणादेन धरा दिशश्च
　खं द्यौर्नगाश्चापि चचाल सर्वम् ॥ ३७

ततो महेन्द्रः परमाभितप्तश्
　श्रुत्वा रवं घोरमुदग्रकल्पम् ।
भये निमग्नस्त्वरितो मुमोच
　वज्रं महत् तस्य वधाय राजन् ॥ ३८

स [1]शक्रवज्राभिहतः पपात
महासुरः काञ्चनमाल्यधारी ।
यथा महाशैलवरः पुरस्तात्
स मन्दरो विष्णुकरात् प्रमुक्तः ॥ ३९

तस्मिन् हते दैत्यवरे भयार्तश्
शक्रः प्रदुद्राव सरः प्रवेष्टुम् ।
वज्रं न मेने स करात् प्रमुक्तं
वृत्रं हतं चापि भयान्न मेने ॥ ४०

सर्वे च देवा मुदिताः प्रहृष्टा
महर्षयश्चेन्द्रमथ स्तुवन्तः ।
वृत्रं हतं सन्ददृशुः पृथिव्यां
वज्राहतं शैलमिवावकीर्णम् ॥ ४१

सर्वांश्च दैत्यांस्त्वरितास्समेत्य
जघ्नुस्सुरा वृत्रवधाभितप्तान् ।
ते वध्यमानास्त्रिदशैस्तदानीं
समुद्रमेवाविविशुर्भयार्ताः ॥ ४२

प्रविश्य चैवोदधिमप्रमेयं
झषाकुलं नक्रसमाकुलं च ।

1. अ-क—चक्र

तदा [1]सुमन्त्रं सहिताः प्रचक्रुस्
त्रैलोक्यनाशार्थमभिप्रयुक्ताः॥ ४३

तत्र स्म केचिन्मतिनिश्चयज्ञास्
तांस्तानुपायानुपवर्णयन्ति ।
तेषां तु तत्र क्रमयोगकालाद्
घोरा मतिश्चिन्तयतां बभूव ॥ ४४

ये सन्ति विद्यातपसोपपन्नास्
तेषां तु कार्यः प्रथमं विनाशः ।
[2]लोका हि सर्वे तपसा ध्रियन्ते
तस्मात् त्वरध्वं तपसः क्षयाय ॥ ४५

ये सन्ति केचिच्च वसुंधरायां
तपस्विनो धर्मविदश्च तज्ज्ञाः ।
तेषां वधः क्रियतां क्षिप्रमेव
तेषु प्रनष्टेषु जगद्विनष्टम् ॥ ४६

एवं हि सर्वे गतबुद्धिभावा
जगद्विनाशे परमप्रहृष्टाः ।
दुर्गं समाश्रित्य महोर्मिमन्तं
रत्नाकरं वरुणस्यालयं स्म ॥* ४७

1. क-ख-ग—स्म  2. क—नास्तीदमर्धम्
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

समुद्रान्तं समाश्रित्य वरुणं निधिमम्भसाम् ।
कालेयास्सम्प्रवर्तन्ते त्रैलोक्यस्य विनाशने ॥ ४८

ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् ।
आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ॥ ४९

वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः ।
अशीतिश्शतमष्टौ च नव चान्ये तपस्विनः ॥ ५०

च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम् ।
फलमूलाशनानां हि मुनीनां भक्षितं शतम् ॥ ५१

एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा ।
कालेयाश्च दुरात्मानो भक्षयन्तस्तपोधनान् ॥ ५२

भारद्वाजाश्रमे चैव नियता ब्रह्मचारिणः ।
वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिपातिताः ॥ ५३

एवं क्रमेण सर्वांस्तान् आश्रमान् दानवास्तदा ।
निशायां परिधावन्ति समुद्राम्बुबलाश्रयात् ॥ ५४

कालोपसृष्टाः कालेया घ्नन्तो मुनिगणान् बहून् ।
न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम ॥ ५५

एवं प्रवृत्तास्ते दैत्यास् तापसेषु तपस्विषु ।
क्षयाय जगतः क्रूराः पर्यटन्ति स्म मेदिनीम् ॥ ५६

प्रभाते समदृश्यन्त नियमाहारकर्शिताः ।

महीतलस्था मुनयश् शरीरैर्गतजीवितैः ॥ ५७

क्षीणमांसैर्विरुधिरैर् विमज्जान्त्रैर्विसन्धिभिः ।
आकीर्णैराचिता भूमिश् शङ्खानामिव राशिभिः ॥ ५८

कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च ।
विकीर्णैरग्निहोत्रैश्च भूर्बभूव समावृता ॥ ५९

निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम् ।
जगदासीन्निरुत्साहं कालेयभयपीडितम् ॥ ६०

एवं ते क्षीयमाणाश्च मानवा मनुजेश्वर ।
आत्मत्राणपरा भीताः प्राद्रवन्त दिशो भयात् ॥ ६१

केचिद्गुहाः प्रविविशुर् निर्दरांश्चापरे श्रिताः ।
अपरे मरणोद्विग्ना भयात् प्राणान् समत्यजन् ॥ ६२

केचित्तत्र महेष्वासाश् शूराः परमदर्पिताः ।
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे ॥ ६३

न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान् ।
श्रमं च परमं जग्मुर् जग्मुश्च क्षयमेव च ॥ ६४

जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ।
आजग्मुः परमामार्तिं त्रिदशा मनुजाधिप ॥ ६५

समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे ।
नारायणं पुरस्कृत्य वैकुण्ठमपराजितम् ॥ ६६

ततो देवा[1]स्समेतास्ते तदोचुर्मधुसूदनम् ॥ ६६॥

देवाः—

त्वं नस्स्रष्टा च पाता च भर्ता च जगतः प्रभो ।
त्वयोत्सृष्टमिदं सर्वं यच्चेङ्गं यच्च नेङ्गति ॥ ६७॥
त्वय्येव पुण्डरीकाक्ष पुनस्तत् प्रविलीयते ॥ ६८
त्वया भूमिः पुरा नष्टा समुद्रात् पुष्करेक्षण ।
वाराहं रूपमास्थाय जगदर्थे समुद्धृता ॥ ६९
आदिदैत्यो महावीर्यो हिरण्यकशिपुस्त्वया ।
नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥ ७०
अवध्यस्सर्वभूतानां बलिश्चापि महासुरः ।
वामनं वपुरास्थाय त्रैलोक्याद्भ्रंशितः पुरा ॥ ७१
असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः ।
[2]यज्ञक्षोभकरश्शूरस् त्वयैव विनिपातितः ॥ ७२
एवमादीनि कर्माणि येषां सङ्ख्या न विद्यते ॥ ७२॥
अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ।
तस्मात् त्वां देवदेवेश लोकार्थं [3]ख्यापयामहे ॥ ७३॥
रक्ष देवांश्च लोकांश्च शक्रं च महतो भयात् ।
[4]शरणागतसंत्राणे त्वमेकोऽसि दृढव्रतः ॥* ७४॥

---

1. अ—स्समस्तास्ते
2. ख—इदमर्धं नास्ति
3. क-ख-ग—ज्ञापयामहे
4. अ-ख-घ—नास्तीदमर्धम्

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

इतः [1]प्रधाना वर्धन्ते प्रजास्सर्वाश्चतुर्विधाः ।
ता भाविता भावयन्ति हव्यकव्यैर्दिवौकसः ॥ ७५॥

लोका ह्येवं [2]वर्तयन्ति अन्योन्यं समुपाश्रिताः ।
त्वत्प्रसादान्निरुद्विग्नास् त्वयैव परिरक्षिताः ॥ ७६॥

इदं च समनुप्राप्तं लोकानां भयमुत्तमम् ।
न च जानीम केनेति रात्रौ वध्यन्ति ये द्विजान् ॥ ७७॥

क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति ।
ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ॥ ७८॥

त्वत्प्रसादान्महाबाहो लोकास्सर्वे जगत्पते ।
विनाशं नाधिगच्छेयुस् त्वया वै परिरक्षिताः ॥ ७९॥

श्रीभगवान्—

विदितं मे सुरास्सर्वं प्रजानां क्षयकारणम् ।
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः ॥ ८०॥

कालेया इति विख्याता गणाः परमदारुणाः ।
तैश्च वृत्रं समाश्रित्य जगत् सर्वं प्रबाधितम् ॥ ८१॥

ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ।
जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ ८२॥

---

1. क-ग—प्रधानाद् वर्धन्ते; ख-घ—प्रदानाद् वर्तन्ते
2. अ—प्रवर्तन्ते

ते प्रविश्योदधिं घोरं नानाग्राहसमाकुलम् ।
उत्सादनार्थं लोकानां रात्रौ घ्नन्ति ऋषीनिह ॥ ८३॥

न हि शक्याः क्षयं नेतुं समुद्राश्रयिणो हि ते ।
समुद्रस्य क्षये बुद्धिर् भवद्भिस्सम्प्रधार्यताम् ॥ ८४॥

लोमशः—

एतच्छ्रुत्वा वचो देवा विष्णुना समुदाहृतम् ।
विष्णुमेव पुरस्कृत्य ब्रह्माणं समुपस्थिताः ॥ ८५॥

ततस्ते प्रणता भूत्वा तमेवार्थं न्यवेदयन् ।
सर्वलोकविनाशार्थं कालेयाः कृतनिश्चयाः ॥ ८६॥

तेषां तद्वचनं श्रुत्वा पद्मयोनिस्सनातनः ।
उवाच परमप्रीतस् त्रिदशानर्थवद्वचः ॥ ८७॥

परमेष्ठी—

विदितं मे सुरास्सर्वं दानवानां विचेष्टितम् ।
मनुष्यादेश्च निधनं कालेयैः कालचोदितैः ॥ ८८॥

क्षयस्तेषामनुप्राप्तः कालेनोपहताश्च ते ।
उपायं सम्प्रवक्ष्यामि समुद्रस्यापि शोषणे ॥ ८९॥

अगस्त्य इति विख्यातो वारुणिस्सुसमाहितः ।
तमुपागम्य सहिता इममर्थं प्रयाचत ॥ ९०॥

स हि शक्तो महाभागः क्षणात् पातुं महोदधिम् ॥ ९१

समुद्रे च क्षयं नीते कालेयान् निहनिष्यथ ॥ ९१॥

लोमशः—

एवं श्रुत्वा वचो देवा ब्रह्मणः परमेष्ठिनः ।
समनुज्ञाप्य ब्रह्माणं वारुणिं समुपस्थिताः ॥ ९२॥

तत्रापश्यन् महात्मानं वारुणिं दीप्ततेजसम् ।
उपास्यमानमृषिभिर् देवैरिव पितामहम् ॥ ९३॥

तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् ।
आश्रमस्थं तपोराशिं कर्मभिस्स्वैस्तु तुष्टुवुः ॥ ९४॥

देवाः—

नहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा ।
भ्रंशितश्च सुरैश्वर्याल् लोकार्थं लोककण्टकः ॥ ९५॥

क्रोधात् [1]प्रवृद्धस्तरणं भास्करस्य [2]नगोत्तमः ।
वचस्तवानतिक्रामन् विन्ध्यश्शैलो न वर्धते ॥ ९६॥

तमसा चावृते लोके मृत्युनाऽभ्यर्दिताः प्रजाः ।
त्वामेव नाथमासाद्य निर्वृतिं परमां गताः ॥ ९७॥

---

1. ख-घ—प्रवृत्तस्तरसा
2. क-ग—नभोगतः

अस्माकं भयभीतानां नित्यशो भगवान् गतिः ।
ततस्त्वार्ताः प्रयाचामस् त्वां वरं वरदो ह्यसि ॥ ९८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ अस्मिन्नध्याये ९८॥ श्लोकाः ]

## ॥ द्व्यशीतितमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति विन्ध्यगिरेरभिवृद्धेरगस्त्येन तन्निरोधस्य च हेतुकथनम् ॥ १ ॥ देवैस्समुद्रशोषणं प्रार्थितेनागस्त्येन तैस्सह समुद्रं प्रति गमनम् ॥ २ ॥

युधिष्ठिरः—

किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्च्छितः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥ १

लोमशः—

अद्रिराजं महाशैलं मेरुं कनकपर्वतम् ।
उदयास्तमयो भानुः प्रदक्षिणमवर्तत ॥ २

तं तु दृष्ट्वा तथा विन्ध्यश् शैलस्सूर्यमथाब्रवीत् ॥ २॥

विन्ध्यः—

यथा हि मेरुर्भवता नित्यशः परिगम्यते ।

प्रदक्षिणं च क्रियते मामेवं कुरु भास्कर ॥ ३॥

लोमशः—

[1]एवमुक्तस्ततस्सूर्यश्शैलेन्द्रं प्रत्यभाषत ॥ ४

सूर्यः—

नाहमात्मेच्छया शैलं करोम्येनं प्रदक्षिणम् ।
एष मार्गः प्रदिष्टो मे येनेदं निर्मितं जगत् ॥ ५

लोमशः—

एवमुक्तस्ततः क्रोधात् प्रवृद्धस्सहसाऽचलः ।
सूर्याचन्द्रमसोर्मार्गं रोद्धु[2]मिच्छन् परन्तप ॥ ६

ततो देवास्सहितास्सर्व एव
सेन्द्रास्समागम्य महाद्रिराजम् ।
निवारयामासुरुपायतस्तं
न च स्म तेषां वचनं चकार ॥ ७

अथाभिजग्मुर्मुनिमाश्रमस्थं
तपस्विनं धर्मभृतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतवीर्यदीप्तं
तं चार्थमूचुस्सहितास्सुरास्ते ॥ ८

देवाः—

सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा ।
शैलराजो वृणोत्येष विन्ध्यः क्रोधवशानुगः ॥ ९

---

1. ख—इदमर्धं नास्ति 2. ख-ग-घ—मैच्छत्

तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम ।
त्वामृते हि महाभाग तस्मादेतन्निवारय ॥ १०

लोमशः—

तच्छ्रुत्वा वचनं विप्रस् सुराणां शैलमभ्यगात् ।
सोऽभिगम्याब्रवीद्विन्ध्यं सदारस्समुपस्थितः ॥ ११

अगस्त्यः—

मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम ।
दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ॥ १२

यावदागमनं मह्यं तावत् त्वं प्रतिपालय ।
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ॥ १३

लोमशः—

एवं तु संविदं कृत्वा विन्ध्येनामित्रकर्शन ।
अद्यापि दक्षिणाद्देशाद् वारुणिर्न निवर्तते ॥ १४

एवं ते सर्वमाख्यातं यथा विन्ध्यो न वर्धते ।
अगस्त्यस्य प्रभावेण यन्मां त्वं परिपृच्छसि ॥ १५

कालेयास्तु यथा राजन् सुरैस्सर्वै[1]र्निवारिताः ।
अगस्त्याद्वरमासाद्य तन्मे निगदतश्शृणु ॥ १६

त्रिदशानां वचश्श्रुत्वा मैत्रावरुणिरब्रवीत् ॥ १६॥

---

1. क-ग—र्निषूदिताः; ख-घ—र्निवेदिताः

अगस्त्यः—

किमर्थमभियातास्स्थ वरं मत्तः कमिच्छथ ॥ १७

लोमशः—

एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन् ।
सर्वे प्राञ्जलयो भूत्वा पुरन्दरपुरोगमाः ॥ १८

देवाः—

एवं त्वयेच्छाम कृतं हि कार्यं
महार्णवं पीयमानं महात्मन् ।
ततो वधिष्याम सहानुबन्धान्
[1]कालेयदुष्टान् सुरविद्विषस्तान् ॥ १९

लोमशः—

त्रिदशानां वचश्श्रुत्वा तथेति मुनिरब्रवीत् ।
करिष्ये भवतां कामं लोकानां च महत् सुखम् ॥ २०

एवमुक्त्वा ततोऽगच्छत् समुद्रं सरितां पतिम् ।
ऋषिभिश्च तपस्सिद्धैस् सार्धं देवैश्च सुव्रत ॥ २१

मनुष्योरगगन्धर्वयक्षकिम्पुरुषास्तथा ।
अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् ॥ २२

ततोऽभ्यगच्छन् सहितास् समुद्रं भीमनिस्स्वनम् ।
नृत्यन्तमिव चोर्मीभिर् वल्गन्तमिव वायुना ॥ २३

1. क-ग—कालोपसृष्टान्; ख-घ—कालेयसृष्टान्

हसन्तमिव [1]फेनेन कन्दरेषु च नादितम् ।
नानाग्राहसमाकीर्णं नानाद्विजगणायुतम् ॥ २४

अगस्त्यसहिता देवास् सगन्धर्वमहोरगाः ।
ऋषयश्च महाभागास् समासेदुर्महोदधिम् ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ त्र्यशीतितमोऽध्यायः ॥

अगस्त्येन समुद्रसलिले निपीते देवैर्दैत्यहननम् ॥ १॥ देवैः पुनरर्णव-पूरणाय पीतोदकोत्सर्जनं प्रार्थितेनागस्त्येन तस्य स्वेन जीर्णीकरणोक्तौ तदर्थं ब्रह्माणं प्रति प्रार्थनम् ॥ २ ॥ ब्रह्मणा देवान् प्रति भगीरथेन समुद्र-पूरणकथनम् ॥ ३ ॥

---

लोमशः—

समुद्रं स समासाद्य वारुणिर्भगवानृषिः ।
उवाच सहितान् देवान् ऋषींश्चैव समागतान् ॥ १

अगस्त्यः—

एष लोकहितार्थं वै पिबामि वरुणालयम् ।

---

1. क-ग-घ—फेनौघैस् स्खलन्तं कन्दरेष्विव
ख—फेनौघैर् नानाद्विजगणायुतम्—मध्ये अर्धं नास्ति

भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥　　२

लोमशः—

एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः ।
समुद्रमपिबत् क्रुद्धस् सर्वलोकस्य पश्यतः ॥　　३

पीयमानं समुद्रं च दृष्ट्वा सेन्द्रास्सहामराः ।
विस्मयं परमं जग्मुस् स्तुतिभिश्चाप्यपूजयन् ॥　　४

देवाः—

त्वं नस्त्राता विधाता च लोकानां लोकभावन ।
त्वत्प्रसादात् समुच्छेदं न गच्छेत् सामरं जगत् ॥　　५

लोमशः—

स पूज्यमानस्त्रिदशैर्महात्मा
गन्धर्वतूर्येषु नदत्सु सर्वशः ।
दिव्यैश्च पुष्पैरवकीर्यमाणो
महार्णवं निस्सलिलं चकार ॥　　६

दृष्ट्वा कृतं निस्सलिलं महार्णवं
सुरास्समस्ताः परमप्रहृष्टाः ।
प्रगृह्य दिव्यानि वरायुधानि
तान् दानवान् जघ्नुरदीनसत्त्वाः ॥　　७

ते वध्यमानास्त्रिदशैर्महात्मभिर्
महा[1]बलैर्वेगयुतैर्नदद्भिः ।

---

1. ख-ग-घ—बलावेगिभिरुन्नदद्भिः

न सेहिरे वेगवतां महात्मनां
वेगं तदा धारयितुं दिवौकसाम् ॥ ८

ते वध्यमानास्त्रिदशैर् दानवा भीमनिःस्वनाः ।
चक्रुस्तुमुलं युद्धं मुहूर्तमिव भारत ॥ ९

ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः ।
यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः ॥ १०

ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः ।
निहता बह्वशोभन्त पुष्पिता इव किंशुकाः ॥ ११

हतशेषास्ततः केचित् कालेया मनुजोत्तम ।
विदार्य वसुधां देवीं पातालतलमाश्रिताः ॥ १२

निहतान् दानवान् दृष्ट्वा त्रिदशा मुनिपुङ्गवम् ।
तुष्टुवुर्विविधैर्वाक्यैर् इदं वचनमब्रुवन् ॥ १३

देवाः—

त्वत्प्रसादान्मुनिश्रेष्ठ लोकैः प्राप्तं महत् सुखम् ।
त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ॥ १४

पूरयस्व महाभाग समुद्रं लोकभावन ।
यत् त्वया सलिलं पीतं तदस्मिन् पुनरुत्सृज ॥ १५

लोमशः—

एवमुक्तः प्रत्युवाच भगवान् मुनिपुङ्गवः ।

[1]तांस्तदा सहितान् देवान् अगस्त्यस्सपुरन्दरान् ॥ १६

अगस्त्यः—

जीर्णं [2]जलं मया पीतम् उपायोऽन्यः प्रचिन्त्यताम् ।
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ॥ १७

लोमशः—

एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ।
विस्मिताश्च विषण्णाश्च बभूवुस्सहितास्सुराः ॥ १८

परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवम् ।
[3]प्रजास्सर्वा महाराज विप्रजग्मुर्यथागतम् ॥ १९

त्रिदशा विष्णुना सार्धम् उपजग्मुः पितामहम् ।
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनःपुनः ॥ २०

ते धातारमुपागम्य त्रिदशास्सह विष्णुना ।
ऊचुः प्राञ्जलयस्सर्वे सागरस्याभिपूरणम् ॥* २१

तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।
[4]निर्ह्रादिन्या गिरा राजन् देवानाश्वासयंस्तदा ॥ २२

ब्रह्मा—

गच्छध्वं विबुधास्सर्वे यथाकामं यथेप्सितम् ।
महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ॥ २३

1. ख—इदमर्धं नास्ति 2. क-ख-ग-घ—तद्धि मया तोयं
3. ख—इदमर्धं नास्ति 4. ख—इदमर्धं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

ज्ञातीन् वै कारणं कृत्वा महाराजो भगीरथः ।
पूरयिष्यति तोयौघैस् समुद्रं निधिमम्भसाम् ॥* २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

[ अस्मिन्नध्याये २४ श्लोकाः ]

## ॥ चतुरशीतितमोऽध्यायः ॥

युधिष्ठिरेण तत्प्रकारं पृष्टेन लोमशेन तदुपोद्घाततया सगरस्य भार्याद्वये पुत्रलाभप्रकारकथनम् ॥ १ ॥ अश्वमेधे दीक्षितसगराज्ञया षष्टिसहस्रैस्तत्पुत्रैर्भुवं संचारितस्याश्वस्य समुद्रतीरेऽन्तर्धानम् ॥ २ ॥ पित्राज्ञया हयान्वेषणाय समुद्रतीरं खनद्भिः सागरैः पातालतले तपस्यतो भगवतः कपिलस्य तत्समीपचारिणो हयस्य च दर्शनम् ॥ ३ ॥ कपिलेन हयचोरत्वभ्रमेण स्वजिघांसूनां सर्वसागराणां नयनानलेन भस्मीकरणम् ॥ ४ ॥ सगरनिदेशान्निर्गतेनांशुमता कपिलप्रसादनेन हयानयनपूर्वकं पितामहयज्ञसमापनम् ॥ ५ ॥ सगर इवांशुमत्यपि स्वर्गते तत्सुतेन दिलीपेन गङ्गावतरणाय यतमानेनापि तदपारयतैव त्रिदिवगमनम् ॥ ६ ॥

युधिष्ठिरः—

कथं वै ज्ञातयो ब्रह्मन् कारणं चात्र किं मुने ।
कथं समुद्रः पूर्णश्च भगीरथपरिश्रमात् ॥ १

* सर्वेषु कोशेषु नात्राध्यायसमाप्तिर्दृश्यते

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
[1]कथ्यमानं त्वया विप्र राज्ञां चरितमुत्तमम् ॥ २

वैशम्पायनः—
एवमुक्तस्तु विप्रेन्द्रो धर्मराजेन धीमता ।
कथयामास माहात्म्यं [2]सगरस्य महात्मनः ॥ ३

लोमशः—
इक्ष्वाकूणां कुले जातस् सगरो नाम पार्थिवः ।
रूपसत्त्वबलोपेतस् स चापुत्रः प्रतापवान् ॥ ४

स हैहयान् समुत्साद्य तालजङ्घांश्च भारत ।
वशे कृत्वा तु राज्ञोऽन्यान् स्वराज्यमनुशिष्टवान् ॥ ५

तस्य भार्ये त्वभवतां रूपयौवनदर्पिते ।
वैदर्भी भरतश्रेष्ठ शैब्या च भरतर्षभ ॥ ६

स पुत्रकामो नृपतिस् तताप सुमहत् तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ ७

स तप्यमानस्सुमहत् तपोयोगसमन्वितः ।
[3]आराधयन् महात्मानं शर्वं त्रिभुवनेश्वरम् ॥ ८

[4]शङ्करं भवमीशानं शूलपाणिं पिनाकिनम् ।

---

1. ख—इदमर्धं नास्ति
2. अ-क—सागरस्य
3. क-ख-ग—आससाद + त्र्यक्षं त्रिपुरमर्दनम् ।
घ—आससाद महात्मानं शर्वं त्रिपुरघातिनम् । [पाठान्तरम्]
4. ख—अर्धद्वयं नास्ति

त्र्यम्बकं च शिवं श्रेष्ठं बहुरूपमुमापतिम् ॥ ९
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थं समयाचत ॥ १०
तं प्रीतिमान् हरः प्राह सभार्यं नृपसत्तमम ॥ १०॥

श्रीमहादेवः—

यस्मिन वृतो मुहूर्तेऽहं त्वयेह नृपते वरम् ॥ ११
षष्टिः पुत्रसहस्राणि शूरास्समरदर्पिताः ।
एकस्यां सम्भविष्यन्ति पत्न्यां तव नरोत्तम ॥ १२
[1]ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशकरश्शूर एकस्यां सम्भविष्यति ॥ १३

लोमशः—

एवमुक्त्वा तु तं रुद्रस् तत्रैवान्तरधीयत ।
स चापि सगरो राजा जगाम स्वं निवेशनम् ॥ १४
पत्नीभ्यां सहितस्तत्र सोऽतिहृष्टमनास्तदा ।
[2]कालं शम्भुवरप्राप्तं प्रतीक्षन् सगरोऽनयत् ॥ १५
तस्येमे भरतश्रेष्ठ भार्ये कमललोचने ।
वैदर्भी चैव शैब्या च गर्भिण्यौ सम्बभूवतुः ॥ २०
ततः कालेन वैदर्भी गर्भालाबुं ह्यजायत ।

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

शैव्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ॥ २१

तदाऽलाबुं समुत्स्रष्टुं मनश्चक्रेऽथ पार्थिवः ।
[1]अथान्तरिक्षे शुश्राव वाचं गम्भीरनिस्स्वनाम् ॥ २२

अशरीरिणी—

राजन् मा साहसं कार्षीः पुत्रान् न त्यक्तुमर्हसि ।
[2]अलाबुमध्यान्निष्कृष्य बीजं यत्नेन धार्यताम् ॥ २३

सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ।
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव ॥ २४

महादेवेन दिष्टं ते पुत्रजन्म नराधिप ।
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा ॥ * २५

लोमशः—

एतच्छ्रुत्वाऽन्तरिक्षाद्धि स राजा राजसत्तमः ।
यथोक्तं तच्चकाराथ श्रद्दधद् भरतर्षभ ॥ २६

षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ।
रुद्रप्रसादाद्राजर्षेश्च समजायन्त पार्थिव ॥ २७

ते घोराः क्रूरकर्माण आकाशे परिसर्पिणः ।
बहुत्वाच्चावजानन्तस् सर्वांल्लोकान् सहामरान् ॥ २८

त्रिदशांश्चाप्यबाधन्त तथा गन्धर्वराक्षसान् ।

---

1. ख-ब—अथान्तरिक्षाच्छुश्राव　　2. ख—इदमर्धं नास्ति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सर्वाणि चैव भूतानि शूरास्समरशालिनः ॥ २९

वध्यमानास्तदा लोकास् सागरैर्मन्दबुद्धिभिः ।
ब्रह्माणं शरणं जग्मुस् सहितास्सर्वदैवतैः ॥ ३०

तानुवाच महाभागस् सर्वलोकपितामहः ॥ ३०॥

ब्रह्मा—

गच्छध्वं त्रिदशास्सर्वे लोकैस्सार्धं यथागतम् ॥ ३१

[1]नातिदीर्घेण कालेन सागराणां क्षयो महान् ।
भविष्यति महाघोरस् स्वकृतैः कर्मभिस्सुराः ॥ ३२

लोमशः—

एवमुक्तास्तु ते देवा लोकाश्च मनुजोत्तम ।
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥ ३३

ततः काले बहुतिथे व्यतीते भरतर्षभ ।
दीक्षितस्सगरो राजा हयमेधेन वीर्यवान् ॥ ३४

तस्याश्वो व्यचरद् भूमिं पुत्रैस्तैः परिरक्षितः ।
सर्वैरेव महोत्साहैस् स्वच्छन्दप्रचरो नृप ॥ ३५

समुद्रं स समासाद्य निस्तोयं भीमदर्शनम् ।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥ ३६

ततस्ते सागरास्तात हृतं ज्ञात्वा हयोत्तमम् ।

---

1. ख—अर्धचतुष्टयं नास्ति

आगम्य पितुराचख्युर् अदृश्यं तुरगं हृतम् ॥ ३७

तेनोक्ता दिक्षु सर्वासु पुत्रा मार्गत वाजिनम् ।
[1]ससमुद्रवनद्वीपां विचरन्तो वसुन्धराम् ॥ ३८

ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम् ।
अमार्गन्त महाराज सर्वं च पृथिवीतलम् ॥ ३९

[2]ततस्ते सागरास्सर्वे समासाद्य परस्परम् ।
नाध्यगच्छन्त तुरगम् अश्वहर्तारमेव च ॥ ४०

[3]आगम्य पितरं चोचुस् ततः प्राञ्जलयोऽग्रतः ।
स्थितास्सर्वे महीपालास् सागरास्सहितास्तदा ॥ ४१

सागराः—

ससमुद्रवनद्वीपा सनदीनदकन्दरा ।
सपर्वतवनोद्देशा निखिलेन मही नृप ॥ ४२

अस्माभिर्विचिता राजन् शासनात् तव पार्थिव ।
न चाश्वमधिगच्छामो [4]वाजिहर्तारमेव वा ॥ ४३

लोमशः—

श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्च्छितः ।
उवाच वचनं सर्वास् तदा दैववशान्नृप ॥ ४४

सगरः—

अनागमाय गच्छध्वं भूयो मार्गत वाजिनम् ।

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. ख—अर्धद्वयं नास्ति
4. क-ग—नाश्वहर्तारमेव च

याज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः ॥ ४५

लोमशः—

प्रतिगृह्य तु संदेशं पितुस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥ ४६

अथापश्यन्त ते वीराः पृथिवीं तु विदारिताम् ।
समुद्रे पृथिवीपाल पदं मार्गं तु वाजिनः ॥ ४७

समासाद्य बिलं तच्चाप्यखनन् सगरात्मजाः ।
कुद्दालैर्मुसलैश्चैव समुद्रं यत्नमास्थिताः ॥ ४८

स खन्यमानस्सहितैस् सागरैर्वरुणालयः ।
अगच्छत् परमामार्तिं दार्यमाणस्समन्ततः ॥ ४९

असुरोरगरक्षांसि सत्त्वानि विविधानि च ।
आर्तनादमकुर्वन्त वध्यमानानि सागरैः ॥ ५०

भिन्नशीर्षा विदेहाश्च भिन्नजान्वस्थिमस्तकाः ।
प्राणिनस्समदृश्यन्त शतशोऽथ सहस्रशः ॥ ५१

एवं हि खनतां तेषां समुद्रं मकरालयम् ।
व्यतीतस्सुमहान् कालो न चाश्वस्समदृश्यत ॥ ५२

ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ।
विदार्य पातालमुखं सङ्क्रुद्धास्सगरात्मजाः ॥ ५३

[1]अपश्यन्त हयं तत्र विचरन्तं महीतले ।
कपिलं च महात्मानं तेजोराशिमनुत्तमम् ॥ ५४

तेजसा दीप्यमानं तं ज्वालाभिरिव पावकम् ।
दृष्ट्वा हि हृषितास्सर्वे बभूवुस्सगरात्मजाः ॥* ५५

ते तं दृष्ट्वा हयं राजन् सम्प्रहृष्टतनूरुहाः ।
अनादृत्य महात्मानं कपिलं कालचोदिताः ॥ ५६

सङ्क्रुद्धास्समधावन्त वाजिग्रहणकाङ्क्षिणः ॥ ५६॥

ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः ॥ ५७

वासुदेवेति यं प्राहुः कपिलं मुनिपुङ्गवम् ।
स [2]चापि विकृतिं कृत्वा तेजस्तेषु समुत्सृजन् ॥ ५८

ददाह सुमहातेजा मन्दबुद्धीन् स सागरान् ।
षष्टिं तानि सहस्राणि युगपन्मुनिसत्तमः ॥ ५९

[3]सगरस्यात्मजान् सर्वान् भस्मसादकरोन्मुनिः ॥ ५९॥

तान् दृष्ट्वा भस्मसाद्भूतान् नारदस्सुमहातपाः ।
सगरान्तिकमागत्य तच्च तस्मै न्यवेदयत् ॥ ६०॥

स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गताम् ।
मुहूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥ ६१॥

---

1. ख—अर्धचतुष्टयं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
2. क-ख-ग-घ—चक्षुर्विवृतं　　3. क-ख-ग-घ—नास्तीदमर्धम्

स पुत्रनिधनोद्भूतदुःखेन समभिप्लुतः ।
आत्मानमात्मनाऽऽश्वास्य हयमेवान्वचिन्तयत् ॥ ६२॥

अंशुमन्तं समाहूय असमञ्जसुतं तदा ।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ ६३॥

सगरः—

षष्टिस्तात सहस्राणि पुत्राणाममितौजसाम् ।
कापिलं तेज आसाद्य मत्कृते निधनं गताः ॥ ६४॥

तव चापि पिता तात परित्यक्तो मयाऽनघ ।
धर्मं संरक्षमाणेन पौराणां हितकाम्यया ॥ ६५॥

युधिष्ठिरः—

किमर्थं राजशार्दूलस् सगरः पुत्रमात्मजम् ।
त्यक्तवान् दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ६६॥

लोमशः—

असमञ्ज इति ख्यातस् सगरस्य सुतोऽभवत् ।
यं शैब्या जनयामास पौराणां स हि दारकान् ॥ ६७॥

[1]क्रीडतस्सहसाऽऽसाद्य तत्रतत्र महीपते ।
चूडासु क्रोशतो गृह्य नद्यां चिक्षेप [2]वै बलात् ६८॥

ततः पौरास्समाजग्मुर् भयशोकसमाप्लुताः ।

1. ख-घ—जीवतस्सहसाऽऽसाद्य नद्यां चिक्षेप दुर्बलान् ।
[मध्ये अर्धं नास्ति]

2. क-ख—दुर्मतिः ; घ—दुर्बलान्

सगरं चाप्ययाचन्त सर्वे प्राञ्जलयः स्थिताः ॥ ६९॥

पौराः—

[1]त्वं नस्त्राता महाराज परचक्रादिभिर्भयात् ।
असमञ्जभयाद्घोराद् अस्मांस्त्रातुं त्वमर्हसि ॥ ७०॥

लोमशः—

पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः ।
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् ॥ ७१॥

सगरः—

असमञ्जः कुमारोऽद्य नगराद् विप्रवास्यताम् ।
यदि वो मत्प्रियं कार्यम् एतच्छीघ्रं विधीयताम् ॥ ७२॥

लोमशः—

एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर् यथाऽऽज्ञापितवान् नृपः ॥ ७३॥
एतत् ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां विप्रिये तिष्ठन् सगरेण विवासितः ॥ ७४॥
अंशुमांस्तु महेष्वासो यदुक्तस्सगरेण ह ।
तत् तेऽहं सम्प्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ ७५॥

सगरः—

[2]त्यागात्तव पितुश्चापि शेषाणां निधनेन च ।
[3]अलाभेन तथाऽश्वस्य परितप्स्यामि पुत्रक ॥ ७६॥

---

1. ख–इदमर्धं नास्ति 2. क-ख-ग–पितुश्च देशत्यागेन पुत्राणां निधनेन च।
3. घ—सुतानामश्वनाशाच्च मनो मे तात मोहितम्। [ पाठान्तरम् ]

तस्माद्दुःखाभिसन्तप्तं यज्ञविघ्नाच्च मोहितम् ।
हयस्यानयनात् पौत्र नरकान्मां समुद्धर ॥ ७७॥

लोमशः—

अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात् तं देशं यत्र वै दारिता मही ॥ ७८॥

स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥ ७९॥

स दृष्ट्वा तेजसां राशिं पुराणमृषिसत्तमम् ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ॥ ८०॥

ततः प्रीतो महाराज कपिलोंऽशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत ॥ ८१॥

स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयमुदकं वव्रे पितॄणां पावनेप्सया ॥ ८२॥

तमुवाच महातेजाः कपिलो मुनिपुङ्गवः ॥ ८३

कपिलः—

ददानि तव भद्रं ते यद्यत् प्रार्थयसेऽनघ ।
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ॥ ८४

त्वया कृतार्थस्सगरः पुत्रवांश्च त्वया पिता ॥ ८४॥

तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।

शलभत्वं गता ह्येते मम क्रोधहुताशने ॥ ८५॥

पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरम् ॥ ८६॥

हयं नयस्व भद्रं ते याज्ञियं नरपुङ्गव ।
यज्ञस्समाप्यतां तस्य सगरस्य महात्मनः ॥ ८७॥

लोमशः—

अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मनः ॥ ८८॥

[1]सोऽभिवाद्य [2]पितुः पादौ सगरस्य महात्मनः ।
मूर्ध्नि तेनाप्युपाघ्रातस् तस्मै सर्वं न्यवेदयत् ॥ ८९॥

यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ९०॥

तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।
अंशुमन्तं च सम्पूज्य समापयत तं क्रतुम् ॥ ९१॥

समाप्तयज्ञस्सगरो देवैस्सर्वैस्सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ९२॥

प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समावेश्य जगाम त्रिदिवं नृपः ॥ ९३॥

---

1. क—नास्तीदमर्धम्　　2. ख-ग—ततः

अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
प्रशशास महाराज यथैवास्य पितामहः ॥ ९४॥

तस्य पुत्रस्समभवद् दिलीपो नाम धर्मवित् ।
तस्मिन्राज्यं समाधाय अंशुमानपि संस्थितः ॥ ९५॥

दिलीपस्तु ततश्श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन गतिं तेषां विचिन्तयन् ॥ ९६॥

गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलम् ॥ ९७॥

तस्य पुत्रस्समभवच् छ्रीमान् धर्मपरायणः ।
भगीरथ इति ख्यातस् सत्यवागनसूयकः ॥ ९८॥

अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः ।
[1]भगीरथं महात्मानं सत्यधर्मपरायणम् ॥ ९९॥

तपस्सिद्धिसमायोगात् स राजा भरतर्षभ ।
वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ १००॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[अस्मिन्नध्याये १००॥ श्लोकाः]

---

1. ख—अर्धद्वयं नास्ति

## ॥ पञ्चाशीतितमोऽध्यायः ॥

दिलीपसुतेन भगीरथेन धरणीतलावतरणाय गङ्गां प्रति तपश्चरणम् ॥ १ ॥ तथा धरणीतलमवतरन्त्या गङ्गाया वेगधारणाय तदाज्ञया तपसा शङ्करतोषणम् ॥ २ ॥

लोमशः—

स तु राजा महेष्वासश् चक्रवर्ती महामनाः ।
बभूव सर्वलोकस्य मनोनयननन्दनः ॥ १

[1]स शुश्राव महाबाहुः कपिलेन महात्मना ।
पितॄणां निधनं घोरम् अप्राप्तिं त्रिदिवस्य च । २

स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वरः ॥ ३

आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः ।
सोऽपश्यत गिरिश्रेष्ठं हिमवन्तं नगोत्तमम् ॥ ४

[2]शृङ्गैर्बहुविधाकारैर् धातुबद्धैरलङ्कृतम् ।
पवनालम्बिभिर्मेघैः परिष्वक्तं समन्ततः ॥ ५

नदीकुञ्जनितम्बैश्च सोदकैरुपशोभितम् ।
गुहाकन्दरसंलीनैस् सिंहव्याघ्रैर्निषेवितम् ॥ ६

शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।

1. ख—नास्तीदमर्धम्  2. ख—द्वादशार्धानि न सन्ति

भृङ्गराजैस्तथा राजन् नत्यूहैर्जलकुक्कुटैः ॥ ७
[1]मयूरैश्शतपत्रैश्च कोकिलैर्यावजीवकैः ।
चकोरैरसितापाङ्गैस् तथा पुत्रप्रियैरपि ॥ ८
जलस्थानेषु सर्वेषु पद्मिनीभिश्च सङ्कुलम् ।
सारसानां च मधुरैर् व्याहृतैस्समलङ्कृतम् ॥ ९
किन्नरैरप्सरोभिश्च गन्धर्वैश्च निषेवितम् ।
दिग्गजेन्द्रविषाणाग्रैस् समन्ताद्धृष्टपादपम् ॥ १०
विद्याधरानुचरितं नानाद्रुमलतायुतम् ।
[2]विषोल्बणैर्भुजङ्गैश्च दीप्तजिह्वैर्निषेवितम् ॥ ११
क्वचित् कनकसङ्काशं क्वचिद्रजतसन्निभम् ।
क्वचिदञ्जन[3]पद्माभं हिमवन्तमुपागमत् ॥ १२
स तु तत्र नरश्रेष्ठस् तपो घोरं समास्थितः ।
फलमूलाम्बुभक्षोऽभूत् सहस्रपरिवत्सरान् ॥ १३
संवत्सरसहस्रे तु गते दिव्ये महानदी ।
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम् ॥ १४

गङ्गा—

किमिच्छसि महाराज मत्तः किञ्चिद् ददानि ते ।
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ १५

---

1. क-ग-अर्धद्वयं नास्ति 2. ख-इदमर्धं नास्ति 3. क-ख-ग-पुञ्ज

लोमशः—

एवमुक्तः प्रत्युवाच राजा हैमवतीं तदा ।
नदीं भगीरथो राजन् प्रणिपत्य कृताञ्जलिः ॥ १६

भगीरथः—

पितामहा मे वरदे कपिलेन महानदि ।
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम् ॥ १७

षष्टिस्तानि सहस्राणि सागराणां महात्मनाम् ।
कापिलं तेज आसाद्य क्षणेन निधनं गताः ॥ १८

एषामेवं विनष्टानां स्वर्गे वासो न विद्यते ।
यावत् तानि शरीराणि त्वं जलैर्नाभिवर्षसि ॥ १९

स्वर्गं नय महाभागे मत्पितॄन् सगरात्मजान् ।
तेषामर्थेऽभियाचामि त्वामहं वै महानदि ॥ २०

लोमशः—

एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता ।
भगीरथमिदं वाक्यं [1]प्रीता पश्चादभाषत ॥ २१

गङ्गा—

करिष्यामि महाराज वचस्ते नात्र संशयः ।
वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ २२

न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।

1. क-ख-ग—सुप्रीता समभाषत

अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ २३

तं तोषय महाबाहो तपसा वरदं हरम् ।

[1]स तु मां प्रच्युतां देवश् शिरसा धारयिष्यति । २४

करिष्यति च ते कामं पितॄणां हितकाम्यया ॥

[2]तपसाऽराधितश्शम्भुर् भगवाँल्लोकभावनः ॥ २५

लोमशः—

एतच्छ्रुत्वा वचो राजन् महाराजो भगीरथः ।

कैलासं पर्वतं गत्वा तोषयामास शङ्करम् ॥ २६

ततस्तेन समागम्य कालयोगेन केनचित् ।

गङ्गावतरणं राजन्नयाचत महीपतिः ॥ २७

अगृह्णाच्च वरं तस्माद् गङ्गाया धारणे नृप ।

स्वर्गे वासं समुद्दिश्य पितॄणां स नरोत्तमः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[अस्मिन्नध्याये २८ श्लोकाः]

---

1. ख—इदमर्धं नास्ति

2. ख—इदमर्धं नास्ति

## ॥ षडशीतितमोऽध्यायः ॥

शङ्करेण भगीरथप्रार्थनया क्षितितलमभिपतन्त्या गङ्गाया धारणम् ॥१॥ भगीरथेन स्वपथानुगतया गङ्गया पितृभ्य उदकदानपूर्वकं सागरपूरणम् ॥ २ ॥

लोमशः—

भगीरथवचश्श्रुत्वा प्रियार्थं त्रिदिवौकसाम् ।
एवमस्त्विति राजानं भगवान् प्रत्यभाषत ॥ १

श्रीमहादेवः—

धारयिष्ये महाबाहो गगनात् प्रच्युतां शिवाम् ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ २

लोमशः—

एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् ।
[1-2]संवृतः पार्षदैर्घोरैर् नानाप्रहरणोद्यतैः ॥ ३

तत्र स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह ।

श्रीमहादेवः—

प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ॥ ४

पितृणां पावनार्थं ते तामहं मनुजाधिप ।
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥ ५

लोमशः—

[3]एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम् ।

---

1. ख—भगीरथोऽपि राजर्षिश् शर्वेण सह सङ्गतः ।
शैलमूर्ध्नि हरस्स्थित्वा भगीरथमुवाच ह ॥ [अधिकः पाठः]

2. ख—अर्धद्वयं नास्ति 3. इदमर्धं नास्ति

प्रयतः प्रणतो भूत्वा गङ्गां हि समचिन्तयत् ॥ ६
ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानं च स्थितं दृष्ट्वा गमनात् सहसा च्युता ॥ ७
तां प्रच्युतां ततो दृष्ट्वा देवास्साधं महर्षिभिः ।
गन्धर्वोरगयक्षाश्च समाजग्मुर्दिदृक्षवः ॥ ८
ततः पपात गगनाद् गङ्गा हिमवतस्सुता ।
समुद्भ्रान्तमहावर्ता मीनग्राहसमाकुला ॥ ९
तां दधार हरो राजन् गङ्गां गगनमेखलाम् ।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ ५ १०
सा बभूव विसर्पन्ती त्रिधा राजन् समुद्रगा ।
[1]फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥ ११
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित् क्वचित् ।
स्वफेनपटसंवीता मत्तेव प्रमदाऽव्रजत् ॥ ५ १२
क्वचित् सा तोयनिनदैर् नदन्ती नादमुत्तमम् ।
क्वचिदाकाशमावर्तैस् संक्षिपन्तीव सर्वशः ॥ १३
एवंप्रकारान् सुबहून् कुर्वन्ती गगनाच्च्युता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ १४

गङ्गा—
[2]दर्शयस्व महाराज मार्गं केन व्रजाम्यहम् ।

---

1. ख—अर्धद्वयं नास्ति
2. ख—अर्धद्वयं नास्ति
3. अ—अर्धाष्टकं नास्ति

त्वदर्थमवतीर्णाऽस्मि पृथिवीं पृथिवीपते ॥ १५

लोमशः—

एतच्छ्रुत्वा महाराज प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनाम् ॥ १६

प्लावनार्थं नरश्रेष्ठ पुण्येन सलिलेन च ॥ १६॥

[1]गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ।
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैस्सह ॥ १७॥

समासाद्य समुद्रं च गङ्गया सहितो नृपः ।
पूरयामास वेगेन समुद्रं वरुणालयम् ॥ १८॥

दुहितृत्वे च नृपतिर् गङ्गां समनुकल्पयत् ।
पितृभ्यश्चोदकं तत्र ददौ पूर्णमनोरथः ॥ १९॥

एतत् ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा ।
पूरणार्थं समुद्रस्य पृथिवीमवतारिता ॥ २०॥

कालेयाश्च यथा राजंस् त्रिदशैर्विनिपातिताः ।
समुद्रश्च यथा पीतः कारणार्थे महात्मना ॥ २१॥

वातापिश्च यथा नीतः क्षयं स ब्रह्महा तु यः ।
अगस्त्येन महाराज यन्मां त्वं परिपृच्छसि ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

---

1. अ-क-ग—अर्धद्वयं नास्ति

## ॥ सप्ताशीतितमोऽध्यायः ॥

युधिष्ठिरेण ऋषभकूटगिरौ नन्दापरमनन्दानदीगमनम् ॥ १॥ लोमशेन युधिष्ठिरं प्रति ऋषभमुनेर्नन्दायाश्च महिमकथनम् ॥ २ ॥ युधिष्ठिरेण कौशिकीतरे ऋश्यश्रृङ्गाश्रमगमनम् ॥ ३ ॥ लोमशेन युधिष्ठिरं प्रति विभण्डकान्मृग्यामृश्यश्रृङ्गोत्पत्तिकथनम् ॥ ४ ॥ रोमपादेनानावृष्टिनिवृत्तये ऋश्यश्रृङ्गानयनं चोदिताभिर्वेश्याभिस्तद्वनगमनम् ॥ ५ ॥

---

वैशम्पायनः—

ततः प्रयातः कौन्तेयः क्रमेण भरतर्षभ ।
[1]नन्दां परमनन्दां च नद्यौ पापभयापहे ॥ १

स पर्वतं समासाद्य हेमकूटमनामयम् ।
अचिन्त्यानद्भुतान् भावान् ददर्श सुबहून् नृपः ॥ २

वाचो यत्राभवन् क्रोधा उपलाश्च सहस्रशः ।
नाशक्नुवंस्तदारोढुं विषण्णमनसोऽपि वा ॥ ३

वायुर्यत्र ववौ नित्यं नित्यं देवश्च वर्षति ।
सायं प्रातश्च भगवान् दृश्यते हव्यवाहनः ॥ ४

एवं बहुविधान् भावान् अद्भुतान् वीक्ष्य पाण्डवः ।
लोमशं पुनरेव स्म पर्यपृच्छत् तदद्भुतम् ॥ ५

युधिष्ठिरः—

[2]यदेतद्भगवंश्चित्रं पर्वतेऽस्मिन् महौजसि ।

---

1. घ—नन्दामपरनन्दां 2. घ—अर्धद्वयं नास्ति

एतन्मे सर्वमाचक्ष्व विस्तरेण महाद्युते ॥ ६

लोमशः—

यथाश्रुतमिदं पूर्वम् अस्माभिररिकर्शन ।
तदेकाग्रमना राजन् निबोध वदतो मम ॥ ७

अस्मिन्नृषभकूटे तु वृषभो नाम तापसः ।
अनेकशतवर्षायुस् तपस्वी कोपनो भृशम् ॥ ८

स वै सम्भाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह ॥ ८॥

य इह व्याहरेत् कश्चिद् उपलानुत्सृजेत वा ।
वातं चाहूय मा शब्दम् इत्युवाच स तापसः ॥ ९॥

व्याहरंश्चैव पुरुषो मेघेन विनिवार्यते ॥ १०

एवमेतानि कर्माणि राजंस्तेन महर्षिणा ।
कृतानि कानिचित् क्रोधात् प्रतिषिद्धानि कानिचित् ॥ ११

नन्दामभिगता देवाः पुरा राजन्निति श्रुतिः ।
अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः ॥ १२

तेनादर्शनमिच्छन्तो देवाश्शक्रपुरोगमाः ।
दुर्गं चक्रुरिमं देशं गिरिं प्रत्यूहरूपकम् ॥ १३

तदा प्रभृति कौन्तेय नरा गिरिमिमं सदा ।
नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम् ॥ १४

नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः ।

आरोढुं वाऽपि कौन्तेय तस्मान्नियतवाग्भव ॥ १५

इह देवास्तदा सर्वे यज्ञानाजह्रुरुत्तमान् ।
तेषामेतानि लिङ्गानि दृश्यन्ते [1]पुरुषर्षभ ॥ १६

[2]कुशाङ्कुरेण दूर्वेयं संस्तीर्णेव च मेदिनी ।
यूपप्रकारा बहवो वृक्षाश्चेमे विशां पते ॥ १७

देवाश्च ऋषयश्चापि वसन्त्यद्यापि भारत ।
तेषां सायं तथा प्रातर् दृश्यते हव्यवाहनः ॥ १८

इहाप्लुतानां कौन्तेय पाप्मा सद्योऽभिहन्यते ।
कुरुश्रेष्ठाभिषेकं त्वम् अस्मिन् कुरु सहानुजैः ॥ १९

ततो नन्दाप्लुताङ्गस्त्वं कौशिकीमभियास्यसि ।
विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमम् ॥ २०

वैशम्पायनः—

ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः ।
जगाम कौशिकीं पुण्यां रम्यां शिवजलां नदीम् ॥* २१

लोमशः—

एषा देवी नदी पुण्या कौशिकी भरतर्षभ ।
विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते ॥ २२

---

1. क-ख-ग—ऽद्यापि भारत घ—भरतर्षभ
2. क—अर्धत्रयं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ।
ऋश्यशृङ्गस्सुतो यस्य तपस्वी संयतेन्द्रियः ॥ २३

तपसो यः प्रभावेन वर्षयामास [1]पाण्डव ।
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा ॥ २४

मृग्यां जातस्स तेजस्वी काश्यपस्य सुतः प्रभुः ।
विषये रोमपादस्य यश्चकाराद्भुतं महत् ॥ २५

[2]निर्वर्तिते तु सस्ये च यस्मै शान्तां ददौ नृपः ।
रोमपादो दुहितरं सावित्रीं सविता यथा ॥ २६

युधिष्ठिरः—

ऋश्यशृङ्गः कथं मृग्याम् उत्पन्नः काश्यपात्मजः ।
विरुद्धयोनिसंसर्गे कथं च तपतां वरः ॥ २७

किमर्थं च भया[3]त् तस्य क्रोधाद् बालस्य धीमतः ।
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा ॥ २८

कथंरूपा च सा शान्ता राजपुत्री यतव्रता ।
लोभयामास या चेतो मृगभूतस्य तस्य वै ॥ २९

रोमपादस्स राजर्षिर् यदाऽश्रूयत धार्मिकः ।
कथं वै विषये तस्य नावर्षत् पाकशासनः ॥ ३०

---

1. क-ख-ग—वासवम् ।　　2. ख—इदमर्धं नास्ति
3. क-ख-ग—च्छक्रस्तस्य : घ—त्तस्य शक्रो

[1]एतन्मे भगवन् सर्वं विस्तरेण यथातथम् ।
वक्तुमर्हसि शुश्रूषोर् ऋश्यशृङ्गस्य चेष्टितम् ॥ ३१

लोमशः—

विभण्डकस्य ब्रह्मर्षेस् तपसा भावितात्मनः ।
अमोघवीर्यस्य सुतः प्रजापतिसमद्युतेः ॥ ३२

शृणु पुत्रो यथा जात ऋश्यशृङ्गः प्रतापवान् ।
महाह्रदे महातेजा बालस्थविरसम्मतः ॥ ३३

महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ।
दीर्घकालं परिश्रान्त ऋषिर्देवर्षिसम्मितः ॥ ३४

तस्य रेतः प्रचस्कन्द दृष्ट्वाऽप्सरसमुर्वशीम् ॥ ३४॥

अप्सूपस्पृशतो राजं[2]स् तद्रेतः पतितं तदा ।
सह तोयेन तृषिता [3]मृगी तच्चापिबत् तदा ॥ ३५॥

अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् ।
तस्यां मृग्यां समभवत् तस्य पुत्रो महानृषिः ॥ ३६॥

ऋश्यशृङ्गस्तपोनित्यो वन एव व्यवर्धत ॥ ३७

तस्य शृङ्गं शिरसि वै राजन्नासीन्महात्मनः ।
तेनर्श्यशृङ्ग इत्युक्तस् तपसा पाण्डवर्षभ ॥ ३८

न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्र मानुषः ।

1. ख—इदमर्धं नास्ति 2. क-ख-ग-घ—जन् मृगी तच्चापिबत्तदा ।
3. क-ख-ग-घ—सा गर्भिण्यभवन्नृप ।

तस्मात् तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप ॥　　३९

एतस्मिन्नेव काले तु सखा दशरथस्य वै ।
रोमपाद इति ख्यातो ह्यङ्गानामीश्वरोऽभवत् ॥　　४०

[1]तेन कामाः कृता मिथ्या ब्राह्मणेभ्य इति श्रुतिः ।
[2]दैवोपहतसत्त्वेन धर्मज्ञेनापि भारत ॥　　४१

स ब्राह्मणैः परित्यक्तस् तदा भरतसत्तम ॥　　४१॥

पुरोहितापचारेण तस्य राज्ञो यदृच्छया ।
न ववर्ष सहस्राक्षस् ततोऽपीड्यन्त वै प्रजाः ॥　　४२॥

स ब्राह्मणान् पर्यपृच्छत् तपोयुक्तान् मनीषिणः ।
प्रवर्षणे सुरेन्द्रस्य समर्थान् पृथिवीपतिः ॥　　४३॥

रोमपादः—

कथं स वर्षेत् पर्जन्य उपायः परिमृश्यताम् ॥　　४४

लोमशः—

तमूचुश्चोदितास्ते तु स्वमतानि मनीषिणः ।
तत्र त्वेको मुनिवरस् तं राजानमुवाच ह ॥　　४५

मुनिवरः—

कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिं चर ।
ऋश्यशृङ्गं मुनिवरम् आनयस्व च पार्थिव ॥　　४६

---

1. ख—पुरोहितापचारेण तथा राज्ञो युधिष्ठिर ।　　[अधिकः पाठः]
2. घ—नास्तीदमर्धम्

ऐणेयमनभिज्ञं च नारीणामार्जवे रतम् ॥ ४६॥

स चेदवतरेद्राजन् विषयं ते महातपाः ।
सद्यः प्रवर्षेत् पर्जन्य इति मे नास्ति संशयः ॥ ४७॥

लोमशः—

एतच्छ्रुत्वा तु वचनं कृत्वा निष्कृतिमात्मनः ।
स कृत्वा पुनरागच्छत् प्रसन्नेषु द्विजातिषु ॥ ४८॥

राजानमागतं दृष्ट्वा प्रतिसञ्जगृहुः प्रजाः ।
स वै ताः प्रतिजग्राह पितेव हितकृत् सदा ॥ ४९॥

ततोऽङ्गपतिराहूय सचिवान् मन्त्रकोविदान् ।
ऋश्यशृङ्गागमे यत्नम् अकरोन्मन्त्रनिश्चये ॥ ५०॥

सोऽध्यगच्छदुपायं तु तैरमात्यैस्सहाच्युतः ।
[1]शास्त्रज्ञैरलमर्थज्ञैर् नित्यं च परिनिष्ठितैः ॥ ५१॥

ततस्ता आनयामास वारमुख्या महीपतिः ।
वेश्यास्सर्वत्र निष्णातास् ता उवाच स पार्थिवः ॥ ५२॥

रोमपादः—

ऋश्यशृङ्गमृषेः पुत्रम् आनयध्वमुपायतः ।
लोभयित्वाऽतिविश्रब्धं विषयं मम शोभनाः ॥ ५३॥

लोमशः—

ता राजभयभीताश्च शापभीताश्च योषितः ।

---

1. ख—इदमर्धं नास्ति ग—शास्त्रज्ञैस्सचिवैर्नित्यमर्थज्ञैः परि

अशक्यमूचुस्तत् कार्यं विषण्णा गतचेतसः ॥ ५४॥

तं चैका च जरद्घोषा राजानमिदमब्रवीत् ॥ ५५

जरद्घोषा—

प्रयतिष्ये महाराज तमानेतुं तपोधनम् ।

अभिप्रेतांस्तु मे कामांस् त्वमनुज्ञातुमर्हसि ॥ ५६

ततश्शक्ष्ये लोभयितुम् ऋश्यशृङ्गमृषेस्सुतम् ॥ ५६॥

लोमशः—

तस्यास्सर्वमभिप्रायम् अन्वजानात् स पार्थिवः ।

धनं च प्रददौ भूरि रत्नानि विविधानि च ॥ ५७॥

ततो रूपेण सम्पन्ना [1]रत्नानि च विशां पते ।

स्त्रिय आदाय काश्चित् सा जगाम वनमञ्जसा ॥ ५८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ अस्मिन्नध्याये ५८॥ श्लोकाः ]

---

1. क-घ—वयसा च महीपते ; घ—वयसा च विशां पते
ख—वयसार्थसमन्विताः

## ॥ अष्टाशीतितमोऽध्यायः ॥

विभण्डकस्यासन्निधाने तदाश्रमं प्रविष्टया वेश्यायुवत्या विलासैर्ऋश्यशृङ्गं प्रलोभ्य पुनस्स्वावासगमनम् ॥ १ ॥ तत आगतेन विभण्डकेन वेश्याविलासमुग्धचेतसं सुतं प्रति मोहकारणप्रश्नः ॥ २ ॥

लोमशः—

सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये ।
संदेशाच्चैव नृपतेस् स्वबुद्ध्या चैव भारत ॥ १

नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितम् ।
नानागुल्मलतोपेतैस् स्वादुकामफलप्रदैः ॥ २

अतीव रमणीयं तद् अतीव च मनोहरम् ।
चक्रे नाव्याश्रमं रम्यम् अद्भुतोपमदर्शनम् ॥ ३

ततो निबध्य सा नावम् अदूरे काश्यपाश्रमम् ।
चारयामास पुरुषैर् विहारं तस्य वै मुनेः ॥ ४

ततो दुहितरं वेश्यां समध्याप्येतिकृत्यताम् ।
दृष्ट्वाऽऽश्रमं काश्यपस्य प्राहिणोद् बुद्धिसम्मताम् ॥ ५

सा तत्र गत्वा कुशला तपोनित्यस्य संनिधौ ।
आश्रमं तं समासाद्य ददर्श तमृषेस्सुतम् ॥ ६

वेश्या—

कच्चिन्मुने कुशलं तापसानां
कच्चिच्च वो मूलफलं समृद्धम् ।

कच्चिद् भवान्[1] कुशली चाश्रमेऽस्मिन्
त्वां वै द्रष्टुं साम्प्रतमागताऽस्मि ॥ ७
कच्चित् तपो वर्धते तापसानां
पिता च ते कच्चिदहीनसत्वः ।
कच्चित् त्वया प्रीयते चैव विप्र
कच्चित् स्वाध्यायः क्रियते ऋश्यशृङ्ग ॥ ८

ऋश्यशृङ्गः—
ऋद्धो भवान् ज्योतिरिव प्रकाशते
मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं ते वै सम्प्रदास्यामि कामाद्
यथाधर्मं फलमूलानि चैव ॥ ९
कौश्यां बृस्यामास्स्व यथोपजोषं
कृष्णाजिनेनावृतायां शुभायाम् ।
क्व चाश्रमस्तव किं नाम चेदं
व्रतं ब्रह्मंश्चरसि ते वद त्वम् ॥ १०

वेश्या—
ममाश्रमः काश्यपपुत्र रम्यस्
त्रियोजनं शैलमिमं परेण ।

---

1. क-ग-घ—रमते
ख—क्व चाश्रमस्तव किं नाम दैवं व्रतं ब्रह्मंश्चरसि हि देववत्त्वम् ।
[ पाठान्तरम् ]

तत्र स्वधर्मोऽनभिवादनं नो
न चोदकं पाद्यमुपस्पृशामि ॥ ११

ऋश्यश्रृङ्गः—
फलानि पक्कानि ददानि तेऽहं
भल्लातकान्यामलकानि चैव ।
बिल्वानि चैवेङ्गुदधन्वनानि
प्रियालकान् कामकरं कुरुष्व ॥ १२

लोमशः—
सा तानि सर्वाणि विसर्जयित्वा
भक्षान् महार्हान् प्रददौ च तस्मै ।
तान्यृश्यश्रृङ्गस्य महारसानि
भृशं सुरूपाणि [1]भृशाधिकानि ॥ १३

ददौ च माल्यानि सुगन्धवन्ति
चित्राणि वासांसि च भानुमन्ति ।
पानानि चाग्र्याणि ततो मुमोद
चिक्रीड चैव प्रजहास चैव ॥ १४

सा कन्दुकेनारमतास्य मूले
विभज्यमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा
समाश्लिषच्चासकृदृश्यश्रृङ्गम् ॥ १५

1. क-ख-ग—च मोदकानि; घ—रुचिं ददुर्हि

सर्जानशोकांस्तिलकांश्च वृक्षान्
　प्रपुष्पितानवनाम्याावभज्य ।
विलज्जमानेव मदाभिभूता
　प्रलोभयामास सुतं महर्षेः ॥　१६

अथर्ष्यशृङ्गं विकृतं समीक्ष्य
　पुनःपुनः पीड्य च कायमस्य ।
अवेक्ष्यमाणा शनकैर्जगाम
　कृत्वाऽग्निहोत्रस्य तदाऽपदेशम् ॥　१७

तस्यां गतायां मदनेन मत्तो
　विचेतनश्चाभवदृश्यशृङ्गः ।
तामेव भावेन गतेन शून्यो
　विनिःश्वसन्नार्तरूपो बभूव ॥　१८

ततो मुहूर्ताद्धरिपिङ्गलाक्षः
　प्रवेष्टितो रोमभिरानखाग्रम् ।
स्वाध्यायवान् वृत्तसमाधियुक्तो
　विभण्डकः काश्यपः प्रादुरासीत् ॥　१९

सोऽपश्यदासीनमुपेत्य पुत्रं
　ध्यायन्तमेकं विपरीतचित्तम् ।
विनिःश्वसन्तं मुहुरूर्ध्वदृष्टिं
　विभण्डकः पुत्रमुवाच दीनम् ॥　२०

विभण्डकः—

कल्प्यन्ते वै समिधः किंनु तात
कच्चिद्धुतं चाग्निहोत्रं त्वयाऽद्य ।
सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः
कच्चित् सवत्सा च कृता त्वया च ॥ २१

न वै यथापूर्वमिवासि पुत्र
चिन्तापरश्चासि विचेतनश्च ।
दीनोऽतिमात्रं किमिवाद्य खिन्नः
पृच्छामि त्वां क इहाभ्यागतोऽभूत् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ अस्मिन्नध्याये २२ श्लोकाः ]

## ॥ एकोननवतितमोऽध्यायः ॥

ऋश्यशृङ्गेण विभण्डकं प्रति श्रमाद्वेश्याकुमार्यां मुनिकुमारत्वव्यपदेशेन तदागमनोक्तिपूर्वकं तदङ्गचेष्टाविलासैस्तस्यामेव स्वचित्तासक्त्युक्तिः ॥ १ ॥ पुनर्विभण्डकासन्निधाने तदाश्रमं गतया गणिकातरुण्या नौकारोपणेन महावृष्टेराविर्भावः ॥ २ ॥ ऋश्यशृङ्गेण लोमपादप्रार्थनया शान्ताभिधायास्तत्सुतायाः परिणयनम् ॥ ३ ॥ लोमपादेन क्रुद्धस्य विभण्डकस्य प्रसादनम् ॥ ४ ॥ ऋश्यशृङ्गेण पितृशासनादङ्गदेशे तनयोदयावधिनिवासपूर्वकं ततः सह भार्यया निजाश्रमाभिगमनम् ॥ ५ ॥

ऋश्यशृङ्गः—

इहागतो जटिलो ब्रह्मचारी
न वै ह्रस्वो नातिदीर्घो मनस्वी ।
सुवर्णवर्णः कमलायताक्षस्
सुतस्सुराणामिव शोभमानः ॥ १

समृद्धरूपस्सवितेव दीप्तस्
[1]सुश्लक्ष्णवाक् कृष्णतारश्चकोरम् ।
नीलाः प्रसन्नाश्च जटास्सुगन्धा
हिरण्यरज्जुग्रथितास्सुदीर्घाः ॥ २

आश्चर्यभूतः पुनरस्य कण्ठे
विभ्राजते विद्युदिवान्तरिक्षे ।

1. अ-ग—स शुक्लकृष्णाक्षरुचिप्रकोटिरः ।
व—सशुक्लकृष्णाक्षकृतं चकोरैः ।

द्वौ चास्य पिण्डावधरेण कण्ठम्
अजातरोमौ सुमनोहरौ मे ॥ ३
विलग्नमध्यश्च सुनाभिदेशः
कटी च तस्यातिकृतप्रमाणा ।
तथाऽस्य चीरान्तरिता प्रभाति
हिरण्मयी मेखला मे यथेयम् ॥ ४
अन्यच्च तस्याद्भुतदर्शनीयं
विकूजितं पादयोस्सम्प्रभाति ।
[1]पाण्योश्च तद्वद् बहुभिर्निबद्धौ
कलापकावक्षमाला यथेयम् ॥ ५
[2]निवेष्टमानानि च तानि तस्य
कूजन्ति हंसास्सरसीव मत्ताः ।
चीराणि तस्याद्भुतदर्शनानि
नेमानि तद्वन्मम रूपवन्ति ॥ ६
[3]वक्त्रं च तस्याद्भुतदर्शनीयं
सुव्याहृतं ह्लादयतीव चेतः । ७

1. घ—अर्धद्वयं नास्ति
2. क-ग—विचेष्टमानस्य च तस्य तानि
घ—विवेष्टमानानि ; ख—इदमर्धं नास्ति
3. घ—वक्त्रं च तस्याद्भुतदर्शनानि
नेमानि तद्वन्मम रूपवन्ति । [ इदमर्धमधिकम् ]

पुंस्कोकिलस्येव च तस्य वाणी
तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥ ७
यथा वनं माधवमासि मध्ये
समीरितं श्वसनेनेव भाति ।
तथा स भात्युत्तमपुण्यगन्धी
निषेव्यमाणः पवनेन तात ॥ ८
सुसंयताचापि जटा विभक्ता
द्वैधीकृता भाति ललाटदेशे ।
कर्णौ च चित्रैरिव चक्रवाकैस्
समावृतौ तस्य सुरूपवद्भिः ॥ ९
तथा फलं वृत्तमथो विचित्रं
समाहतं पाणिना दक्षिणेन ।
तद्भूमिमासाद्य पुनःपुनश्च
समुत्पतत्यद्भुतरूपमुच्चैः ॥ १०
तच्चाभिहत्वा परिवर्ततेऽसौ
वातेरितो वृक्ष इवावघूर्णः । ऽ
सम्प्रेक्ष्य मे पुत्रमिवामराणां
प्रीतिः परा तात रतिश्च जाता ॥ ११
स मे समाश्लिष्य पुनश्शरीरं
जटासु गृह्याभ्यवनाम्य वक्त्रम् ।

वक्रेण वक्त्रं प्रणिधाय शब्दं
चकार तन्मेऽजनयत् प्रहर्षम्॥ १२

न चापि पाद्यं बहुमन्यतेऽसौ
फलानि चेमानि मया हृतानि ।
एवंव्रतोऽस्मीति च मामवोचत्
फलानि चान्यानि नवान्यदान्मे ॥ १३

मयोपयुक्तानि फलानि तानि
नेमानि तुल्यानि रसेन तेषाम् ।
न चापि तेषां त्वगियं यथैषां
साराणि नैषामिव सन्ति तेषाम् ॥ १४

तोयानि चैवातिरसानि मह्यं
प्रादात् स वै पातुमुदाररूपः ।
पीत्वैव यान्यभ्यधिकं प्रहर्षो
ममाभवद्भूश्चलितेव चासीत् ॥ १५

इमानि चित्राणि च गन्धवन्ति
माल्यानि तस्योद्ग्रथितानि पट्टैः ।
यानि प्रकीर्येह गतस्स्वमेव
स आश्रमं तपसा द्योतमानः ॥ १६

गतेन तेनास्मि कृतो विचेता
गात्रं च मे सम्परितप्यते च ।

इच्छामि तस्यान्तिकमाशु गन्तुं
तं चेह नित्यं परिवर्तमानम् ॥ १७

गच्छामि तस्यान्तिकमेव तात
का नाम सा ब्रह्मचर्या च तस्य ।
इच्छाम्यहं चरितुं तेन सार्धं
यथा तपस्स चरत्युग्रकर्मा ॥* १८

विभण्डकः—

रक्षांसि चैतानि चरन्ति पुत्र
रूपेण तेनाद्भुतदर्शनेन ।
अतुल्यवीर्याण्यतिघोरवन्ति
विघ्नं सदा तपसश्चिन्तयन्ति ॥ १९

सुरूपरूपाणि च तानि भूत्वा
विलोभ्य भूयो विविधैरुपायैः ।
सुखाच्च लोकाच्च निपातयन्ति
तान्युग्ररूपाणि मुनीन् वनेषु ॥ २०

न तानि सेवेत मुनिर्यतात्मा
सतां लोकान् प्रार्थयानः कथञ्चित् ।
कृत्वा विघ्नं तापसानां रमन्ते
पापाचारास्तपसः पातयन्ति ॥ २१

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

असज्जनेनाचरितानि पुत्र
पानान्यपेयानि मधूनि तानि ।
माल्यानि चैतानि न वै मुनीनां
स्मृतानि चित्रोज्ज्वलगन्धवन्ति ॥ २२

लोमशः—

रक्षांसि तानीति निवार्य पुत्रं
विभण्डकस्तं मृगयांबभूव ।
नासादयामास यदा त्र्यहेण
तदा स पर्यावधृते श्रमाय ॥ २३

यदा पुनः काश्यपो वै जगाम
फलान्याहर्तुं विधिनाश्रमे सः ।
तदा पुनर्लोभयितुं जगाम
सा वेशयोषा मुनिमृश्यशृङ्गम् ॥ २४

दृष्ट्वैव तामृश्यशृङ्गः प्रहृष्टस्
सम्भ्रान्तरूपो ह्यभवत् तदानीम् ।
प्रोवाच चैनां भवदाश्रमाय
गच्छाव यावन्न पिता ममेति ॥ २५

ततो राजन् काश्यपस्यैकपुत्रं
प्रवेश्य वेगेन विमुच्य नावम् ।

THE

# MAHĀBHĀRATA

**(Southern Recension)**

Critically Edited by

**VIDYASAGARA**

**P. P. S. SASTRI, B. A. (OXON), M.A.,**

*Professor of Sanskrit, Presidency College, Madras,*

*Editor, Descriptive Catalogue of Sanskrit Mss.*

*in the Tanjore Palace Library.*

---

## Vol. IV—ĀRAṆYA PARVAN—Part I

---

PUBLISHED BY

V. RAMASWAMY SASTRULU & SONS

292, ESPLANADE, MADRAS.

॥ श्रीरस्तु ॥

# ॥ श्रीमन्महाभारतम् ॥

तत्र

# आरण्यपर्वणि

## प्रथमो भागः

(जटासुरवधपर्वान्तः)

मद्रपुरराजकीयकलाशालासंस्कृताध्यापकैः
बि. ए. (आक्सन्) एम्. ए. (मद्रास्)
इत्यादिबिरुदाङ्कितैः
विद्यासागर. पि. पि. सुब्रह्मण्यशास्त्रिभिः
दाक्षिणात्यशाखानुसारेण सविमर्शं संशोधितः

आचारसंभवो धर्मो धर्माद्वेदस्समुत्थितः ।
वेदाद्यज्ञस्समुत्पन्नो यज्ञाद्देवाः प्रतिष्ठिताः ॥
वेदाचारविधानोक्तैर् यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः ॥

वन-१२९-श्लो-२९-३०.



चेन्नपुर्यां
वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्,
इत्येतैः सम्मुद्र्य प्रकाशितम्

particular recension on these main considerations. Having chosen the manuscripts with all due care, we must allow the manuscripts to speak for themselves. The peculiar character of the Mahābhārata Text-Tradition is that, if a thousand Manuscripts are collated, it would indeed yield a thousand versions also. Quantity alone, therefore, as far as the Mahābhārata is concerned, is a difficult, not to say misleading, guide.

When we choose a particular manuscript as the Principal Text to be printed, we give below in foot-notes all important readings contained in the other manuscripts. But the Principal Text itself is subjected to a severe critical test. If there are words in the Principal Text which do not convey a plausible sense, we take the liberty to relegate the reading in the अ-Kos'a to the foot-note and adopt in the Principal-Text, the best reading available in the other Manuscripts, taking care to exhibit scrupulously such variations of the अ-Kos'a by suitable foot-notes. Thus the Principal Text printed represents in the main the अ-Kos'a, all deviations from the अ-Kos'a by way of omissions or additions to, of important passages and half verses being shown in the footnotes, specifically. If the अ-Kos'a is printed as a photographic reprint as is suggested by Dr. Sukthankar, it will indeed be of no use to the public

as it is too much to expect of them the patience and skill necessary to detect mistakes in the अ-Kos'a and correct them from the readings given below in the footnotes. The scholars, it may be argued, would of course, have a purer text for their use. But they can even now, with very great ease, reconstruct the अ-Kos'a in full from our edition and yet have the benefit of a readable and full text for ordinary purposes of study and reference. We, therefore, feel that the principles adopted by us of printing a single Ms. as the Principal Text and editing the same to subserve the needs of scholars as well as of the lay public are to be preferred as distinctly advantageous in the long run to any other alternative plan.

We now come to some of the specific complaints preferred by Dr. Sukthankar against our Edition. In page lxxxv of his Prolegomena, he has categorically alleged five draw-backs that have resulted on account of the principles observed by us in basing our Southern Recension on one manuscript as the main and the others as auxiliary there-to.

Dr. Sukthankar says:—" To begin with, Sastri does not follow the parvan division, nor the adhyāya division, of his basic manuscript, adding and omitting colophons arbitrarily, in order [illegible] an imaginary norr ."

प्रलोभयन्त्यो विविधैरुपायैर्
आजग्मुरङ्गाधिपतेस्समीपम ॥ २६

संस्थाप्य तामाश्रमदर्शने स
सन्तारितां नावमतीव शुभ्राम् ।
तीरादुपादाय तथैव चक्रे
राजाश्रमं नाम वनं विचित्रम् ॥ २७

अन्तःपुरे तं तु निवेश्य राजा
विभण्डकस्यात्मजमेकपुत्रम् ।
ददर्श मेघैस्सहसा प्रवृष्टम्
आपूर्यमाणं च जगज्जलेन ॥ २८

स रोमपादः परिपूर्णकामस्
सुतां ददावृश्यशृङ्गाय शान्ताम् ।
क्रोधप्रतीकारकरं च चक्रे
गोभिश्च मार्गेष्वभिकर्षणं च ॥ २९

[1]विभण्डकस्याव्रजतस्स राजा
पशून् प्रभूतान् पशुपांश्च वीरान् ।
समादिशत् पुत्रगृध्नुर् महर्षिर्
विभण्डकः पर्यपृच्छद्यदा वः ॥ ३०

1. क-ग—अर्धत्रयं नास्ति

स वक्तव्यः प्राञ्जलिभिर्भवद्भिः
 [1]पुत्रस्यैते बहवः कर्षणाश्च ।
किं ते प्रियं क्रियतां किं महर्षे
 दासाश्च सर्वे तव दास्यबद्धाः ॥ ३१

अथोपायात् स मुनिश्चण्डकोपस्
 स्वमाश्रमं फलमूलं प्रगृह्य ।
अन्वेषमाणश्च न तत्र पुत्रं
 ददर्श चुक्रोध भृशं ततस्सः ॥ ३२

ततस्स कोपेन विदार्यमाणः
 [2]करिष्यमाणो नृपतेर्विधानम् ।
जगाम चम्पां प्रतिधक्ष्यमाणस्
 तमङ्गराजं विषयं च तस्य ॥ ३३

स वै श्रान्तः क्षुधितः काश्यपस्तान्
 घोषान् समासादितवान् समृद्धान् ।
गोपैश्च तैर्विधिवत् पूज्यमानो
 राजेव तां रात्रिमुवास तत्र ॥ ३४

---

1. ख—पुत्रस्य ते पशवः कर्षणानि । किं ते प्रियं किं क्रियतां महर्षे वयं स्म सर्वे तव वाचि बद्धाः ॥ ; घ—पुत्रश्च ते पशवः कर्षणं च
2. क—तच्छङ्कमानो ; ख-ग—तं शङ्कमानोऽङ्गपतेर्विधानम् ; घ—आशङ्कमानो

सम्प्राप्य सत्कारमतीव हृष्टः
[1]प्रोवाच कस्य प्रथितास्थ सौम्याः ।
ऊचुस्ततस्तेऽभ्युपगम्य सर्वे
धनं तवेदं विहितं सुतस्य ॥ ३५

एवं स देशेष्वतिपूज्यमानस्
तांश्चैव शृण्वन् मधुरान् प्रलापान् ।
प्रशान्तभूयिष्ठरजाः प्रहृष्टस्
समाससादाङ्गपतिं पुरस्थम् ॥ ३६

स पूजितस्तेन नरर्षभेण
[2]ददर्श पुत्रं त्रिदिवे यथेन्द्रम् ।
शान्तां स्नुषां तां च ददर्श तत्र
सौदामनीमुच्चरन्तीं यथैव ॥ ३७

[3]ग्रामांश्च घोषांश्च सुतं च दृष्ट्वा
शान्तां च शान्तः परमोऽस्य कोपः ।
चकार तस्मै च परं प्रसादं
विभण्डको भूपतये नरेन्द्र ॥ ३८

स तत्र निक्षिप्य सुतं महर्षिर्
उवाच सूर्याग्निसमप्रभावः ।

1. घ—षड्पादाः न सन्ति 2. घ—पादोऽयं नास्ति
3. घ—ददर्श पुत्रं दिवि देवं यथैव [एकः पादोऽधिकः]

विभण्डकः—

जाते च पुत्रे वनमेवाव्रजेथा
राज्ञः प्रियाण्यस्य सर्वाणि कृत्वा ॥ ३९

लोमशः—

स तद्वचः कृतवान् ऋश्यशृङ्गो
ययौ च यत्रास्य पिता बभूव ।
शान्ता चैनं पर्यचरद्यथावत्
खे रोहिणी सोममिवानुरक्ता ॥ ४०

अरुन्धती चापि यथा वसिष्ठं
लोपामुद्रा चापि यथा ह्यगस्त्यम् ।
नलस्य वा दमयन्ती यथाऽभूद्
यथा शची वज्रधरस्य चैव ॥ ४१

नालायनी चेन्द्रसेना बभूव
वश्या नित्यं मुद्गलस्याजमीढ ।
[1]यथा सीता दाशरथेर्महात्मनो
यथा तव द्रौपदी पाण्डुपुत्र ॥ ४२

तथा शान्ता ऋश्यशृङ्गं वनस्थं
प्रीत्या युक्ता पर्यचरन्नरेन्द्र ॥ ४२॥

तस्याश्रमः पुण्य एषोऽवभाति
महाह्रदं शोभयन् पुण्यकीर्ते ।

1. घ—नास्तीदमर्धम्

अत्र स्नातः कृतकृत्यो विशुद्धस्
तीर्थान्यन्यान्यनुयाहि स्म राजन् ॥　　४३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
[ अस्मिन्नध्याये४३॥ श्लोकाः ]

---

## ॥ नवतितमोऽध्यायः ॥

युधिष्ठिरेण गङ्गासागरसङ्गमादितीर्थगमनम् ॥ १ ॥ लोमशेन युधिष्ठिरं प्रति तत्तीर्थाश्रममहिमानुवर्णनम् ॥ २ ॥

---

वैशम्पायनः—

ततः प्रयातः कौशिक्यां पाण्डवो जनमेजय ।
आनुपूर्व्येण सर्वाणि जगामायतनान्युत ॥　　१

स सागरं समासाद्य गङ्गायास्सङ्गमे नृप ।
नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम् ॥　　२

ततस्समुद्रतीरेण जगाम वसुधाधिपः ।
भ्रातृभिस्सहितो वीरः कलिङ्गान् प्रति भारत ॥　　३

लोमशः—

एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी ।
यत्रायजत धर्मो वै देवाञ् शरणमेत्य वै ॥　　४

तत्वर्षिभिस्समायुक्तं यज्ञियं गिरिशोभितम् ।
उत्तरं तीरमेतद्धि सततं द्विजसेवितम् ॥ ५

समेन देवयानेन पथा स्वर्गमुपेयुषः ।
अत्र चैवर्षयो नित्यं पुरा क्रतुभिरीजिरे ॥ ६

अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान् मखे ।
रौद्रं पशुं मानवेन्द्र भागोऽयमिति चाब्रवीत् ॥ ७

हृते पशौ ततो देवास् तमूचुर्भरतर्षभ ।

देवाः—

मा परस्वमभिद्रोग्धा माधर्म्यान्नीनशः पथः ॥ ८

लोमशः—

ततः कल्याणरूपाभिर् वाग्भिस्ते रुद्रमस्तुवन् ।
इष्ट्या चैनं तर्पयित्वा मानयाञ्चक्रिरे तदा ॥ ९

ततः पशुं समुत्सृज्य देवयानेन जग्मिवान् ।
अत्रानुवंशो रुद्रस्य तं निबोध युधिष्ठिर ॥ १०

अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमम् ।
देवास्सङ्कल्पयामासुर् भयाद् रुद्रस्य शाश्वतम् ॥ ११

इमां गाथामत्र गायन्नपः स्पृशति यो नरः ।
देवयानस्तस्य पन्थाश् चक्षुश्चैव प्रकाशते ॥ १२

वैशम्पायनः—

ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तदा ।
अवतीर्य महाभागास् तर्पयाञ्चक्रिरे पितॄन् ॥ १३

युधिष्ठिरः—

उपस्पृश्यैव भगवन्नस्यां नद्यां तपोधन ।
मानुषादस्मि विषयाद् अपेतः पश्य लोमश ॥ १४

सर्वाँल्लोकान् प्रपश्यामि प्रसादात् तव सुव्रत ।
वैखानसानां जपताम् एष शब्दो महात्मनाम् ॥ १५

लोमशः—

त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर ।
यत्र ध्वनिं शृणोष्येनं तूष्णीमास्स्व विशां पते ॥ १६

एतत् स्वयम्भुवो राजन् वनं दिव्यं प्रकाशते ।
यत्रायजत धर्मात्मा विश्वकर्मा प्रतापवान् ॥ १७

यस्मिन् यज्ञे हि भूर्दत्ता काश्यपाय महात्मने ।
सपर्वतवनोद्देशा दक्षिणा वै स्वयंभुवा ॥ १८

अवासीदच्च कौन्तेय दत्तमात्रा मही तदा ।
उवाच चापि कुपिता लोकेश्वरमिमं प्रभुम् ॥ १९

मही—

न मां मर्त्याय भगवन् कस्मैचिद्दातुमर्हसि ।
प्रदानं मोघमेतत् ते यास्याम्येषा रसातलम् ॥ २०

लोमशः—

विषीदन्तीं तु तां दृष्ट्वा काश्यपो भगवानृषिः ।
प्रसादयांबभूवाथ ततो भूमिं विशां पते ॥ २१

ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव ।

पुनरुत्सृष्टसलिला वेदिर्भूत्वा स्थिता बभौ ॥ २२
सैषा प्रकाशते राजन् वेदीसंस्थानलक्षणा ।
आरोहात्र महाराज वीर्यवांस्त्वं भविष्यसि ॥ २३

अहं च ते स्वस्त्ययनं प्रयोक्ष्ये
यथा त्वमेनामधिरोक्ष्यसेऽद्य ।
स्पृष्टा हि मर्त्येन ततस्समुद्रम्
एषा वेदिः प्रविशत्याजमीढ ॥ २४
अग्निर्मित्रो योनिरापोऽथ देव्यो
विष्णो रेतश्चास्य भूमिश्च नाभिः ।
एवं ब्रुवन् पाण्डव सत्यवाक्यं
[1]वेदीमिमां त्वं तरसाऽधिरोह ॥ २५

वैशम्पायनः—

ततः कृतस्वस्त्ययनो महात्मा
[2]युधिष्ठिरस्सागरगामगच्छत् ।
कृत्वा तु तच्छासनमस्य सर्वं
महेन्द्रमासाद्य निशामुवास ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[अस्मिन्नध्याये २६ श्लोकाः]

---

1. ख—अयं पादो नास्ति 2. ख—अयं पादो नास्ति

## ॥ एकनवतितमोऽध्यायः ॥

अकृतव्रणेन मुनिना युधिष्ठिरं प्रति परशुरामचरित्रकीर्तनम् ॥ १ ॥ ऋचीकेन भृगुसुतेन दिव्याश्वसहस्रशुल्कदानेन गाधिकन्यापरिणयनम् ॥२॥ गाधिसुतया सत्यवत्या भृगुप्रसादाज्जमदग्निनामकतनयोत्पादनम् ॥३॥

वैशम्पायनः—

[1]उषित्वा रजनीमेकां तत्र तां पृथिवीपतिः ।
तापसानां परं चक्रे सत्कारं भ्रातृभिस्सह ॥ १

लोमशश्चात्र तान् सर्वान् आचख्यौ तत्र तापसान् ।
भृगूनङ्गिरसश्चैव वासिष्ठान काश्यपांस्तथा ॥ २

तान् समेत्य स राजर्षिर् अभिवाद्य कृताञ्जलिः ।
रामस्यानुचरं वीरम अपृच्छदकृतव्रणम् ॥ ३

युधिष्ठिरः—

कदा नु रामो भगवांस् तापसो दर्शयिष्यति ।
तमहं तपसा युक्तं द्रष्टुमिच्छामि भार्गवम् ॥ ४

अकृतव्रणः—

आयानेवासि विदितो रामस्य विदितात्मनः ।
प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ॥ ५

चतुर्दशीमष्टमीं च रामं पश्यन्ति तापसाः ।
अस्यां रात्र्यां व्यतीतायां भवित्री श्वश्चतुर्दशी ॥ ६

1. क-ख-ग-घ—स †तत्रैवमुषित्वैकां रजनीं †घ—तत्र ता

युधिष्ठिरः—

भवाननुगतो रामं जामदग्न्यं महाबलम् ।
प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ॥ ७

स भवान् कथयत्वद्य यथा रामेण निर्जिताः ।
आहवे क्षत्रियास्सर्वे कथं केन च हेतुना ॥ ८

अकृतव्रणः—

कन्याकुब्जे महानासीत् पार्थिवस्सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम सः ॥ ९
वने तु तस्य वसतः कन्या जज्ञेऽप्सरोपमा ।
ऋचीको भार्गवस्तां वै वरयामास भारत ॥ १०
तमुवाच ततो राजा ब्राह्मणं संशितव्रतम् ॥ १०॥

गाधिः

[1]उचितं नः कुले किञ्चित् पूर्वैर्यत् सम्परिवर्तनम् ॥ ११
एकतश्श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनां शुल्कम् इति विद्धि द्विजोत्तम ॥ १२
[2]मम चापि भवान् वाच्यो दीयतामिति भार्गव ।
देया मे दुहिता चैव त्वद्विधाय महात्मने ॥ १३

ऋचीकः—

[3]एकतश्श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।

---

1. ख—इदमर्धं नास्ति
2. क-ग-न जातु भगवान् ; ख-इदमर्धं नास्ति ; ग-घ-न चापि भगवान्
3. घ—अर्धत्रयं नास्ति

दास्याम्यश्वसहस्रं ते मम भार्या सुताऽस्तु ते ॥　१४

अकृतव्रणः—

स तथेति प्रतिज्ञाय राजन् वरुणमब्रवीत् ॥　१४॥

ऋचीकः—

एकतश्श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनामेकं शुल्कार्थं प्रतिदीयताम् ॥　१५॥

अकृतव्रणः—

तस्मै प्रादात् सहस्रं वै वाजिनां वरुणस्तदा ।
तदश्वतीर्थं विख्यातम् उत्थिता यत्र ते हयाः ॥　१६॥

गङ्गायां कान्यकुब्जे वै ददौ सत्यवतीं तदा ।
ततो गाधिस्सुतां तस्मै [1]कन्यां चाप्सरोपमाम् ॥　१७॥

लब्धं हयसहस्रं तत् तां च दृष्ट्वा दिवौकसः ।
[2]विस्मयं परमं जग्मुस् तमेव दिवि संस्तुवन् ॥　१८॥

धर्मेण लब्ध्वा तां भार्याम् ऋचीको द्विजसत्तमः ।
यथाकामं यथाजोषं तया रेमे सुमध्यया ॥　१९॥

तं विवाहे कृते राजन् सभार्यमवलोकितुम् ।
आजगाम भृगुश्रेष्ठः पुत्रं दृष्ट्वा ननन्द च ॥　२०॥

---

1. अ—ततः कन्या नृपोत्तमम्; ख—विस्मिताश्चाभवन् सुराः
   घ—ऋचीकाय महात्मने
2. अ-घ—नास्तीदमर्धम्

भार्यापती समासीनं भृगुं सुरगणार्चितम् ।
अर्चित्वा पर्युपासीनौ प्राञ्जली तस्थतुस्तदा ॥ २१॥
ततस्स्नुषां स भगवान् प्रहृष्टो भृगुरब्रवीत् ॥ २२

भृगुः—

वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् ॥ २२॥

अकृतव्रणः—

सा वै प्रसादयामास तं गुरुं पुत्रकारणात् ।
आत्मनश्चैव मातुश्च प्रसादं च चकार सः ॥ २३॥

भृगुः—

ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै ।
आलिङ्गेतां पृथग्वृक्षौ साऽश्वत्थं त्वमुदुम्बरम् ॥ २४॥

अकृतव्रणः—

आलिङ्गने तु राजन् वै चक्रतुस्ते विपर्ययम् ।
[1]कदाचिद् भृगुरागच्छत् तत्र वेद विपर्ययम् ॥ २५॥
अथोवाच महातेजा भृगुस्सत्यवतीं स्नुषाम् ॥ २६

भृगुः—

ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति ॥ २६॥
क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् ।
[2]भविष्यति महावीर्यस् साधूनां मार्गमाश्रितः ॥ २७॥

---

1. अ—नास्तीदमर्धम् 2 ख—इदमर्धं नास्ति

अकृतव्रणः—

प्रसादयामास च तं श्वशुरं सा पुनः पुनः ॥ २८

न मे पुत्रो भवेदेवं कामं पौत्रो भवेदिति ॥ २८॥

एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता ।
कालं प्रतीक्षती गर्भं धारयामास यत्नतः ॥ २९॥

जमदग्निं ततः पुत्रं जज्ञे वै काल आगते ।
तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् ॥ ३०॥

स वर्धमानस्तेजस्वी वेदस्याध्ययनेन च ।
बहूनृषीन् महातेजाः पाण्डवेयात्यवर्तत ॥ ३१॥

तं तु कृत्स्नो धनुर्वेदः प्रत्यभाद् भरतर्षभ ।
चतुर्विधानि [1]चास्त्राणि भास्करोपमवर्चसम् ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

---

1. क-ख-ग-घ—शास्त्राणि घ—शास्त्राणि भार्गवोऽधीतवांस्तदा

## ॥ द्विनवतितमोऽध्यायः ॥

रामेण रेणुकायां मानसिकव्यभिचारदर्शिनः पितुर्जमदग्नेर्नियोगात् कठारेण तस्याः कण्ठच्छेदनम् ॥ १ ॥ जमदग्निना पुत्रप्रार्थनया रेणुकायाः पुनरुज्जीवनम् ॥ २ ॥ रामासन्निधाने जमदग्न्याश्रममुपागतेन कार्तवीर्यार्जुनेन तदीयहोमधेनुवत्साहरणपूर्वकं तदाश्रमपीडनम् ॥ ३ ॥ तत आगतेन रामेण कार्तवीर्ये युधि निहते तदीयै रामासंनिधाने जमदग्नेर्वधः ॥ ४ ॥

अकृतव्रणः—

स वेदाध्ययने युक्तो जमदग्निर्महातपाः ।
तपस्तेपे ततो देवान् नियमाद्वशमानयत् ॥ १

स प्रसेनजितं राजन्नधिगम्य नराधिपम् ।
रेणुकां वरयामास स च तस्मै ददौ नृपः ॥ २

रेणुकां त्वथ सम्प्राप्य भार्यां भार्गवनन्दनः ।
आश्रमस्थस्तया सार्धं तपस्तेपेऽनुकूलया ॥ ३

तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः ।
सर्वेषामजघन्यस्तु राम आसीज्जघन्यजः ॥ ४

फलाहारेषु सर्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत् कदाचिन्नियतव्रता ॥ ५

सा तु चित्ररथं नाम मार्तिकावतकं नृपम् ।
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥ ६

क्रीडन्तं सलिले दृष्ट्वा सभार्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥ ७

व्यभिचारात् तु तस्मात् सा क्लिन्नाम्भसि विचेतना ।
[1]अन्तरिक्षान्निपतिता नर्मदायां महाह्रदे ॥ ८

उत्तीर्य चापि सा यत्नाज् जगाम भरतर्षभ ।
प्रविवेशा[2]थ संत्रस्ता तां वै भर्ताऽन्वबुध्यत ॥ ९

स तां दृष्ट्वा च्युतां धैर्याद् ब्राह्म्या लक्ष्म्या विवर्जिताम् ।
धिक्शब्देन महातेजा गर्हयामास वीर्यवान् ॥ १०

ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः ।
आजगाम सुषेणश्च वसुर्विश्वावसुस्तदा ॥ ११

तानानुपूर्व्याद्भगवान् वधे मातुरचोदयत् ।
न च ते जातसम्मोहाः किञ्चिदूचुर्विचेतसः ॥ १२

ततश्शशाप तान् क्रोधात् ते शप्ताश्चेतनां जहुः ।
मृगपक्षिसधर्माणः क्षिप्रमासञ्जडोपमाः ॥ १३

ततो रामोऽभ्यगात् पश्चाद् आश्रमं परवीरहा ।
तमुवाच महामन्युर् जमदग्निर्महातपाः ॥ १४

जमदग्निः—

जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः ॥ १४॥

---

1. घ—नास्तीदमर्धम्   2. ख-घ—ऽऽश्रमं

अकृतव्रणः—

तत आदाय परशुं रामो मातुश्शिरोऽहरत् ॥ १५

ततस्तस्य महाराज जमदग्नेर्महात्मनः ।
कोपोऽभ्यगच्छत् सहसा प्रसन्नश्चाब्रवीदिदम ॥ १६

जमदग्निः—

ममेदं वचनात्तात कृतं ते कर्म दुष्करम ।
वृणीष्व कामान् धर्मज्ञ यावतो वाञ्छसे हृदा ॥ १७

अकृतव्रणः—

स वव्रे मातुरुत्थानम् अस्मृतिं च वधस्य वै ।
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ॥ १८

अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत ।
ददौ च सर्वान् कामांस्ताञ् जमदग्निर्महातपाः ॥ १९

कदाचित् तु तथैवास्य विनिष्क्रामन सुताः प्रभो ॥ १९॥
अथानूपपतिर्वीरः कार्तवीर्योऽभ्यवर्तत ॥ २०

तमाश्रममनुप्राप्तम् ऋषेर्भार्या समार्चयत् ।
स युद्धमदसम्मत्तो नाभ्यनन्दन्नथाऽर्चनम् ॥ २१

प्रमथ्य चाश्रमात् तस्माद्धोमधेनुं तथा बलात् ।
जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ २२

आगताय च रामाय पिताऽऽचष्ट तदा स्वयम् ।

गां च रोरुदतीं दृष्ट्वा कोपो रामं समाविशत् ॥ २३

स मन्युवशमापन्नः कार्तवीर्यमुपाद्रवत् ॥ २३॥

तस्याथ युधि विक्रम्य भार्गवः परवीरहा ।
चिच्छेद निशितैर्भल्लैर् बाहून् परिघसंनिभान् ॥ २४॥

सहस्रसम्मितान् राजन् प्रगृह्य रुचिरं धनुः ॥ २५

अर्जुनस्याथ दायादा रामेण कृतमन्यवः ।
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् ॥ २६

ते तं जघ्नुर्महावीर्यम् अयुध्यन्तं तपस्विनम् ।
असकृद्रामरामेति विक्रोशन्तमनाथवत् ॥ २७

कार्तवीर्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ।
घातयित्वा शरैर्जग्मुर् यथागतमरिंदमाः ॥ २८

अपक्रान्तेषु चैतेषु जमदग्नौ तथागते ।
समित्पाणिरुपागच्छद् आश्रमं भृगुनन्दनः ॥ २९

स दृष्ट्वा पितरं वीरस् तदा मृत्युवशं गतम् ।
अनर्हं तं तथाभूतं विललाप सुदुःखितः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ अस्मिन्नध्याये ३० श्लोकाः ]

---

## ॥ त्रिनवतितमोऽध्यायः ॥

अकृतव्रणेन युधिष्ठिरं प्रति पितृवधामर्षात् लिस्सप्तकृत्वः पृथिव्या निःक्षलियीकरणादिरामचरित्रकथनम् ॥ १ ॥ युधिष्ठिरेण परेद्युश्चतुर्दश्यां सन्निहितपरशुरामपूजनादिपूर्वकं महेन्द्रशैलात् पुनः प्रस्थानम् ॥ २ ॥ ॥

परशुरामः—

ममापराधात् तैः क्षुद्रैर् हतस्त्वं तात बालिशैः ।
कार्तवीर्यस्य दायादैर् वने मृग इवेषुभिः ॥ १

धर्मज्ञस्य कथं तात वर्तमानस्य सत्पथे ।
मृत्युरेवंविधो युक्तस् सर्वभूतेष्वनागसः ॥ २

[1]किं नु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः ।
अयुध्यमानो वृद्धस्सन् हतश्शरशतैश्शितैः ॥ ३

किं नु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च ।
[2]अयुध्यमानं धर्मज्ञम् एकं हत्वाऽनपत्रपाः ॥ ४

अकृतव्रणः—

विलप्यैवं सकरुणं बहु नानाविधं नृप ।
प्रेतकार्याणि सर्वाणि पितुश्चक्रे महातपाः ॥ ५

ददाह पितरं चाग्नौ रामः परपुरञ्जयः ।
प्रतिजज्ञे वधं तेषां सर्वक्षत्रस्य भारत ॥ ६

1. क-ग—नास्ति अर्धद्वयम्   2. ख—इदमर्धं नास्ति

[1]सङ्क्रुद्धोऽतिबलश्शूरश्शस्त्रमादाय वीर्यवान् ।
जघ्निवान् कार्तवीर्यस्य सुतानेको महाबलः ॥ ७

तेषां ये चानुगाः केचित् क्षत्रियाः क्षत्रियर्षभ ।
तांश्च सर्वानवामृद्गाद् रामश्शस्त्रभृतां वरः ॥ ८

त्रिस्सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान ॥ ९

स तेषु तर्पयामास पितॄन् भृगुकुलोद्भवः ।
साक्षाद्ददर्श चर्चीकं स च रामं न्यवारयत् ॥ १०

ततो यज्ञेन महता जामदग्न्यः प्रतापवान् ।
तर्पयामास देवेन्द्रम् ऋत्विग्भ्यश्च महीं ददौ ॥ ११

वेदिं च प्रददौ तस्मै काश्यपाय महात्मने ।
दशव्यामायतां कृत्वा नवोत्सेधां विशां पते ॥ १२

तां काश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा ।
व्यभजंस्ते न ते राजन् प्रख्याताः खण्डवा[2]हनाः ॥ १३

स प्रदाय महीं तस्मै काश्यपाय महातपाः ।
[3]तपस्सु मन आस्थाय महाबलपराक्रमः ॥ १४

अस्मिन् वसति शैलेन्द्रे महेन्द्रेऽमितविक्रमः ॥ १४॥

---

1. घ—संवृतो ब्राह्मणैश्शूरः आर्तशस्त्रोऽन्तकोपमः । [पाठान्तरम्]
2. क-ख—यनाः 3. ख—इदमर्धं नास्ति

एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः ।
पृथिवी चापि विजिता रामेणामिततेजसा ॥ १५॥

वैशम्पायनः—

ततश्चतुर्दशीं रामस् समयेन महामनाः ।
दर्शयामास तान् विप्रान् धर्मराजं च सानुजम् ॥ १६॥

स तमानर्च राजेन्द्र भ्रातृभिस्सहितः प्रभुः ।
स तस्मै परमां पूजां चक्रे नृपतिसत्तमः ॥ १७॥

अर्चयित्वा जामदग्न्यं पूजितस्तेन चाभिभूः ।
महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः ॥ १८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[अस्मिन्नध्याये १८॥ श्लोकाः]

---

## ॥ चतुर्नवतितमोऽध्यायः ॥

युधिष्ठिरेण यात्राक्रमेण प्रभासतीर्थं प्रति गमनम् ॥१॥ तत्र तद्दिदृक्षया कृष्णबलभद्रादीनामागमनम् ॥ २ ॥

---

वैशम्पायनः—

गच्छन् स तीर्थानि महानुभावः
पुण्यानि रम्याणि ददर्श राजा ।

सर्वाणि विप्रैरुपशोभितानि
क्वचित् क्वचिद्भारत सागरस्य ॥ १

स घृत्तवांस्तेषु कृताभिषेकस्
सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां
जगाम पारिक्षित पाण्डुपुत्रः ॥ २

तत्रापि चाप्लुत्य महानुभावस्
सन्तर्पयामास सुरान् पितॄंश्च ।
द्विजातिमुख्येषु धनं विसृज्य
गोदावरीं सागरगामगच्छत् ॥ ३

ततो विपाप्मा द्रविडेषु राजा
समुद्रमासाद्य च लोकपुण्यम् ।
अगस्त्यतीर्थं च पवित्रमाहुर्
नारीतीर्थान् यत्र चैवावगच्छत् ॥ ४

तत्रार्जुनस्याग्र्यधनुर्धरस्य
निशम्य तत् कर्म परैरसह्यम् ।
सम्पूज्यमानः परमर्षिसङ्घैः
परां मुदं [1]तत्र ततोपलेभे ॥ ५

1. क-ख-ग—पाण्डुसुतस्स ; घ—तत्र सदा स लेभे

स तेषु तीर्थेष्वभिषिक्तगात्रः
कृष्णासहायस्सहितोऽनुजैश्च ।
सम्पूजयन् विक्रममर्जुनस्य
रेमे महीपालपतिः पृथिव्याम् ॥ ६

ततस्सहस्राणि गवां प्रदाय
तीर्थेषु तेष्वम्बुधरोत्तमस्य ।
हृष्टस्सह भ्रातृभिरर्जुनस्य
सङ्कीर्तयामास गवां प्रदानम् ॥ ७

स तानि तीर्थानि च सागरस्य
पुण्यानि चान्यानि बहूनि राजन् ।
क्रमेण गच्छन् परिपूर्णकामश्
शूर्पाकरं पुण्यतमं ददर्श ॥ ८

तत्रोदधेः कञ्चिदतीत्य देशं
ख्यातं पृथिव्यां वनमाससाद ।
तप्तं सुरैर्यत्र तपः पुरस्तात्
[1]पुण्योपेतं पुण्यतमैर्नरेन्द्रैः ॥ ९

स तत्र तामग्र्यधनुर्धरस्य
वेदीं ददर्शायतपीनबाहुः ।

---

1. क-ख-ग-घ—दिष्टं तथा

आर्चीकपुत्रस्य तपस्विसङ्घैस्
समावृतां पुण्यकृदर्चनीयाम् ॥ १०

ततो वसूनां वसुधाधिपस्स
मरुद्गणानां च तथाऽश्विनोश्च ।
वैवस्वतादित्यधनेश्वराणाम्
इन्द्रस्य विष्णोस्सवितुर्विभोश्च ॥ ११

भगस्य चन्द्रस्य दिवाकरस्य
पतेरपां साध्यगणस्य चैव ।
धातुः पितॄणां च तथा महात्मा
रुद्रस्य राजन् सगणस्य चापि ॥ १२

सरस्वत्यास्सिद्धगणस्य चैव
पूषणश्च ये चाप्यमरास्तथाऽन्ये ।
पुण्यानि चाप्यायतनानि तेषां
ददर्श राजा सुमनोहराणि ॥ १३

तेपूपवासान् विबुधानुपोष्य
दत्वा च रत्नानि महानुभावः ।
तीर्थेषु सर्वेषु परिप्लुताङ्गः
पुनस्स शूर्पाकरमाजगाम ॥ १४

स तेन तीरेण च सागरस्य
पुनः प्रयातस्सह सोदरीयैः ।

द्विजैः पृथिव्यां कथितं महद्भिस्
तीर्थं प्रभासं समुपाजगाम ॥ १५
तत्राभिषिक्तः पृथुलोहिताक्षस्
सहानुजैर्देवगणान् पितॄंश्च ।
सन्तर्पयामास तथैव कृष्णा
ते चापि विप्रास्सह लोमशेन ॥ १६
स द्वादशाहं जलवायुभक्षः
कुर्वन् क्षपाहस्सु तथाऽभिषेकम ।
समन्ततोऽग्नीनुपदीपयित्वा
तेपे तपो धर्मभृतां वरिष्ठः ॥ १७
समागतं तत्र तपश्चरन्तं
शुश्राव रामश्च जनार्दनश्च ।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ
युधिष्ठिरं जग्मतुराजमीढम् ॥ १८
ते वृष्णयः पाण्डुसुतान् समीक्ष्य
भूमौ शयानान् मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा
सुदुःखिताश्चक्रुरुरार्तनादान् ॥ १९
ततस्स रामं च जनार्दनं च
कार्ष्णिं च साम्बं च शिनेश्च पौत्रम् ।

अन्यांश्च वृष्णीनुपगम्य पूजां
चक्रे यथाधर्ममदीनसत्त्वः ॥ २०

ते चापि सर्वान् प्रतिपूज्य पार्थांस्
तैस्सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं सम्परिवार्य राज-
न्नुपाविशन् देवगणा यथेन्द्रम् ॥ २१

तेषां स सर्वं चरितं परेषां
वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं
कृष्णे शशंसामरराजपुत्रम् ॥ २२

श्रुत्वा तु ते तस्य वचः प्रतीतास्
तांश्चापि दृष्ट्वा सुकृशानतीव ।
नेत्रोद्भवं सम्मुमुचुर्दशार्हा
दुःखार्तिजं वारि महानुभावाः ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
॥ २३ ॥ तीर्थयात्रापर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

बलभद्रेण वृष्णिपाण्डवसभार्या भीष्मधृतराष्ट्रादिगर्हणपूर्वकं पाण्डवान् प्रति शोचनम् ॥

जनमेजयः—

[1]प्रभासतीर्थं सम्प्राप्य पाण्डवा वृष्णयस्तथा ।
किमकुर्वन् कथाश्चापि कास्तत्रासंस्तपोधन ॥ १

तेऽपि सर्वे महात्मानस् सर्वशास्त्रविशारदाः ।
वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् ॥ २

वैशम्पायनः—

प्रभासतीर्थं सम्प्राप्य पुण्यं तीर्थं महोदधेः ।
वृष्णयः पाण्डवान् वीरान् परिवार्योपतस्थिरे ॥ ३

ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः ।
वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ४

बलभद्रः—

न कृष्ण धर्मश्चरितो भवाय
जन्तोरधर्मश्च पराभवाय ।
युधिष्ठिरो यत्र जटी महात्मा
वनाश्रयः क्लिश्यति चीरवासाः ॥ ५

1. घ—अर्धचतुष्टयं नास्ति

दुर्योधनश्चापि महीं प्रशास्ति
न चास्य भूमिर्विवरं ददाति ।
धर्मादधर्मश्चरितो गरीयान्
इतीव मन्येत नरोऽल्पबुद्धिः ॥ ६

दुर्योधने चापि विवर्धमाने
युधिष्ठिरे [1]वाऽसुख आत्तसारे ।
[2]हृतस्वराज्यायतनार्थभार्ये
दुर्योधनेनाल्पधने च पार्थे ॥ ७

किं त्वद्य कर्तव्यमिह प्रजाभिश्
शङ्का मिथस्सञ्जनिता नराणाम् ॥ ७॥

अयं हि धर्मप्रभवो नरेन्द्रो
धर्मे रतस्सत्यधृतिः प्रदाता ।
चलेत राज्यादिति संशयो मे
धर्मादपेतश्च कथं विवर्धेत् ॥ ८॥

कथं च भीष्मश्च कृपश्च विप्रो
द्रोणश्च राजा च कुलस्य वृद्धः ।
प्रव्राज्य पार्थान् सुखमाप्नुवन्ति
धिक्पापबुद्धीन् भरतप्रधानान ॥ ९॥

---

1. क-ग—चासुख आत्तराज्ये; ख—त्यक्तसुखे महात्मनि; घ—चासुखमात्तराज्ये 2. क-ख-ग-घ—नास्तीदमर्धम्

किं नाम वक्ष्यत्यवनिप्रधानान्
पितॄन् समागम्य परत्र पापः ।
पुत्रेषु सम्यक्चरितं मयेति
पुत्रानपापानवरोप्य राज्यात् ॥ १०॥

नासौ धिया सम्प्रति पश्यति स्म
किं नाम कृत्वाऽहमचक्षुरेवम् ।
जातः पृथिव्यामिति पार्थिवेषु
प्रव्राज्य कौन्तेयमथापि राज्यात् ॥ ११॥

नूनं समृद्धान् पितृलोकभूमौ
चामीकराभान् क्षितिजान् प्रफुल्लान् ।
विचित्रवीर्यस्य सुतस्सपुत्रस्
सम्पश्यतीदं हि कृतं नृशंसम् ॥ १२॥

[1]व्यूढोत्तरांसान् पृथुलोहिताक्षान्
इमान् स्म पृच्छन् स शृणोति नूनम् ।
प्रस्थापयत्यत्र वनं सशङ्को
युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ १३॥

योऽयं परेषां पृतनां समृद्धां
निरायुधो दीर्घभुजो निहन्यात् ।

1. ख—इदमर्धं नास्ति

श्रुत्वैव शब्दं च वृकोदरस्य
मुञ्चन्ति सैन्यानि शकृत् समूत्रम ॥ १४॥

स क्षुत्पिपासार्तिकृशस्तरस्वी
समेत्य नानायुधबाणपाणिः ।
वने स्मरन् वासमिमं सुघोरं
शेषं न कुर्यादिति निश्चितं मे ॥ १५॥

न ह्यस्य वीर्ये च बले च कश्चित्
समः पृथिव्यां भविता नरेषु ।
स शीतवातातपकर्शिताङ्गो
न शेषमाजावसुहृत्सु कुर्यात् ॥ १६॥

प्राच्यां नृपास्त्वेकरथेन जित्वा
वृकोदरस्सानुचरान् रणेषु ।
स्वस्त्यागमद्योऽतिरथस्तरस्वी
सोऽयं वने क्लिश्यति चीरवासाः ॥ १७॥

यो दन्त[1]वक्रेष्वजयत् समेतान्
समागतान् दाक्षिणात्यान् महीपान् ।
तं पश्यतेमं सहदेवमद्य
तरस्विनं तापसरूपवेषम् ॥ १८॥

---

1. ख-ग—कूटेत्वजय ; घ—वक्लेऽप्यजयत

य: पार्थिवानेकरथेन वीरो
दिशं प्रतीचीं प्रतियुद्धशौण्डः ।
जिग्ये रणे तं नकुलं वनेऽस्मिन्
सम्पश्यतैनं मलदिग्धगात्रम् ॥ १९॥

सत्रे समृद्धेऽतिरथस्य राज्ञो
वेदीतलादुत्पतिता सुता या ।
सेयं वने वासमिमं सुदुःखं
कथं सहत्यद्य सती सुखार्हा ॥ २०॥

त्रिवर्गमुख्यस्य समीरणस्य
देवेश्वरस्यापि तथाऽश्विनोश्च ।
तेषां सुराणां तनयाः कथं नु
वने चरन्त्यल्पसुखास्सुखार्हाः ॥ २१॥

जिते हि धर्मस्य सुते सभार्ये
सभ्रातृके सानुचरे निरस्ते ।
दुर्योधने चापि विवर्धमाने
कथं न सीदत्यवनिस्सशैला ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[अस्मिन्नध्याये २२॥ श्लोकाः]

## ।। षण्णवतितमोऽध्यायः ।।

सात्यकिना पाण्डवानपेक्षणेन स्वैरेव धार्तराष्ट्रादिहननपूर्वकं पाण्डवानामावनवाससमापनमभिमन्यो राज्येऽभिषेचनोक्तिः ॥ १ ॥ कृष्णेन सात्यकिं प्रति पाण्डवानां परबाहुबलैकानुपजीवित्वादिगुणकथनपूर्वकं तन्निषेधनम् ॥ २ ॥

सात्यकिः—

न राम कालः परिदेवनाय
यदुत्तरं त्वत्र तदेव सर्वे ।
समाचरामो ह्यनतीतकालं
युधिष्ठिरो यद्यपि नाह किञ्चित् ॥ १

ये नाथवन्तोऽद्य भवन्ति लोके
ते नात्मना कर्म समारभन्ते ।
तेषां तु कार्येषु भवन्ति नाथाश्
शैब्यादयो राम यथा ययातेः ॥ २

तेषां तथा राम समाचरन्तः
कार्याणि नाथास्स्वमतेन लोके ।
ते नाथवन्तः पुरुषप्रवीरा
नानाथवत् कृच्छ्रमवाप्नुवन्ति ॥ ३

कस्मादयं रामजनार्दनौ च
प्रद्युम्नसाम्बौ च मया समेतौ ।

वसन्त्यरण्ये सह सोदरीयैस्
त्रैलोक्यनाथानभिगम्य नाथान् ॥ ४

निर्यातु सा त्वद्य दशार्हसेना
प्रभूतनानायुधचित्रवर्मा ।
यमक्षयं गच्छतु धार्तराष्ट्रस्
सबान्धवो वृष्णिबलाभिभूतः ॥ ५

त्वं ह्येव कोपात् पृथिवीमपीमां
संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा ।
स धार्तराष्ट्रं जहि सानुबन्धं
वृत्रं यथा देवपतिर्नरेन्द्र ॥ ६

भ्राता च मे यश्च सखा गुरुश्च
जनार्दनस्यात्मसमश्च पार्थः ।
तदर्थमेको हि य उद्यमन् वै
करोति कर्णोऽस्त्रमवारणीयम् ॥ ७

तस्यास्त्रवर्षाण्यहमुत्तमास्त्रैर्
विहत्य सर्वाणि रणेऽभिभूय ।
कायाच्छिरस्सर्पविषाग्निकल्पैश्
शरोत्तमैरुन्मथितास्मि राम ॥ ८

खड्गेन चाहं निशितेन सङ्ख्ये
कायाच्छिरस्तस्य बलात् प्रमथ्य । ८॥

ततोऽस्य सर्वाननुगान् हनिष्ये
दुर्योधनं चापि कुरूंश्च सर्वान् ॥ ९

आत्तायुधं मा युधि रौहिणेय
पश्यन्तु शूरा युधि जातहर्षाः ।
निघ्नन्तमेकं कुरुयोधमुख्यान्
अग्निं महाकक्षमिवानलेन ॥ १०

प्रद्युम्नमुक्तान्निशितान्न शक्तास्
सोढुं कृपद्रोणविकर्णकर्णाः ।
जानासि वीर्यं हि तवात्मजस्य
कार्ष्णिर्भवत्येष यथा रणस्थः ॥ ११

साम्बस्ससूतं सरथं भुजाभ्यां
दुःशासनं शास्तु बलात् प्रमथ्य ।
न विद्यते जाम्बवतीसुतस्य
रणेऽविषह्यं हि रणोत्कटस्य ॥ १२

एतेन बालेन हि शम्बरस्य
दैत्यस्य सैन्यं सहसा प्रणुन्नम् ।
[1]हतस्स पापो युधि ते बलेन
युद्धेऽद्वितीयोऽतुलबालवीर्यः ॥ १३

1. क-ख—नास्तीदमर्धम्

वृत्तोरुरत्यायतपीनबाहुर्
एतेन सङ्ख्ये निहतोऽश्वचक्रः ।
को नाम साम्बस्य रणे मनुष्यो
गत्वाऽऽभिमुख्यं सहसा प्रमुच्येत् ॥ १४

[1-2]यथैव यत्तस्य पुरन्दरस्य
हरिध्वजं स्यन्दनमास्थितस्य ।
यथा प्रविश्यान्तरमन्तकस्य
काले मनुष्यो न हि विक्रमेत ॥ १५

तथा प्रविश्यान्तरमस्य सङ्ख्ये
को नाम जीवन् पुनराव्रजेत ॥ १५॥

द्रोणं च भीष्मं च महारथौ तौ
द्रौणिं च सोमं सह सोमदत्तम् ।
सर्वाणि सैन्यानि च वासुदेवः
प्रधक्ष्यते सायकवह्निजालैः ॥ १६॥

किं नाम लोकेष्वविषह्यमस्ति
कृष्णस्य सर्वेषु च दैवतेषु ।
आत्तायुधस्योत्तमबाणपाणेश्
चक्रायुधस्याप्रतिमस्य युद्धे ॥ १७॥

1. व—अर्धद्वयं नास्ति

ततोऽनिरुद्धोऽप्यसिचर्मपाणिर्
महीमिमां धार्तराष्ट्रैर्विसंज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु
कीर्णाङ्कुशैर्वेदिमिवाध्वरेषु ॥ १८॥

[1-2]गदोल्मुकाशावहभानुशीथाः
शूरश्च सङ्ख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ
कुलोचितं विप्रथयन्तु लोके[3] ॥ १९॥

[4]सवृष्णिभोजान्धकयोधमुख्या
समागता क्षत्रियशूरसेना ।
हत्वा रणे तान् धृतराष्ट्रपुत्रान्
लोके यशः स्फीतमिवातनोतु ॥ २०॥

ततोऽभिमन्युः पृथिवीं प्रशास्तु
यावद्व्रतं धर्मभृतां वरिष्ठः ।
युधिष्ठिरः पालयते महात्मा
द्यूते यथोक्तं कुरुसत्तमेन ॥ २१॥

---

1. क-ख-ग—हत्वा रणे तान् धृतराष्ट्रपुत्रान्
लोके यशः स्फीतमुपाकरोतु । [इदमर्धमधिकम्]
2. ख-ग—अयं पादः नास्ति
3. ख—प्रशास्तु गां धर्मभृतां वरिष्ठः ; ग—गदोल्ककाशावहभानुशीथाः [अधिकः पाठः]
4. ख—अर्धद्वयं नास्ति

अस्मत्प्रमुक्तैर्विशिखैर्जितारिम्
ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्राम्
एतद्धि नः कृत्यतमं यशस्यम् ॥ २२॥

श्रीभगवान्—
असंशयं माधव सत्यमेतद्
गृह्णीम ते वाक्यमदीनसत्त्व ।
द्वाभ्यां भुजाभ्यामजितां तु भूमिं
नैच्छत् कुरूणामृषभः कथञ्चित् ॥ २३॥

न ह्येष कामान्न भयान्न लोभाद्
युधिष्ठिरो जातु जह्यात् स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ च
तथैव कृष्णा द्रुपदात्मजेयम् ॥ २४॥

[1]उभौ हि युद्धेऽप्रतिमौ पृथिव्यां
वृकोदरश्चैव धनञ्जयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशास्ति
माद्रीसुताभ्यां च पुरस्कृतोऽसौ ॥ २५॥

यदा तु पाञ्चालपतिर्महात्मा
सकेकयश्चेदिपतिर्वयं च ।

1. ख—अर्धद्वयं नास्ति

योत्स्याम विक्रम्य परांस्तदा वै
सुयोधनस्त्यक्ष्यति जीवलोकम् ॥ २६॥

युधिष्ठिरः—

न तच्चित्रं माधव यद्ब्रवीषि
सत्यं तु मे रक्षितव्यं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः
कृष्णं च वेदाहमथो यथावत् ॥ २७॥

यदैव कालं पुरुषप्रवीरो
वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर
सुयोधनं जेष्यसि केशवश्च ॥ २८॥

प्रतिप्रयान्त्वद्य दशार्हवीरा
दृष्टोऽस्मि नाथैर्नर[1]देवताद्यैः ।
धर्मेऽ[2]प्रमादं कुरुताप्रमेया
द्रष्टास्मि भूयस्सुखिनस्समेतान् ॥ २९॥

वैशम्पायनः—

तेऽन्योन्यमामन्त्र्य तथाऽभिवाद्य
वृद्धान् परिष्वज्य शिशूंश्च सर्वान् ।

---

1. क-ख-ग—लोकनाथैः ; घ—देवनाथैः
2. ख-ग-घ—प्रसादं ; ग—धर्मे प्रसादं कुरुताप्रमेय

यदुप्रवीरास्स्वगृहाणि जग्मू
राजाऽपि तीर्थान्यनुसञ्चचार ॥ ३०॥

विसृज्य कृष्णं त्वथ धर्मराजो
विदर्भराजोपचितां सुतीर्थाम् ।
[1]जगाम पुण्यां सरितं पयोष्णीं
सभ्रातृबन्धुस्सह लोमशेन ॥ ३१॥

सुतेन सोमेन विमिश्रितोदां
पयः पयोष्णीं प्रति सोऽध्युवास ।
[2]द्विजातिमुख्यैर्मुदितैर्महात्मा
संस्तूयमानस्स्तुतिभिः पुष्कलाभिः ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[अस्मिन्नध्याये ३२॥ श्लोकाः]

## ॥ सप्तनवतितमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति पयोष्णीतटे गयकृतयागवर्णनम् ॥ १ ॥ तथा च्यवनेन शर्यातियाजनादिकथनम् ॥ २ ॥ युधिष्ठिरेण लोमशं प्रति सविस्तरं च्यवनचरित्रकीर्तनप्रार्थना ॥ ३ ॥

लोमशः—

गयेन यजमानेन सोमेनेह पुरन्दरः ।
तर्पितश्श्रूयते राजन् स तृप्तो मुदमभ्यगात् ॥ १

1. घ—नास्तीदमर्धम् 2. घ—नास्तीदमर्धम्

इह देवैस्सहेन्द्रैस्तु प्रजापतिभिरेव च ।
इष्टं बहुविधैर्यज्ञैर् महद्भिर्भूरिदक्षिणैः ॥ २

आधूर्तरजसश्चेह राजा वज्रधरं प्रभुः ।
तर्पयामास सोमेन हयमेधेषु सप्तसु ॥ ३

तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्मयम् ।
[1]वानस्पत्यं च भौमं च यद्द्रव्यं नियतं मखे ॥ ४

तेष्वेव चास्य यज्ञेषु प्रयोगास्सप्त विश्रुताः ।
[2]सप्तैकैकस्य यज्ञस्य चषालाश्च प्रतिष्ठिताः ॥ ५

तस्य स्म यूपान् यज्ञेषु भ्राजमानान् हिरण्मयान् ।
स्वयमुत्थापयामासुर् देवास्सेन्द्रा युधिष्ठिर ॥ ६

तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ।
अमाद्यदिन्द्रस्सोमेन दक्षिणाभिर्द्विजातयः ॥ ७

सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा असङ्ख्येयास्स्म केनचित् ॥ ८

तथैव तदसङ्ख्येयं धनं यत् प्रददौ गयः ।
सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ॥ ९

भवेत् सङ्ख्येयमेतद्वै यदेतत् परिकीर्तितम् ।
न सा शक्या तु सङ्ख्यातुं दक्षिणा दक्षिणावतः ॥ १०

---

1. ख—इदमर्धं नास्ति    2. ख—इदमर्धं नास्ति

हिरण्मयीभिर्गोभिश्च स यज्ञेषु विशां पते ।
ब्राह्मणांस्तर्पयामास नानादिग्भ्यस्समागतान् ॥ ११

अल्पावशेषा पृथिवी चैत्यैरासीत् समाचिता ।
गयस्य यजमानस्य तत्रतत्र विशां पते ॥ १२

स लोकान् प्राप्तवानैन्द्रान् कर्मणा तेन भारत ।
सलोकतां तस्य गच्छेत् पयोष्ण्यां य उपस्पृशेत् ॥ १३

तस्मात्त्वमत्र राजेन्द्र भ्रातृभिस्सहितोऽच्युत ।
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि ॥ १४

वैशम्पायनः—

स पयोष्ण्यां नरश्रेष्ठस् स्नात्वा वै भ्रातृभिस्सह ।
वैडूर्यपर्वतं चैव नर्मदां च महानदीम् ॥ १५

उद्दिश्य पाण्डवश्रेष्ठस् स प्रतस्थे महीपतिः ।
[1]समानवेषैस्तेजस्वी भ्रातृभिस्सहितोऽनघः ॥ १६

ततोऽस्य सर्वाण्याचख्यौ लोमशो भगवानृषिः ।
तीर्थानि रमणीयानि तत्रतत्र विशाम्पते ॥ १७

यथायोगं यथाप्रीति प्रययौ भ्रातृभिस्सह ॥ १७॥
सन्ददानोऽसकृद्वित्तं ब्राह्मणेभ्यस्सहस्रशः ।

लोमशः—

देवानामेति कौन्तेय तथा राज्ञां सलोकताम् ॥ १८॥

---

1. क-ख-ग—समाजगाम

वैडूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च ॥ १९

सन्धिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च ।
एनमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते ॥ २०

एष शर्यातियज्ञस्य देशस्तात प्रकाशते ।
साक्षाद्यत्रापिबत् सोमम् अश्विभ्यां सह वासवः ॥ २१

चुकोप भार्गवश्चापि महेन्द्राय महातपाः ।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः ॥ २२

सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् ।
नासत्यौ च महाभाग कृतवान् सोमपीथिनौ ॥ २३

युधिष्ठिरः—

कथं विष्टम्भितस्तेन भगवान् पाकशासनः ।
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ २४

नासत्यौ च कथं ब्रह्मन् कृतवान् सोमपीथिनौ ।
एतत् सर्वं यथावृत्तम् आख्यातु भगवान् मम ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[अस्मिन्नध्याये २५ श्लोकाः]

---

## ॥ अष्टनवतितमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति सुकन्योपाख्यानकथनम ॥ १ ॥ कदाचन शर्य्यातिना नृपेण सैन्यादिभिस्सह च्यवनाश्रमाभिगमनम् ॥ २ ॥ तत्र शर्य्यातिकन्यया सुकन्यया चिरतरतपश्चर्यानिरतस्य च्यवनस्य शरीरं पर्यावृत्य विवर्धमानमहावल्मीकावलोकनम् ॥ ३ ॥ तया कुतूहलाद्वल्मीकोपरि। दृश्यमानच्यवननयनयुगलस्याज्ञानात् कण्टकेन विभेदनम् ॥४॥ ततः क्रुद्धस्य च्यवनस्य प्रसादनाय शर्य्यातिना भार्यात्वाय तस्मै सुकन्यायाः प्रदानम् ॥ ५ ॥

लोमशः—

भृगोर्महर्षेः पुत्रोऽभूच् च्यवनो नाम भार्गवः ।
समीपे सरसस्सोऽस्य तपस्तेपे महाद्युतिः ॥ १

स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव ।
अतिष्ठत् स बहून् कालान् एकदेशे विशां पते । २

स वल्मीकोऽभवद्दषिर् लताभिश्च सुसंवृतः ।
कालेन महता राजन् समाकीर्णः पिपीलिकैः ॥ ३

तथा स संवृतो धीमान् मृत्पिण्ड इव सर्वशः ।
[1]तप्यते स्म तपो राजन् वल्मीकेन समावृतः ॥ ४

अथ दीर्घस्य कालस्य शर्य्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥ ५

1. घ—तप्यति

तस्य स्त्रीणां सहस्राणि चत्वार्यासन् परिग्रहः ।
एकैव च सुता शुभ्रा सुकन्या नाम भारत ॥ ६

सा सखीभिः परिवृता सर्वाभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ७

सा वै वसुमतीं तत्र [1]पश्यमाना मनोरमाम् ।
वनस्पतीन् प्रचिन्वन्ती विजहार सखीवृता ॥ ८

रूपेण वयसा चैव [2]मदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ९

तां सखीरहितामेकाम् एकवस्त्रामलङ्कृताम् ।
ददर्श भार्गवो धीमान् [3]स्फुरन्तीमिव विद्युतम् ॥ १०

तां पश्यमानो विजने स रेमे परमद्युतिः ।
[4]कामोत्कण्ठश्च ब्रह्मर्षिस् तपोबलसमन्वितः ॥ ११

तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ॥ ११॥

ततस्सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात् कण्टकेन बुद्धिमोहबलात्कृता ॥ १२॥

किं नु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥ १३

अक्रुद्ध्यत् [5]सहसा विद्धो नेत्रे परममन्युमान् ।

---

1. क-ग—पश्यन्ती सुमनोहराम् 2. घ—मदेन च दमेन च
3. क-ख-ग—चलन्तीमिव
4. ख-ग-घ—क्षामकण्ठश्च ब्रह्मर्षिर् 5. ख-घ—स तया

ततश्शर्य्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥ १४

ततो रुद्धे शकृन्मूत्रे सैन्यमासीत् सुदुःखितम् ।
तथागतमभिप्रेक्ष्य [1]पर्यतप्यत पार्थिवः ॥ १५

शर्य्यातिः—

[2]तपोनित्यस्य वृद्धस्य सरोषस्य विशेषतः ।
केनापकृतमद्यैव भार्गवस्य महात्मनः ॥ १६

ज्ञातं वा यदि वाऽज्ञातं तद्द्रुतं ब्रूत माचिरम् ॥ १६॥

लोमशः—

तमूचुस्सैनिकास्सर्वे न विद्मोऽपकृतं वयम् ।
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ॥ १७॥

ततस्स पृथिवीपालस् साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत् सुहृद्वर्गं प्रत्यजानन्न चैव ते ॥ १८॥

सा तदार्तं ततो दृष्ट्वा तत् सैन्यमसुखार्दितम् ।
पितरं दुःखितं चापि सुकन्येदमथाब्रवीत् ॥ १९॥

सुकन्या—

मयाऽटन्त्येह वल्मीके दृष्टं सत्त्वमभिज्वलत् ।
खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥ २०॥

लोमशः—

एतच्छ्रुत्वा तु शर्य्यातिर् वल्मीकं तूर्णमभ्यगात् ॥ २१॥

---

1. क-ख-ग—पर्यपृच्छत्स 2. घ—नास्तीदमर्धम्

तत्रापश्यत्तपोवृद्धं चन्द्रादित्यसमप्रभम् ।
[1]ज्ञानवृद्धं वयो वृद्धं योगवृद्धं च भार्गवम् ॥ २२
अयाचताथ सैन्यस्य प्राञ्जलिः पृथिवीपतिः ॥ २२॥

शर्य्यातिः—

अज्ञानाद्बालया यत्ते कृतं तत् क्षन्तुमर्हसि ॥ २३

लोमशः—

ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ॥ २३॥

च्यवनः—

रूपौदार्यगुणैर्युक्तां लोभमोहबलात्कृताम् ।
तामेव प्रतिगृह्याहं राजन् दुहितरं तव ॥ २४॥
क्षमिष्यामि महीपाल सत्यमेतद्ब्रवीमि ते ॥ २५

लोमशः—

ऋषेर्वचनमाज्ञाय शर्य्यातिरविचारयन् ।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ २६

प्रतिगृह्य तु तां कन्यां च्यवनः प्रससाद ह ।
प्राप्तप्रसादो राजर्षिस् ससैन्यः पुरमाव्रजत् ॥ २७

सुकन्याऽपि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत् प्रीत्या तपसा नियमेन च ॥ २८

---

1. अ-घ—नास्तोदमर्धम

अग्नीनामतिथीनां च शुश्रूपुरनसूयिका ।
समाराधयत क्षिप्रं च्यवनं सा शुचिस्मिता ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[अस्मिन्नध्याये २९ श्लोकाः]

## ॥ एकोनशततमोऽध्यायः ॥

कदाचन च्यवनाश्रममुपागताभ्यामश्विभ्यां भार्यात्वाय सुकन्यां प्रति प्रार्थनम् ॥ १ ॥ तदकामयमानां तां प्रत्यश्विभ्यां स्वप्रसादाच्च्यवने रूपयौवनसंपन्ने सति तुल्यरूपेषु त्रिषु कस्यचिद्वरणचोदना ॥ २ ॥ भर्त्राज्ञया तया तदङ्गीकारे च्यवनेन सहाश्विभ्यां सरसोऽन्तर्जले निमज्जनम् ॥ ३ ॥ सुकन्यया निमज्ज्योत्थितेषु सरूपेषु त्रिषु तेषु स्वपातिव्रत्यमहिम्ना च्यवनस्यैव वरणम् ॥ ४ ॥ ततस्तुष्टेन च्यवनेनाश्विनोः सोमरसदापनप्रतिज्ञानम् ॥ ५ ॥

लोमशः—

कस्य चित्त्वथ कालस्य सुराणामश्विनौ नृप ।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ १

[1]तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव ।
ऊचतुस्समभिद्रुत्य नासत्यावश्विनाविदम् ॥ २

अश्विनौ—

कस्य त्वमसि वामोरु किं वने वै करोषि च ।

1. घ—अर्धचतुष्टयं नास्ति

इच्छाव भद्रे ज्ञातुं त्वां तत्त्वमाख्याहि शोभने ॥　　३

लोमशः—

[1]ततस्सुकन्या संवीता तावुवाच सुरोत्तमौ ॥　　३॥

सुकन्या—

शर्यातितनयां वित्तं भार्यां च च्यवनस्य माम् ॥　　४

नाम्ना चाहं सुकन्याऽस्मि [2]नृलोकेऽस्मिन् प्रतिष्ठिता ।
साऽहं सर्वात्मना नित्यं पतिं प्रति सुनिष्ठिता ॥　　५

लोमशः—

अथाश्विनौ प्रहस्यैताम् अब्रूतां पुनरेव तु ॥　　५॥

अश्विनौ—

कथं त्वमसि कल्याणि पित्रा दत्ताऽऽगता वने ।
भ्राजसे वनमध्ये त्वं विद्युत्सौदामनी यथा ॥　　६॥
न देवेष्वपि तुल्यां हि त्वया पश्यात्र भामिनि ॥　　७

अनाभरणसम्पन्ना परमाम्बरवर्जिता ।
शोभसेऽप्यधिकं भद्रे वनमप्यनलङ्कृता ॥　　८
[3]सर्वाभरणसम्पन्ना परमाम्बरधारिणी ।
शोभेथास्त्वनवद्याङ्गि न त्वेवं मलपङ्किनी ॥　　९
कस्मादेवंविधा भूत्वा जरया जर्झरं पतिम् ।

---

1. क—अर्धचतुष्टयं नास्ति　　2. अयं पादोऽनन्तरश्च न स्तः
3. घ—नास्तीदमर्धम्

त्वमुपास्से ह कल्याणि कामभोगबहिष्कृतम् ॥ १०

असमर्थं परित्राणे पोषणे च शुचिस्मिते ।

साधु च्यवनमुत्सृज्य वरयस्वैकमावयोः ॥ ११

पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ॥ ११॥

लोमशः—

एवमुक्ता सुकन्या तु सुरौ ताविदमब्रवीत् ॥ १२

सुकन्या—

रताऽहं च्यवने पत्यौ [1]मैवं मां परिशङ्कतम् ॥ १२॥

लोमशः—

तावब्रूतां पुनश्चैनाम् आवां देवभिषग्वरौ ।

युवानं रूपसम्पन्नं करिष्यावः पतिं तव ॥ १३॥

ततस्तस्यावयोश्चैव पतिमेकतरं वृणु ।

एतेन समयेनैनम् आमन्त्रय वराङ्गने ॥ १४॥

सा तयोर्वचनाद्राजन्नुपसङ्गम्य भार्गवम् ।

उवाच ताभ्यां यद्वाक्यम् उक्तं भृगुसुतं प्रति ॥ १५॥

तच्छ्रुत्वा च्यवनो भार्याम् उवाच क्रियतामिति ।

सा भर्त्रा समनुज्ञाता क्रियतामिति चाब्रवीत् ॥ १६॥

श्रुत्वा तदश्विनौ वाक्यं तस्यास्तत्क्रियतामिति ।

---

1. अ—एवं ; ख—एवं मा वोचतं पुनः ; ग—मैवं मा वोचतं पुनः

ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ॥　　१७॥
ततोऽम्भश्च्यवनश्शीघ्रं रूपार्थी प्रविवेश ह ।
अश्विनावपि तद्राजन् सरः [1]प्रविशतां विभो ॥　　१८॥
ततो मुहूर्तादुत्तीर्णास् सर्वे ते सरसस्त्रयः ।
दिव्यरूपधरास्सर्वे युवानो मृष्टकुण्डलाः ॥　　१९॥
तुल्यवेषधराश्चैव मनसः प्रीतिवर्धनाः ॥　　२०
तेऽब्रुवन् सहितास्सर्वे वृणीष्वान्यतमं शुभे ।
अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ॥　　२१
त्वमश्विनोरन्यतमं च्यवनं वा यशस्विनि ।
यत्र वाऽप्यभिकामाऽसि तं वृणीष्व शुभानने ॥　　२२
सा समीक्ष्य तु तान् सर्वास् तुल्यरूपधरान् स्थितान् ।
निश्चित्य मनसा बुद्ध्या ततो वव्रे स्वकं पतिम् ॥　　२३
लब्ध्वा तु च्यवनो भार्यां वयो रूपं च वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास् तौ नासत्याविदं वचः ॥　　२४

च्यवनः—

यथाऽहं रूपसम्पन्नो वयसा च समन्वितः ।
कृतो भवद्भ्यां वृद्धस्सन् भार्यां च प्राप्तवानिमाम् ॥　　२५
तस्माद्युवां करिष्यामि प्रीत्याऽहं सोमपीथिनौ ।

---

1. ख-ग—प्राविशतां प्रभो

मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वाम् ॥ २६

लोमशः—

तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः ।

च्यवनश्च सुकन्या च सुराविव विजह्रतुः ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[ अस्मिन्नध्याये २७ श्लोकाः ]

---

## ॥ शततमोऽध्यायः ॥

च्यवनस्य यौवनलाभश्रवणहृष्टेन शर्यातिना तदाश्रमाभिगमनम् ॥१॥ च्यवनेन शर्यातेर्याजनम् ॥ २ ॥ तत्र च्यवनेनाश्विभ्यां स्वप्रतिश्रुतसोमरस-दानोद्यमे इन्द्रेण तस्य हननाय बाहुना वज्रोद्यमनम् ॥ ३ ॥ तद्बाहुसंस्त-म्भनपूर्वकं च्यवनसृष्टया कृत्यया शक्रं प्रत्यभिसरणम् ॥ ४ ॥ इन्द्राभिष्टुतेन च्यवनेन तस्मिन् स्वप्रयुक्तकृत्यायास्ततो विनिवर्त्य स्त्र्यादिषु विभजनम् ॥५॥ लोमशेन सुकन्योपाख्यानसमापनपूर्वकं युधिष्ठिराय नानातीर्थमहिमानु-वर्णनम् ॥ ६ ॥

---

लोमशः—

ततश्श्रुत्वा तु शर्यातिर् वयस्थं च्यवनं कृतम् ।

प्रहृष्टस्सेनया सार्धम् उपायाद्भार्गवाश्रमम् ॥ १

च्यवनं च सुकन्यां च दृष्ट्वा देवसुताविव ।

रेमे महीपश्शर्यातिः कृत्स्नां प्राप्य महीमिव ॥ २

ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः ।
उपोपविष्टः कल्याणीः कथाश्चक्रे महामनाः ॥ ३

अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन् ।
याजयिष्यामि राजंस्त्वां सम्भारानुपकल्पय ॥ ४

ततः परमसंहृष्टश्श् [1]शर्यातिः पृथिवीपतिः ।
च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् ॥ ५

प्रशस्तेऽहनि याज्ञीये सर्वकामसमृद्धिमत् ।
कारयामास शर्यातिर् यज्ञायतनमुत्तमम् ॥ ६

तत्रैनं च्यवनो राजन् याजयामास भार्गवः ।
अद्भुतानि च तत्रासन् यानि तानि निबोध मे ॥ ७

अगृह्णाच्च्यवनस्सोमम् अश्विनोर्देवयोस्तदा ।
तमिन्द्रो वारयामास गृह्यमाणं तयोर्ग्रहम् ॥ ८

इन्द्रः—

उभावेतौ न सोमार्हौ नासत्याविति मे मतिः ।
भिषजौ देवपुत्राणां [2]पातुं सोमं नचार्हतः ॥ ९

च्यवनः—

मा वमंस्था महात्मानौ रूपद्रविणवत्तमौ ।

---

1. ख—राजा वाक्यमपूजयत् ; मध्ये अर्धं नास्ति
2. क—कर्मणा तेन नार्हतः ; घ-ख-ग—कर्मणा नैवमर्हतः

यौ चक्रतुर्मां मघवन् वृन्दारकमिवाजरम् ॥ १०

ऋते त्वां विबुधांश्चान्यान् कथं वै नार्हतस्स्वयम् ।
अश्विनावपि देवेन्द्र देवौ विद्धि पुरन्दर ॥ ११

इन्द्रः—
चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ।
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ॥ १२

लोमशः—
एतदेव तदा वाक्यम् आम्रेडयति वासवे ।
अनादृत्य ततश्शक्रं भागं जग्राह भार्गवः ॥ १३

ग्रहीष्यन्तं तु तं सोमम् अश्विनोरुत्तमं तदा ।
समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ १४

इन्द्रः—
आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ।
वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥ १५

लोमशः—
एवमुक्तस्स्मयन्निन्द्रम् अभिवीक्ष्य स भार्गवः ।
जग्राह विधिवत् सोमम् अश्विभ्यामुत्तमं ग्रहम् ॥ १६

[1]ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः ।
तस्य प्रहरतो बाहू स्तम्भयामास भार्गवः ॥ १७

---

1. घ—करेणास्मै प्रजग्राह घोरं वज्रं शचीपतिः । [पाठान्तरम्]
ख—तदाऽस्मै

तं स्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम् ।
कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ॥ १८

ततः कृत्या समभवद् ऋषेस्तस्य तपोबलात् ।
मदो नाम महावीर्यो बृहत्कायो महासुरः ॥ १९

शरीरं यस्य निर्देष्टुम् अशक्यं हि सुरासुरैः ।
तस्यास्यमभवद्घोरं तीक्ष्णाग्रदशनं महत् ॥ २०

हनुरेका स्थिता त्वस्य भूमावेका दिवं गता ।
चतस्र आयता दंष्ट्रा योजनानां शतंशतम् ॥ २१

इतरे तस्य दशना बभूवु[1]र्दशयोजनाः ।
प्राकारसदृशाकाराश् शूलाग्रसमदर्शनाः ॥ २२

बाहू परिघसङ्काशावायतावयुतं शतम् ।
नेत्रे रविशशिप्रख्ये वक्त्रं कालाग्निसंनिभम् ॥ २३

लेलिहञ्जिह्वया वक्त्रं विद्युच्चपललोलया ।
व्यात्ताननो घोरदृष्टिर् ग्रसन्निव जगद्बलात् ॥ २४

स भक्षयिष्यन् सङ्क्रुद्धश् शतक्रतुमुपाद्रवत् ।
महता घोररूपेण लोकाञ् शब्देन पूरयन् ॥* २५

तं दृष्ट्वा घोरवदनं मदं देवश्शतक्रतुः ।

---

1. अ—श्शत
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् ॥ २६

भयात् संस्तम्भितभुजस् सृक्किणी लेलिहन् मुहुः ।
ततोऽब्रवीद्देवराजश् च्यवनं भयपीडितः ॥ २७

इन्द्रः—

सोमार्हावश्विनावेतावद्य प्रभृति भार्गव ।
भविष्यतस्सत्यमेतद् वचो ब्रह्मन् ब्रवीमि ते ॥ २८

न ते मिथ्या समारम्भो भवत्वेष परो विधिः ।
जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ॥ २९

सोमपावश्विनावेतौ यथा वाद्यकृतौ त्वया ।
तथैव मामपि ब्रह्मन् श्रेयसा योक्तुमर्हसि ॥ ३०

भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ।
सुकन्यायाः पितुश्चास्य कीर्तिर्लोके प्रथेदिति ॥ ३१

अतो मयैतत् प्रथितं तव वीर्यप्रकाशनम् ।
तस्मात् प्रसादं कुरु मे भवत्वेतद् यदिच्छसि ॥ ३२

लोमशः—

एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरन्दरम् ॥ ३३

मदं च व्यभजद्राजन् मद्ये स्त्रीषु च वीर्यवान् ।
अक्षेषु मृगयायां च पूर्वसृष्टं पुनःपुनः ॥ ३४

तदा मदं विनिक्षिप्य शक्रं सन्तर्प्य चेन्दुना ।
अश्विभ्यां सहितान् देवान् याजयित्वा च तं नृपम् ॥ ३५
विख्याप्य वीर्यं लोकेषु सर्वेषु वदतां वरः ।
सुकन्यया महारण्ये विजहारानुरक्तया ॥ ३६
तस्यैतद्द्विजसङ्घुष्टं सरो दिव्यं प्रकाशते ।
[1]अत्र त्वं सह सोदर्यैः पितॄन् देवांश्च तर्पय ॥ ३७
[2]एतद्दृष्ट्वा महीपाल [3]वल्मीकाग्रं च भारत ।
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम् ॥ ३८
पुष्करेषु महाराज सर्वेषु च जलं स्पृश ॥ ३८॥
[4]आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम् ।
सदाफलं सदास्रोतो मरुतां स्थानमुत्तमम् ॥ ३९॥
चित्याश्चैते बहुविधास् त्रिदशानां युधिष्ठिर ।
एतच्चन्द्रसरो नित्यम् अर्चयन्त्यृषयस्सदा ॥ ४०॥
वैखानसाः पुराणाश्च वालखिल्यास्तथैव च ॥ ४१
शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च ।
सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश ॥ ४२
शन्तनुश्चात्र कौन्तेय शुनकश्च नराधिपः ।
[5]नरनारायणौ चोभौ स्थानं प्राप्तास्सनातनम् ॥ ४३

---

1. अ—तर्पयाद्य पितॄन् देवान् पयसा पावनेन च । [ पाठान्तरम् ]
2. ख—इदमर्धं नास्ति
3. क-ग-घ—सिकताढ्यं च
4. ख—अर्धत्रयं नास्ति
5. ख—इदमर्धं नास्ति

इह नित्याश्रया देवाः पितरश्च महर्षिभिः ।
[1]आर्चीकपर्वते ये तु तान् यजस्व युधिष्ठिर ॥ ४४
इह ते वै चरून् प्राश्नंस्त्रिदशाश्च विशां पते ।
यमुना चाक्षयस्रोताः कृष्णश्चैव तपोधनः ॥ ४५
यमौ च भीमसेनश्च कृष्णा चामित्रकर्शन ।
सर्वे चात्र गमिष्यामस् [2]त्वयैव सह पाण्डव ॥ ४६
एतत् प्रस्रवणं पुण्यम् इन्द्रस्य मनुजाधिप ॥ ४६॥
अत्र धाता विधाता च वरुणश्चोर्ध्वमागताः ।
अत्र ते न्यवसन्राजन् काङ्क्षन्तस्सहधर्मिणः ॥ ४७॥
मैत्राणामृजुबुद्धीनाम् अयं गिरिवरश्शिवः ॥ ४८
एषा सा यमुना राजन् महर्षिगणसेविता ।
नानायज्ञचिता पुण्या सर्वपापभयापहा ॥ ४९
अत्र राजा महेष्वासो मान्धाताऽयजत स्वयम् ।
सहदेवश्च कौन्तेय सोमको वदतां वरः ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि शततमोऽध्यायः ॥ १०० ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[ अस्मिन्नध्याये ५० श्लोकाः ]

---

1. क-ग—आर्चीके पर्वतवरे युजन्ते
घ—अर्चीकपर्वते ते तु; ख—आर्चीकपर्वतवरे ते यजन्ते
2. क-ख-ग—सुकृशास्सुतपस्विनः; घ—सुकृतास्सुतपस्विनः

## ॥ एकशततमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति मान्धातृपदप्रवृत्तिनिमित्तकथनपूर्वकं मान्धातृचरित्रकीर्तनम् ॥ १ ॥

---

युधिष्ठिरः—

मान्धाता राजशार्दूलस् त्रिपु लोकेषु विश्रुतः ।
कथं जातो महाब्रह्मन् यौवनाश्वो नृपोत्तमः ॥ १

कथं चैनां परां ख्यातिं प्राप्तवानमितद्युतिः ।
यस्य लोकादयो वश्या विष्णोरिव महात्मनः ॥ २

एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः ।
सत्यकीर्तेर्हि मान्धातुः कथ्यमानं त्वयाऽनघ ॥ ३

यथा मान्धातृशब्दश्च तस्य शक्रसमद्युतेः ।
जन्म चाप्रतिवीर्यस्य कुशलो ह्यसि भाषितुम् ॥ ४

लोमशः—

शृणुष्वावहितो राजन् राज्ञस्तस्य महात्मनः ।
यथा मान्धातृशब्दो वै लोकेषु परिगीयते ॥ ५

इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः ।
सोऽयजत् पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः ॥ ६

अश्वमेधसहस्रं च प्राप्य धर्मभृतां वरः ।

अन्यैश्च क्रतुभिर्मुख्यैर् विविधैराप्तदक्षिणैः ॥ ७

अनपत्यस्तु राजर्षिस् स महात्मा [1]दृढव्रतः ।
मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह ॥ ८

शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मना ।
पिपासुश्शुष्ककण्ठस्स प्रविवेशाश्रमं भृगोः ॥ ९

तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः ।
इष्टिं चकार सौद्युम्नेर् महर्षिः पुत्रकारणात् ॥ १०

सम्भृतो मन्त्रपूतेन वारिणा कलशो महान् ।
तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः ॥ ११

यत् प्राश्य प्रसवेत् पत्नी तस्य शक्रसमं सुतम् ।
तद्वारि विधिवद् राजन् यस्मिन्नासीत् सुसंस्कृतम् ॥ १२
तं न्यस्य वेद्यां कलशं सुषुपुस्ते महर्षयः ॥ १२॥

रात्रिजागरणाच्छ्रान्तान् सौद्युम्निस्तत्र पार्थिवः ।
शुष्ककण्ठः पिपासार्तः पानीयार्थी भृशं नृपः ॥ १३॥
तं प्रविश्याश्रमं श्रान्तः पानीयं सोऽभ्ययाचत ॥ १४

तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा ।
नाश्रौषीत् कश्चन तदा शकुनेरिव वाशतः ॥ ६ १५
ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः ।

---

1. अ—महीपतिः

अभ्यधावत वेगेन पीत्वा चाम्भो व्यवासृजत् ॥　　१६

स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः ।
निर्वाणमगमद्धीमान् सुसुखी चाभवत् तदा ॥　　१७

ततस्ते प्रत्यबुध्यन्त ऋषय[1]स्सनराधिपाः ।
निस्तोयं तं च कलशं ददृशुस्सर्वे एव ते ॥　　१८

कस्य कर्मेदमिति ते पर्यपृच्छन् समागताः ।
युवनाश्वो मयेत्येवं सत्यं समभिपद्यत ॥　　१९

न युक्तमिति तं प्राह भगवान् भार्गवस्तदा ।
पुत्रार्थं स्थापिताश्चापस् तपसा चैव सम्भृताः ॥　　२०

मया तत्रार्पितं ब्रह्मंस् तप आस्थाय दारुणम् ।
पुत्रार्थं तव राजर्षे महाबलपराक्रम ॥　　२१

महाबलो महावीर्यस् तपोयोगसमन्वितः ।
यश्शक्रमपि वीर्येण गमयेद्यमसादनम् ॥　　२२

अनेन विधिना राजन् मयैतदुपपादितम् ।
[2]अब्भक्षणं त्वया राजन् नयुक्तं कृतमद्य वै ॥　　२३

[3]न त्वद्य शक्यमस्माभिर् एतत् कर्तुमतोऽन्यथा ।
नूनं दैवकृतं ह्येतद् यदेतत् कृतवानसि ॥　　२४

---

1. अ—स्तु नराधिप　　2. ख—इदमर्धं नास्ति
3. क-ग—अर्धचतुष्टयं नास्ति

पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ।
आपस्त्वया कृतं राजन् नयुक्तं कृतमद्य वै ॥ २५

तस्मात् त्वमात्मना पुत्रम् एवंवीर्यं जनिष्यसि ।
विधास्यामो वयं तत्र तवेष्टिं परमाद्भुताम् ॥ २६

यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् ।
ततः प्राणैर्महाराज वियोगस्ते भविष्यति ॥ २७

ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामं पार्श्वं विनिर्भिद्य सुतस्सूर्य इवापरः ॥ ६ २८

निश्चक्राम महातेजास् तदा तं मृत्युराविशत् ।
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् ॥ २९

ततश्शक्रो महातेजास् तं दिदृक्षुरुपागमत् ।
प्रदेशिनीं ततोऽस्यास्ये शक्रस्समभिसन्दधे ॥ ३०

मामयं धास्यतीत्येवं परितुष्ट इवाब्रवीत् ।
मान्धातेति च नामाऽस्य चक्रुस्सेन्द्रा दिवौकसः ॥ ३१

प्रदेशिनीं शक्रदत्ताम् आस्वाद्य स शिशुस्तदा ।
अवर्धत महातेजाः किष्कूनां च त्रयोदश ॥ ३२

वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरम् ।
उपतस्थुर्महाराजं ध्यातमात्राणि सर्वशः ॥ ३३

धनुराजगवं नाम शराश्शृङ्गोद्भवाश्च ये ।

अभेद्यं कवचं चैव सद्यस्तमुपसंश्रयन् ॥ ३४
सोऽभिषिक्तो भगवता स्वयं शक्रेण भारत ।
धर्मे[1]णैवाजयल्लोकांस् त्रीन् विष्णुरिव विक्रमैः ॥ ३५
तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः ।
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ॥ ३६
तस्यैवं वसुसम्पूर्णा वसुधा वसुधाधिप ।
तेनेष्टं विविधैर्यज्ञैर् विधिवच्चाप्तदक्षिणैः ॥ ३७
कृतकृत्यो महातेजा धर्मं प्राप्य सुपुष्कलम् ।
शक्रस्यार्धासनं राजँल्लब्धवानमितद्युतिः ॥ ३८
एकाह्ना पृथिवी तेन धर्मनित्येन धीमता ।
निर्जिता शासनादेव सरत्नाकरपत्तना ॥ ३९
तस्य चित्यैर्महाराज क्रतूनां दक्षिणावताम् ।
चतुरन्ता मही व्याप्ता नासीत् किञ्चिदसंवृता ॥ ४०
तेन पद्मसहस्राणि गवां दश महात्मना ।
ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते ॥ ४१
तेन द्वादशवार्षिक्याम् अनावृष्ट्यां नराधिप ।
वृष्टं सस्यसमृद्ध्यर्थं मिषतो वज्रपाणिनः ॥ ४२
तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
गर्जन्निव महामेघः प्रमथ्य निहतश्शरैः ॥ ४३

1. अ—ण वाऽज ;　　घ—ण वाऽऽर्ज

प्रजाश्चतुर्विधास्तेन त्राता राजन् महात्मना ।
तेनात्मतपसा लोका धारिताश्चैव तेजसा ॥ ४४

तस्यैतद्देवजयनं स्थानमादित्यतेजसः ।
यस्य पुण्यतमो देशः कुरुक्षेत्रस्य मध्यतः ॥ ४५

[1]तथा त्वमपि राजेन्द्र मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्षन् स्वर्गलोकमवाप्स्यसि ॥ ४६

एतत्ते सर्वमाख्यातं मान्धातुश्चरितं महत् ।
जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ॥ ४७

वैशम्पायनः—

[2]एवमुक्तस्तु कौन्तेयो लोमशेन महात्मना ।
पप्रच्छानन्तरं भूयस् सोमकं प्रति भारत ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकशततमोऽध्यायः ॥ १०१ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[ अस्मिन्नध्याये ४८ श्लोकाः ]

---

1. ख—अर्धद्वयं नास्ति 2. ख—अर्धद्वयं नास्ति

## ॥ द्व्यधिकशततमोऽध्यायः ॥

सोमकनामकेन राज्ञा भार्याशतोद्वाहेऽपि ज्येष्ठायामेव जन्तुनामकैकापत्यजननम् ॥ १ ॥ पिपीलिकादष्टसुतदुःखदर्शननिर्विण्णेन तेन राज्ञा ऋत्विजं प्रति बहुपुत्रोत्पादनोपायप्रश्नः ॥२॥ ऋत्विजा राजानं प्रति जन्तोः पशूकरणेन होमे तद्वपाघ्राणनेन भार्याशते पुत्रशतजननोक्तिः ॥ ३ ॥ ऋत्विक्चोदनया सोमकेन राज्ञा जन्तुनामकपुत्रवपाया होमे तद्गन्धाघ्राणनेन तद्भार्याशते पुत्रशतोत्पत्तिः ॥४॥ लोकान्तरं गतेन सोमकेन ऋत्विजा सह तद्भोग्यस्वपुत्रहननजनारकीयदुःखानुभवपूर्वकं तेन सहैव स्वीयसुकृतफलोपभोगः ॥ ५ ॥

---

युधिष्ठिरः—

कथंवीर्यस्स राजाऽभूत् सोमको ददतां वरः ।
कर्माण्यस्य प्रभावं च श्रोतुमिच्छामि तत्त्वतः ॥ १

लोमशः—

युधिष्ठिरासीन्नृपतिस् सोमको नाम धार्मिकः ।
तस्य भार्याशतं राजन् सदृशीनामभूत्तदा ॥ २

स वै यत्नेन महता तासु पुत्रं महीपतिः ।
कञ्चिन्नासादयामास कालेन महताऽपि च ॥ ३

कदाचित्तस्य वृद्धस्य यतमानस्य धीमतः ।
जन्तुर्नाम [1]सुतस्तस्य ज्येष्ठायां समजायत ॥ ४

तं जातं मातरस्सर्वाः परिवार्य समासते ।

---

1. अ—सुतो राजन्; ब—सुतस्तस्मिन् स्त्रीशते समजायत

सततं पृष्ठतः कृत्वा कामभोगान् विशां पते ॥ ५
ततः पिपीलिका जन्तुं कदाचिददशत् स्फिजि ।
स दष्टो ह्यरुदद्राजंस् तेन दुःखेन बालकः ॥ ६
ततस्ता मातरस्सर्वाः प्राक्रोशन् भृशदुःखिताः ।
परिवार्य जन्तुं सहितास् स शब्दस्तुमुलोऽभवत् ॥ ७
तमार्तनादं सहसा शुश्राव स महीपतिः ।
[1]अमात्यपरिषन्मध्ये उपविष्टस्सह द्विजैः ॥ ८
ततः प्रस्थापयामास किमेतदिति पार्थिवः ।
तस्मै क्षत्ता [2]समाचष्ट यथावृत्तं सुतं प्रति ॥ ९
त्वरमाणस्स चोत्थाय सोमकस्सह मन्त्रिभिः ।
प्रविश्यान्तःपुरं पुत्रम् आश्वासयदरिन्दमः ॥ १०
सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तःपुरात् ततः ।
ऋत्विजा सहितो राजन् सहामात्य उपाविशत् ॥ ११

सोमकः—

धिगस्त्विहैकपुत्रत्वम् अपुत्रत्वं वरं भवेत् ।
[3]अनित्यत्वात्तु भूतानां शोक एवैकपुत्रता ॥ १२
इदं भार्याशतं ब्रह्मन् परी[4]क्ष्याप्युचितं प्रभो ।

---

1. ख—अर्धद्वयं नास्ति 2. क-ख-ग—यथावृत्तमाचचक्षे
3. क-ख-ग—नित्यातुरत्वान्मर्त्यानां ; घ—अनित्यत्वाच्च मर्त्यानां
4. ख—अयं पादोऽनन्तरश्च नस्तः

पुत्रार्थिना मया चोढं न तासां विद्यते प्रजा ॥ १३

एकः कथञ्चिदुत्पन्नः पुत्रो जन्तुरयं मम ।
यतमानासु सर्वासु किं नु दुःखमतः परम् ॥ १४

वयश्च समतीतं मे सभार्यस्य द्विजोत्तम ।
आसां प्राणास्समायत्ता ममास्मिन्नेकपुत्रके ॥ १५

स्यात्तु कर्म तथायुक्तं येन पुत्रशतं भवेत् ।
महता लघुना वाऽपि कर्मणा दुष्करेण वा ॥ १६

ऋत्विक्—

[1]अस्ति चैतादृशं कर्म येन पुत्रशतं भवेत् ।
[2]यदि शक्नोषि तत् कर्तुम् अथ वक्ष्यामि सोमक ॥ १७

सोमकः—

कार्यं वा यदि वाऽकार्यं येन पुत्रशतं भवेत् ।
कृतमेवेति तद्विद्धि भगवन् प्रब्रवीमि ते ॥ १८

ऋत्विक्—

यजस्व जन्तुना राजंस् त्वं मया वितते क्रतौ ।
ततः पुत्रशतं श्रीमद् उत्तिष्ठेदचिरेण ते ॥ १९

वपायां हूयमानायां धूममाघ्राय मातरः ।
ततस्तास्सुमहावीर्यान् जनयिष्यन्ति ते सुतान् ॥ २०

1. क-ग—कृतमेवेति तद्विद्धि भगवान् प्रब्रवीतु मे। [इदमर्धमधिकम्]
2. क-ग—अर्धलयं नास्ति

तस्यामेव तु ते जन्तुर् भविता पुनरात्मजः ।
लक्षणं चास्य सौवर्णं वामपार्श्वे भविष्यति ॥* २१

सोमकः—
ब्रह्मन् यद्यद्यथा कार्यं तत्त[1]त् कार्यं तथातथा ।
पुत्रकामतया सर्वं करिष्यामि वचस्तव ॥ २२

लोमशः—
ततस्स याजयामास सोमकं तेन जन्तुना ।
मातरस्तु बलात् पुत्रम् अपाकार्षुः कृपान्विताः ॥ २३
हा हतास्स्मेति वाशन्त्यस् तीव्रशोकसमन्विताः ।
तं मातरः प्रत्यकर्षन् गृहीत्वा दक्षिणे करे ॥ २४
सव्ये पाणौ गृहीत्वा तु याजकोऽपि स्म कर्षति ॥ २४॥
कुररीणामिवार्तानाम् अपाकृष्य तु तं सुतम् ।
विशस्य चैनं विधिवद् वपामस्य जुहाव सः ॥ २५॥
जन्तोर्वपायां हूयन्त्यां गन्धमाघ्राय मातरः ।
[2]आर्ता निपेतुस्सहसा पृथिव्यां कुरुनन्दन ॥ २६॥
सर्वाश्च गर्भानलभंस् ततस्ताः पार्थिवाङ्गनाः ॥ २७
ततो दशसु मासेषु सोमकस्य विशां पते ।
[3]जज्ञे पुत्रशतं पूर्णं तासु सर्वासु भारत ॥ २८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. क-ख-ग—त् कुरु 2. ख—इदमर्धं नास्ति 3. घ—अर्धपञ्चकं नास्ति

जन्तुर्ज्येष्ठस्समभवज् जनित्र्यामेव पूर्ववत् ।
स तासामिष्ट एवासीन्न तथाऽन्ये निजास्सुताः ॥ २९

तच्च लक्षणमप्यासीत् सौवर्णं पार्श्वे उत्तरे ।
[1]तस्मिन् पुत्रशते चाग्र्यस् स बभूव गुणैर्युतः ॥ ३०

ततस्स कालमगमत् सोमकस्य गुरुर्नृप ।
अन्वक्षमेव पश्चात्तु सोमकोऽप्यगमत् परम् ॥ ३१

नरके पच्यमानं तु ददर्श स तु सोमकः ।
[2]तमपृच्छत् कथं नु त्वं नरके पच्यसे द्विज ॥ ३२

तमब्रवीद्गुरुस्सोऽथ पच्यमानोऽग्निना भृशम् ॥ ३२॥

गुरुः—

त्वं मया याजितो राजंस् तस्येदं कर्मणः फलम् ॥ ३३

लोमशः—

एतच्छ्रुत्वा तु राजर्षिर् धर्मराजमथाब्रवीत् ॥ ३३॥

सोमकः—

अहं तत्र प्रवेक्ष्यामि मुच्यतां मम याजकः ।
मत्कृते हि महाभागः पच्यते नरकाग्निना ॥ ३४॥

[3]सोऽहमात्मानमाधास्ये नरकान्मुच्यतां गुरुः ॥ ३५

---

1. ख—इदमर्धं नास्ति  2. क-ग—अर्धनवकं नास्ति
3. ख—इदमर्धं नास्ति

धर्मः—

नान्यः कर्तुः फलं राजन्नुपभुङ्क्ते कदाचन ।
इमानि तव दृश्यन्ते फलानि वदतां वर ॥ ३६

सोमकः—

पुण्यान्न कामये लोकान् ऋतेऽहं ब्रह्मवादिनम् ।
इच्छाम्यहमनेनैव सह वस्तुं सुरालये ॥ ३७

नरके वा धर्मराज कर्मणाऽस्य समो ह्यहम् ।
पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् ॥ ३८

धर्मः—

यद्येवमीप्सितो राजन् भुङ्क्ष्वाद्य सहितः फलम् ।
तुल्यकालं सहानेन पश्चात् प्राप्स्यसि सद्गतिम् ॥ ३९

लोमशः—

स चकार तथा सर्वं राजा राजीवलोचनः ॥ ३९॥

पुनश्च लेभे लोकान् स्वान् कर्मणा तेन निर्जितान् ।
सह तेनैव विप्रेण गुरुणा स गुरुप्रियः ॥ ४०॥

[1]एष तस्याश्रमः पुण्यो य एषोऽत्र प्रकाशते ।
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः ॥ ४१॥

---

1. अ—तस्यायमाश्रमः पुण्यः पुण्यकृद्भिर्निषेवितः [ पाठान्तरम् ]

एतस्मिन्नेव राजेन्द्र वत्स्यामो विगतज्वराः ।
षड्रात्रं नियतात्मानस् सज्जीभव कुरूद्वह ॥　　४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[अस्मिन्नध्याये ४२॥ श्लोकाः]

---

## ॥ त्र्यधिकशततमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति नानातीर्थमहिमानुवर्णनम् ॥

---

लोमशः—

अस्मिन् किल स्वयं राजन्निष्टवान् वै प्रजापतिः ।
सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकम् ॥　　१

अम्बरीषश्च नाभाग इष्टवान् यमुनामनु ।
यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः ॥　　२

देशो नाहुषयज्ञस्य अयं पुण्यतमो नृप ।
यत्रेष्ट्वा दशपद्मानि सदस्येभ्योऽतिसृष्टवान् ॥　　३

सार्वभौमस्य कौन्तेय ययातेरमितौजसः ।
स्पर्धमानस्य शक्रेण पश्येदं यज्ञवास्त्विह ॥　　४

[1]पश्य नानाविधाकारैर् अग्निभिर्निचितां महीम् ।
मज्जन्तीमिव चाक्रान्तां ययातेर्नृप कर्मभिः ॥ ५

एषा शम्येकपात्रा सा शकटं चैतदुत्तमम् ।
पश्य नागह्रदानेतान् पश्य नारायणाश्रमान् ॥ ६

[2]एतदार्चीकपुत्रस्य योगैर्विचरतो महीम् ।
उपसर्पणमुर्वीश व्याख्यातममितौजसः ॥ ७

अत्रानुवंशं पठतश् शृणु मे कुरुनन्दन ।
उलूखलैराभरणैः पिशाची यद्भाषत ॥ ८

युगन्धरे दधि प्राश्य उषित्वा चाच्युतस्थले ।
तद्वद्भूतलये स्नात्वा सपुत्रा वस्तुमिच्छसि ॥ ९

एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि ।
एतद्वै ते दिवानृत्तं रात्रौ नृत्तमतोऽन्यथा ॥ १०

[3]अद्य चाभिनयस्याहः क्षपां भरतसत्तम ।
द्वारमेतत् तु कौन्तेय कुरुक्षेत्रस्य भारत ॥ ११

अत्रैव नाहुषो राजा राजन् क्रतुभिरिष्टवान् ।
ययातिर्बहु[4]रत्नाढ्यो यत्रेष्ट्वा मुदमाप्तवान् ॥ १२

---

1. ख—अर्धत्रयं नास्ति
2. क-ग—अर्धषट्कं नास्ति; ख—अर्धनवकं नास्ति
3. क-ग-घ—अत्राद्याह्नो निवत्स्यामः
4. क-ग-घ—रत्नाढ्यैर् यत्रेन्द्रो मुदमभ्यगात्

एतत् [1]प्लक्षवटं नाम यमुनातीर्थमुच्यते ।
एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः ॥ १३

अत्र सारस्वतैर्यज्ञैर् ईजानाः परमर्षयः ।
यूपोलूखलिनस्तत्र गच्छन्त्यवभृथप्लवम् ॥ १४

[2]अत्र वै भरतो राजा राजन् क्रतुभिरिष्टवान् ।
असकृत् कृष्णसारङ्गं धर्मेणाप्य च मेदिनीम् ॥ १५

अत्रैव पुरुषव्याघ्र मरुत्तस्सत्रमुत्तमम् ॥ १५॥
प्राप चैवर्षिमुख्येन संवर्तेनाभिपालितः ॥ १६

अत्रोपस्पृश्य राजेन्द्र सर्वाँल्लोकान् प्रपश्यति ।
पूयते दुष्कृताच्चैव समुपस्पृश्य भारत ॥ १७

वैशम्पायनः—

तत्र सभ्रातृकस्स्नात्वा स्तूयमानो महर्षिभिः ।
लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् ॥ १८

युधिष्ठिरः—

सर्वाँल्लोकान् प्रपश्यामि तपसा सत्यविक्रम ।
इहस्थः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनम् ॥ १९

लोमशः—

एवमेतन्महाबाहो पश्यन्ति परमर्षयः ।

---

1. क-ख-ग-घ—प्लक्षावतरणं  2. अ—अर्धचतुष्टयं नास्ति

इह स्नात्वा तपोयुक्तांस् त्रीँल्लोकान् सचराचरान् ॥ २०

सरस्वतीमिमां पुण्यां पुण्यैकशरणावृताम् ।
अत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि ॥ २१

इह सारस्वतैर्यज्ञैर् इष्टवन्तस्सुरर्षयः ।
ऋषयश्चैव कौन्तेय तथा राजर्षयोऽपि च ॥ २२

वेदिः प्रजापतेरेषा समन्तात् पञ्चयोजना ।
कुरोश्च यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ चतुरधिकशततमोऽध्यायः ॥

लोमशेन युधिष्ठिरं प्रति सरस्वत्यादिमाहात्म्यकथनम् ॥ १ ॥ तथा श्येनकपोतोपाख्यानकथनारम्भः ॥ २ ॥

---

लोमशः—

इह मर्त्यास्तपस्तप्त्वा स्वर्गं गच्छन्ति भारत ।
मर्तुकामा नरा राजन्निहायान्ति सहस्रशः ॥ १

[1]एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा ।
इह ये वै मरिष्यन्ति ते वै स्वर्गजितो नराः ॥ २

एषा सरस्वती पुण्या दिव्या चौघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशां पते ॥ ३

द्वारं निषादराज्यस्य येषां दोषात् सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादास्स्म मां विदुः ॥ ४

एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
यत्रैनामन्ववर्तन्त दिव्याः पुण्यास्समुद्रगाः ॥ ५

एतत् सिन्धोर्महत्तीर्थं यत्रागस्त्यमरिन्दम ।
लोपामुद्रा समागम्य भर्तारमवृणीत वै ॥ ६

एतत् प्रभासते तीर्थं प्रभासं भास्करद्युते ।
इन्द्रस्य दयितं नित्यं पवित्रं पापनाशनम् ॥ ७

एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एषा रम्या विपाशा च नदी परमपावनी ॥ ८

अत्र वै पुत्रशोकेन वसिष्ठो भगवानृषिः ।
बद्ध्वाऽऽत्मानं निपतितो विपाशः पुनरुत्थितः ॥ ९

काश्मीरमण्डलं चैतत् सर्वपुण्यमरिन्दम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिस्सह ॥ १०

---

1. ख—इदमर्धं नास्ति

यत्रौत्तराणां सर्वेषाम् ऋषीणां नाहुषस्य च ।
अग्नेश्चासीद्धि संवादः काश्यपस्य च भारत ॥ ११

एतद्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ १२

एष [1]वातिमृकण्डोर्वै प्रख्यातस्सत्यविक्रमः ।
नात्यवर्तत यद्वारं विदेहानुत्तरान् जयम् ॥ १३

एष [2]उज्जानको नाम पावकिर्यत्र शान्तवान् ।
अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ॥ १४

ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना ॥ १५

[3]समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया ।
तं द्रक्ष्यसि महाराज भृगुतुन्दं महागिरिम् ॥ १६

जलां चोर्ध्वजलां चैव यमुनामभितो नदीम् ।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ॥ १७

[4]तां देवसमितिं तस्य वासवश्च विशां पते ।
अभ्यगच्छत राजानं ज्ञातुमग्निश्च भारत ॥ १८

---

1. ख—अर्धद्वयं नास्ति
2. ख-ग—उज्जातको नाम यवक्रीयल
3. ख—इदमर्धं नास्ति ; अ—समाधिनां समापन्नः
4. ख—इदमर्धं नास्ति

जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रश्श्येनः कपोतोऽग्निर् भूत्वा यज्ञेऽभिजग्मतुः ॥ १९

ऊरुं राज्ञस्समासाद्य कपोतश्श्येनजाद्भयात् ।
शरणार्थी तदा राजन् निलिल्ये भयपीडितः ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

शिबिपरीक्षणार्थं श्येनीभूतेनेन्द्रेणानुद्रुतस्य कपोतरूपधारिणोऽग्नेः शिबिं प्रति शरणागतिः ॥ १ ॥ कपोतरिरक्षिषया राज्ञा श्येनानुमत्या स्व-शरीरोत्कृत्तमांसस्य कपोतेन सह तुलारोपणम् ॥२॥ मांसापेक्षया कपोतस्य गौरवातिरेके राज्ञा स्वयमेव तुलारोहणम् ॥ ३ ॥ ततस्तुष्टाभ्यामिन्द्राग्निभ्यां तत्प्रशंसनपूर्वकं स्वलोकगमनम् ॥ ४ ॥

---

श्येनः—

धर्मात्मानं त्वाहुरेकं राजन् सर्वे महीक्षितः ।
स वै धर्मविरुद्धं त्वं कस्मात् कर्म चिकीर्षसि ॥ १

विहितं भक्षणं राजन् पीड्यमानस्य मे क्षुधा ।
मा हिंसीर्धर्मलोभेन धर्ममुत्सृज्य मा नशीः ॥ २

राजा—

संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
[1]मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ ३

एवमस्यागतस्येह कपोतस्याभयार्थिनः ।
अप्रदाने परोऽधर्मः किं त्वं श्येन प्रपश्यसि ॥ ४

प्रस्पन्दमानस्सम्भ्रान्तः कपोतश्श्येन लक्ष्यते ।
मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ॥ ५

श्येनः—

आहारात् सर्वभूतानि सम्भवन्ति महीपते ।
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥ ६

[2]शक्यते पुष्कलस्यार्थे चिररात्राय जीवितुम् ।
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ॥ ७

भक्षाद्विलोपितस्याद्य मम प्राणा विशां पते ।
विसृज्य कायमेष्यन्ति पन्थानमपुनर्भवम् ॥ ८

प्रमृते मयि सर्वं मे पुत्रदारं मरिष्यति ।
रक्षन् कपोतं राजंस्त्वं बहून् प्राणान् हनिष्यसि ॥ ९

बहून् यो बाधते धर्मो न स धर्मः कुवर्त्म तत् ।
अविरोधी तु यो धर्मस् स धर्मस्सत्यविक्रम ॥ १०

विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।

1. ग—अर्धमिदं नास्ति 2. ख—इदमर्धं नास्ति

न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् ॥　　११

गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चये ।
यतो भूयस्ततो राजन् कुरु धर्मविनिश्चयम् ॥　　१२

राजा—

बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।
सुपर्णः पक्षिराट् किं त्वं धर्मं ज्ञात्वाऽभिभाषसे ॥　　१३

[1]तथा हि धर्मसंयुक्तं बहुचित्रं प्रभाषसे ।
न तेऽस्त्यविदितं किञ्चिद् इति त्वां लक्षयाम्यहम् ॥　　१४

शरणैषिपरित्यागं कथं साध्विति मन्यसे ॥　　१४॥

आहारार्थं समारम्भस् तव चायं विहङ्गम ।
शक्यश्चाप्यन्यथा कर्तुम् आहारोऽप्यधिकस्त्वया ॥　　१५॥

गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमत्र क्रियतां यच्चान्यदिह काङ्क्षसे ॥　　१६॥

श्येनः—

न वराहं न चोक्षाणं न मृगान् विविधांस्तथा ।
भक्षयामि महाराज किं ममान्येन केनचित् ॥　　१७॥

यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव ।
तमुत्सृज महाराज कपोतमिममेव मे ॥　　१८॥

---

1. ख—इदमर्धं नास्ति

श्येनाः कपोतान् खादन्ति [1]श्रुतिरेषा सनातनी ।
मा राजन् [2]मार्गमज्ञाय कदलीस्तम्भमारुह ॥ १९॥

राजा—

राष्ट्रं शिबीनामृद्धं वै शाधि पक्षिभिरर्चितः ।
कृत्स्नमेतन्मया दत्तं राजवद्विहगोत्तम ॥ २०॥

यद् वा कामयसे किञ्चिच् श्येन सर्वं ददानि ते ।
विनेमं पक्षिणं श्येन शरणार्थिनमागतम् ॥ २१॥

येनेमं स्थापयेथास्त्वं कर्मणा पक्षिसत्तम ।
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् ॥ २२॥

श्येनः—

उशीनर कपोते ते यदि स्नेहो नराधिप ।
[3]आत्मानं सुसमुत्कृत्य कपोततुलया धृतम् ॥ २३॥

[4]यदा समं कपोतेन तव मांसं नराधिप ।
त्वया प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ २४॥

राजा—

अनुग्रहमिमं मन्ये यन्मां श्येनाभिभाषसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् ॥ २५॥

---

1. ख-ग-घ—स्थिति
2. ख—मार्गमास्थाय कदर्यस्तम्भमारुह ; अ—सारतनं ज्ञात्वा
   घ—मार्गमज्ञाय + स्कन्धमासजः ।
3. क-ख-घ—आत्ममांसं समुद्धृत्य 4. क-ग—अर्धचतुष्टयं नास्ति

लोमशः—

अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय कपोतेन समं विभो ॥ २६॥

ध्रियमाणस्तु तुलया कपोतोऽत्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ॥ २७॥

न विद्यते यदा मांसं कपोतेन समं धृतम् ।
ततः प्रक्षीणमांसोऽसावारुरोह तुलां स्वयम् ॥ २८॥

श्येनः—

इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मं स्वम् इमं यज्ञमुपागतौ ॥ २९॥

यत्ते मांसानि गात्रेभ्यस् [1]समुत्कृत्तानि पार्थिव ।
एषा ते शाश्वती कीर्तिर् लोकानभिभविष्यति ॥ ३०॥

यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत् कीर्तिश्च लोकाश्च स्थास्यन्ति तव सर्वदा ॥ ३१॥

तत् पाण्डवेय [2]यजनं राज्ञस्तस्य महात्मनः ।
पश्यस्वैतन्मया सार्धं पुण्यं पापप्रणाशनम् ॥ ३२॥

---

1. क-ख-ग-घ—उत्कृत्तानि विशां पते
2. क-ख-ग-घ—सदनं

अत्रैव सततं देवा मुनयश्च तपोधनाः ।
दृश्यन्ते ब्राह्मणा राजन् पुण्यवद्भिर्महात्मभिः ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ षडधिकशततमोऽध्यायः ॥

लोमशेन श्वेतकेतोराश्रमं गतं युधिष्ठिरं प्रति अष्टावक्रोपाख्यानकथनारम्भः ॥ १ ॥ धनार्जनाय जनकपुरं गतस्य कहोलस्य वन्दिना वादे विजित्य जले विनिमज्जनम् ॥ २ ॥ तद्विदितवता तत्पुत्रेणाष्टावक्रेण श्वेतकेतुना सह जनकनगरं प्रति गमनम् ॥ ३ ॥

---

लोमशः—

य: कथ्यते मन्त्रविदग्र्यबुद्धिर्
औद्दालकिश्श्वेतकेतुः पृथिव्याम् ।
तस्याश्रमं पश्यत पाण्डवेयास्
सदाफलैरुपपन्नं महीजैः ॥ १

साक्षादत्र श्वेतकेतुर्ददर्श
सरस्वतीं मानुषदेहरूपाम् ।
वेत्स्यामि वाणीमिति सम्प्रवृत्तां
सरस्वतीं श्वेतकेतुर्बभाषे ॥ २

[1]यस्मिन् काले ब्रह्मविदां वरिष्ठा-
वास्तां तदा मातुलभागिनेयौ ।
अष्टावक्रश्चैव कहोलसूनुर्
औद्दालकिश्श्वेतकेतुश्च राजन् ॥ ३

विदेहराजस्य समीपतस्तौ
धीरावुभौ मातुलभागिनेयौ ।
प्रविश्य यज्ञायतनं विवादे
वन्दिं निजग्राहतुरप्रमेयौ ॥ ४

युधिष्ठिरः—

कथंप्रभावस्स बभूव विप्रस्
तथाविधं यो निजग्राह वन्दिम् ।
किञ्चाधिकृत्याथ तयोर्विवादो
विदेहराजस्य समीप आसीत् ॥ ५

[2]अष्टावक्रः केन चासौ बभूव
तत् सर्वं नो लोमशाचक्ष्व ब्रह्मन् ॥ ५॥

लोमशः—

उद्दालकस्य नियतश्शिष्य एको
नाम्ना कहोळेति बभूव राजन् ।

1. क—अर्धद्वयं नास्ति
2. क-ग-व—नास्तीदमर्धम्

शुश्रूषुराचार्यवशानुवर्ती
दीर्घं कालं ह्यऽध्ययनं चकार ॥ ६॥

[1]तं वै विप्राः पर्यभवंस्तु शिष्यास्
तं च ज्ञात्वा विप्रकारं गुरुस्सः ।
तस्मै प्रादात् सद्य एव श्रुतं च
भार्यां च वै दुहितरं स्वां सुजाताम् ॥ ७॥

तस्यां गर्भस्समभवदग्निकल्पस्
सोऽधीयानं पितरमथाभ्युवाच ।
सर्वां रात्रीरध्ययनं करोषि
नेदं पितस्सम्यगतीव वर्तते ॥ ८॥

उपालब्धश्शिष्यमध्ये महर्षिस्
स तं कोपादुदरस्थं शशाप ।
यस्मात् कुक्षौ वर्तमानो ब्रवीषि
तस्माद्वक्रो भविता[2]स्यष्टधा त्वम् ॥ ९॥

स वै तथा वक्र [3]एवोपजातस्
त्वष्टावक्रः प्रथितो मानवेषु ।

1. इदमर्धं नास्ति
2. क-ख-ग-घ—ह्यष्टकृत्वः
3. क-ख-ग—एवाभ्यजायद् अष्टावक्रः
घ—स वै यथा पितृशापोऽभ्यजायात् अष्टावक्रः

[1]तस्यासीद्वै मातुलश्श्वेतकेतुस्
　　स तेन तुल्यो वयसा बभूव ॥　　१०॥

सम्पीड्यमाना तु तदा सुजाता
　　विवर्धमानेन सुतेन कुक्षौ ।
उवाच भर्तारमिदं रहोवचः
　　प्रसाद्य हीना वसुना धनार्थिनी ॥　　११॥

सुजाता—

कथं करिष्याम्यधुना महर्षे
　　मासश्चायं दशमो वर्तते मे ।
न चास्ति मे वसु किञ्चित् प्रदाता
　　येनाहमेतामापदं निस्तरेयम् ॥　　१२॥

लोमशः—

उक्तस्त्वेवं भार्यया वै कहोळो
　　वित्तस्यार्थे जनकमथाभ्यधावत् ।
स वै तदा वेदविदा निगृह्य
　　निमज्जितो वन्दिना ह्यप्सु विप्रः ॥　　१३॥

उद्दालकस्तं तु तदा निशम्य
　　सूतेन वादेऽप्सु [2]ततो निमज्जितः ।

---

1. अ—इदमर्धं नास्ति
2. क-ख-ग-व—तदा निमज्जितम्

उवाच तां तत्र ततस्सुजाताम्
अष्टावक्रं ग्राहितव्योऽयमर्थः ॥ १४॥

ररक्ष [1]माताऽप्यनिशं स्म मन्त्रं
जातोऽप्येवं न स शुश्राव विप्रः ।
उद्दालकं पितरं सोऽभिमेने
तथाऽष्टावक्रो भ्रातरं श्वेतकेतुम् ॥ १५॥

ततो वर्षे द्वादशे श्वेतकेतुर्
अष्टावक्रं पितुरङ्के निषण्णम् ।
अपाकर्षद्गृह्य पाणौ रुदन्तं
नायं तवाङ्कः पितुरित्युक्तवांश्च ॥ १६॥

तत्तेनोक्तं [2]रुदितस्सोऽभिवीक्ष्य
हृदि स्थितं शल्यमिवातिदुःखात् ।
गत्वा गृहं रोदमानो जनित्रीं
पप्रच्छैनां क्व नु तातो ममेति ॥ १७॥

ततस्सुजाता परमार्तरूपा
शापाद्भीता तत्त्वमस्याचचक्षे ।

1. क—सा चापतितं सुमन्त्रं घ—सा चापि ततस्स्म तत्र
ख-ग—ररक्ष सा चाप्यथ तं सुमन्त्रं
2. क-ख-ग—दुश्चरितं तदानीं + तस्य सुदुःखमासीत्
गृहं गत्वा मातरं सोऽथ विप्रः । पप्रच्छेदं

तद्वै तत्त्वं सर्वमाज्ञाय रात्रा-
विल्यब्रवीच्छ्वेतकेतुं स विप्रः ॥ १८॥

विप्रः—

गच्छाव यज्ञं जनकस्य राज्ञो
बह्वाश्चर्यश्श्रूयते यस्य यज्ञे ।
श्रोष्यावोऽत्र ब्राह्मणानां विवादम्
अन्नं चाग्र्यं तत्र भोक्ष्यावहे च ॥ १९॥

विचक्षणत्वं च भविष्यते नौ
शिवश्च सौम्यश्च हि ब्रह्मघोषः । २०

लोमशः—

तौ जग्मतुर्मातुलभागिनेयौ
यज्ञं समृद्धं जनकस्य राज्ञः ॥ २०॥
अष्टावक्रः पथि राज्ञा समेत्य
उत्सार्यमाणो वाक्यमिदं [1]जगाद ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

1. क-ख-ग-घ—बभाषे

## ॥ सप्ताधिकशततमोऽध्यायः ॥

श्वेतकेतुना सह जनकयज्ञशालां विविक्षोरष्टावक्रस्य द्वारपालेन निरोधनम् ॥ १ ॥ अष्टावक्रद्वारपालयोस्संवादः ॥ २ ॥ स्वप्रश्नस्योत्तरदानतुष्टेन राज्ञा सभाप्रवेशानुमतिः ॥ ३ ॥

---

अष्टावक्रः—

अन्धस्य पन्था बधिरस्य पन्थाः
स्त्रियः पन्था [1]वैवधिकस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य
समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ १

राजा—

पन्था अयं ते हि मया विसृष्टो
येनेच्छसे तेन कामं व्रजस्व ।
न पावको विद्यते वै लघीयान्
इन्द्रोऽपि नित्यं नमते ब्राह्मणानाम् ॥ २

लोमशः—

स एवमुक्तो मातुलेनैव सार्धं
यथेष्टमार्गो यज्ञनिवेशनं तत् ।
सम्प्राप्य धर्मेण निवारितस्सन्
द्वारि द्वाःस्थं वाक्यमिदं बभाषे ॥ ३

---

1. क–ख–ग–घ—वै पथिकस्य

अष्टावक्रः—

यज्ञं द्रष्टुं प्राप्तवन्तौ स्म तात
कौतूहलं बलवद्वै विवृद्धम् ।
आवां प्राप्तावतिथी [1]सम्प्रवेशं
काङ्क्षावहे द्वारपते तवाज्ञाम् ॥ ४

ऐन्द्रद्युम्नेर्यज्ञदृशाविहावां
विवक्षू वै जनकेन्द्रं दिदृक्षू ।
न वै [2]क्रुध्यो वन्दिना चोत्तमेन
संयोजय द्वारपाल क्षणेन ॥ ५

द्वारपालः—

वन्देस्समादेशकरा वयं स्म
निबोध मद्वाक्यमतोऽधिगम्य ।
न वै बालाः प्रविशन्त्यत्र वृद्धा
विप्रा ह्यत्र प्रविशन्ति द्विजाग्र्याः ॥ ६

अष्टावक्रः—

यद्यत्र वृद्धेषु कृतः प्रवेशो
युक्तं मया द्वारपाल प्रवेष्टुम् ।
वयं हि वृद्धाश्चरितव्रताश्च
तपः प्रभावेन निवेशनार्हाः ॥ ७

---

1. क-ख-ग-घ—सम्प्रवेष्टुं
2. ख—क्रुद्धोऽब्रवीद्याधिनेचोत्तमेन संयोजयन् द्वारपालः क्षणेन ।
घ—क्रोधो  [ पाठान्तरम् ]

शुश्रूषवश्चैव जितेन्द्रियाश्च
ज्ञानागमे चैव परं निविष्टाः ।
न बाल इत्यवमन्तव्यमाहुर्
बालोऽप्यग्निर्दहते स्पृश्यमानः ॥ ८

द्वारपालः—
[1]सरस्वतीमीरय वेदजुष्टाम्
एकाक्षरां ब्रह्मरूपां विराजाम् ।
अङ्गात्मानं समवेक्षस्व बालं
किं श्लाघसे दुर्लभा वादसिद्धिः ॥ ९

अष्टावक्रः—
न ज्ञायते कायवृद्ध्या विवृद्धिर्
यथाऽष्ठीला शाल्मलेस्सम्प्रवृद्धाः ।
ह्रस्वोऽल्पकायो ज्वलितः प्रवृद्धो
यश्चाफलस्तस्य नो वृद्धभावः ॥ १०

द्वारपालः—
[2]वृद्धेभ्य एवेह मतिं स्म बाला
गृह्णन्ति कालेन भवन्ति वृद्धाः ।
न हि ते ज्ञातुमल्पकालेन शक्यं
कस्माद्बालः प्राज्ञ इवावभाषे ॥ ११

1. ख—अर्धचतुष्टयं नास्ति
2. ख—अर्धद्वयं नास्ति

अष्टावक्रः—

न तेन स्थविरो भवति येनास्य पलितं शिरः ।
बालोऽपि यः प्रजानाति तं देवास्स्थविरं विदुः ॥ १२

न हायनैर्न पलितैर् न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानस्स नो महान् ॥ १३

दिदृक्षुरस्मि सम्प्राप्तो वन्दिनं राजसंसदि ।
निवेदयस्व मां राज्ञे द्वास्थ पुष्करमालिने ॥ १४

श्वेतकेतुः—

[1]द्रष्टासि ते द्वारपाल प्रवेश्य
मनीषिभिस्सह वादे प्रवृद्धे ।
उताहो वाऽप्युच्चतां नीचतां वा
तूष्णीम्भूतेष्वेषु सर्वेष्वथाद्य ॥ १५

द्वारपालः—

[2]कथं यज्ञं दशवर्षो विशेस्त्वं
विनीतानां विदुषां सम्प्रवेशम् ।
उपायतः प्रयतिष्ये तवाहं
प्रवेशने कुरु यत्नं यथावत् ॥ १६

---

1. ख—दृष्टाऽऽवयोर्वदतोर्द्वारपाल मनीषिभिस्सह वादे विवृद्धे ।
क-ग—दृष्टासि ह्यावयोर्वाऽपि पादान्मनीषिभिस्सह वादे विवृद्धे ।
घ—द्रष्टाद्यास्मादावयोर्द्वारपाल मनीषिभिस्सह वा वेदवृद्धैः ।

2. घ—अर्धद्वयं नास्ति

एष राजा संश्रवणे स्थितस्स्याघ्
[1]श्रोष्यत्येवं वचसा संस्कृतेन ।
[2]स चानुज्ञां दास्यति प्रीतियुक्तः
प्रवेशने यच्च किञ्चित्तवेष्टम् ॥ १७

अष्टावक्रः—

भो भो राजन् जनकानां वरिष्ठ
त्वं वै सम्राट् त्वयि सर्वं समृद्धम् ।
त्वं हि कर्ता कर्मणां याज्ञियानां
ययातिरेको नृपतिर्वा पुरस्तात् ॥ १८

विद्वान् वन्दी वादविदो निगृह्य
वादे भग्नानप्रतिशङ्कमानः ।
त्वया निसृष्टैः पुरुषैराप्तकृद्भिर्
जले सर्वान् मज्जयतीति नश्श्रुतम् ॥ १९

स तच्छ्रुत्वा ब्राह्मणानां समीपाद्
ब्रह्माद्य वै कथयितुमागतोऽस्मि ।
क्वासौ वन्दी यावदेनं समेत्य
नक्षत्राणीव सविता नाशयामि ॥ २०

---

1. क-ख—स्तैः स्तुह्येनं त्वं ग—स्ते घ—स्स स्तुह्येवैनं
2. घ—स ते द्वारं दास्यति प्रीतियुक्तः प्रयच्छते यच्च । [पाठान्तरम्]

राजा—

आशंससे वन्दिनं त्वं विजेतुं
　　न च ज्ञात्वा वाक्यबलं त्वमस्य ।
विज्ञातवीर्यैश्शक्यमेवं प्रवक्तुं
　　दृष्टश्चासौ ब्राह्मणैर्वादशीलैः ॥　　२१

[1]आशंसमाना वन्दिनं वै कुमारा
　　अविज्ञानात्ते ह्यशक्ता विजेतुम् ।
समागता ब्राह्मणास्तेन पूर्वं
　　न शोभन्ते भास्करेणेव ताराः ॥　　२२

[2]आशानुबन्धो हि तवात्र यत्तत्
　　स वन्दिमासाद्य तथा विनश्यति ।
विज्ञानवन्तो निकृतास्तु तात
　　कथं सदस्तर्तुमिदं समर्थः ॥　　२३

अष्टावक्रः—

विवादितोऽसौ न तु मादृशैर्हि
　　सिंहीकृतस्तेन वदत्यभीतः ।
समेत्य मां निहतश्शेष्यतेऽद्य
　　मार्गे भग्नं शकटमिवाबलाक्षम् ॥　　२४

राजा—

षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।

---

1. अ-क-ख—अर्धचतुष्टयं नास्ति　　2. ख—इदमर्धं नास्ति

कश्चित्षष्टिशतारस्य वेदार्थं स परः कविः ॥ २५

अष्टावक्रः—

चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि ।
तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ २६

राजा—

बडबे इव संयुक्ते श्येनपाते दिवौकसाम् ।
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ २७

अष्टावक्रः—

मा स्म भूस्त्वगृहे राजञ् शात्रवाणामपि ध्रुवम् ।
वातसारथिराधत्ते गर्भं सुषुवतुश्च तम् ॥ २८

राजा—

[1]किं स्वित् सुप्तो न निमिषेत् किं स्विज्जातं न चेङ्गते ।
कस्य स्विद्धृदयं नास्ति किं स्विद्वेगेन वर्धते ॥ २९

अष्टावक्रः—

मत्स्यस्सुप्तो न निमिषत्यण्डं जातं न चेङ्गते ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ३०

राजा—

न त्वां मन्ये मानुषं देवसत्त्व
न त्वं बालस्स्थविरस्त्वं मतो मे ।

1. क—अर्धचतुष्टयं नास्ति

न ते तुल्यो विद्यते वाक्प्रलापे
तस्माद्द्वारं वितराम्येष विद्वन् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

[ अस्मिन्नध्याये ३१ श्लोकाः ]

## ॥ अष्टाधिकशततमोऽध्यायः ॥

अष्टावक्रेण वादे वन्दिनः पराजयः ॥

अष्टावक्रः—

अत्रोग्रसेनसमितेषु राजन्
समागमेष्वप्रतिमेषु राजसु ।
न मे विवित्सान्तरमस्ति वादिनां
महाजने हंसनिनादिनामिव ॥ १

[1]न मोक्ष्यसे वै वदमानो निमज्जन्
जलं प्रपन्नस्सरितामिवाध्वगः ।

1. अ—नास्तीदमर्धम्

हुताशनस्येव समिद्धतेजसस्
स्थिरो भवस्वेह ममाद्य वन्दिन् ॥ २

वन्दी—

व्याघ्रं शयानं प्रतिबोधयित्वा
आशीविषं सृक्किणी लेलिहानम् ।
पदा हतस्येव शिरोऽभिहत्य
तदा दष्टो मोक्ष्यसे तन्निबोध ॥ ३

यो वै दर्पात् संहननोपपन्नस्
सुदुर्बलः पर्वतमाविहन्ति ।
तस्यैव पाणिस्सनखो विदीर्यते
न वापि शैलस्य तु दृश्यते व्रणः ॥ ४

अष्टावक्रः—

सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः ।
निकर्षभूता राजानो वत्सा अनडुहो यथा ॥ ५

लोमशः—

अष्टावक्रस्समितौ गर्जमानो
जातक्रोधो वन्दिनमाह राजन् ।
उक्ते वाक्ये चोत्तरं मे ब्रवीहि
वाक्यस्य चाप्युत्तरं ते ब्रवीमि ॥ ६

वन्दी—

एक एवाग्निर्बहुधा समिध्यते
　　एकस्सूर्यस्सर्वमिदं प्रभासते ।
एको वीरो देवराजो नियन्ता
　　यमः पितॄणामीश्वरश्चैक एव ॥　　७

अष्टावक्रः—

द्वाविन्द्राग्नी चरतो वै सखायौ
　　द्वौ देवर्षी नारदः पर्वतश्च ।
द्वावश्विनौ द्वे च रथस्य चक्रे
　　भार्यापती द्वौ विहितौ विधात्रा ॥　　८

वन्दी—

त्रिस्सूयते कर्मणा वै प्रजेयं
　　त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवनानि तन्वते
　　त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥　　९

अष्टावक्रः—

चतुष्टयं ब्राह्मणानां निकेतं
　　चत्वारो युक्ता यज्ञमिमं वहन्ति ।
दिशश्चतस्रश्चतुरश्च [1]वेदाश्
　　चतुष्पदा गौरपि शश्वदुक्ता ॥　　१०

---

1. अ-क-घ—वर्णा

बन्दी—

पञ्चाग्नयः पञ्चपदा च पङ्क्तिर्
यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि ।
दृष्टा ह्येते पञ्चचूडाश्च पञ्च
लोके ख्यातं पञ्चनदं च पुण्यम् ॥ ११

अष्टावक्रः—

षडाधाने दक्षिणा आहुरेके
षडेते ऋतवः कालचक्रं तथैव ।
षडिन्द्रियाण्युत षट् कृत्तिकाश्च
षडेव यज्ञास्सर्ववेदेषु सिद्धाः ॥ १२

बन्दी—

सप्त ग्राम्याः पशवस्सप्त वन्यास्
सप्तच्छन्दांसि क्रतुमेकं वहन्ति ।
सप्तर्षयस्सप्त चाप्यर्हणानि
सप्ततन्त्री प्रथिता चैव वीणा ॥ १३

अष्टावक्रः—

अष्टौ दिगीशानन्यतमान् वदन्ति
तथाऽष्टपादश्शरभस्सिंहघाती ।
अष्टौ वसून् शुश्रुम देवतासु
यूपोऽष्टाश्रः विहितश्च यज्ञे ॥ १४

वन्दी—

[1]नव वेदोक्तास्सामिधेन्यः पितॄणां
तथा प्राहुर्नवयोगं विसर्गम् ।
नवाक्षरा बृहती सम्प्रदिष्टा
नवैव योगो गणनामेति शश्वत् ॥ १५

अष्टावक्रः—

दिशो दशोक्ताः पुरुषस्य लोके
सहस्रमाहुर्दशपूर्णं शतानि ।
दशैव मासान् बिभ्रति गर्भवत्यो
दशैरका दश दाशा दशार्णाः ॥ १६

वन्दी—

एकादशैकादशिनः पशूनाम्
एकादशैवात्र भवन्ति यूपाः ।
एकादश प्राणभृतां विकारा
एकादशोक्ता दिवि देवेषु रुद्राः ॥ १७

अष्टावक्रः—

संवत्सरं द्वादशमासमाहुर्
जगत्याः पादो द्वादशैवाक्षराणि ।
द्वादशाहः प्राकृतो यज्ञ उक्तो
द्वादशादित्यान् कथयन्तीह विप्राः ॥ १८

1. क-ख-ग—नवैवोक्ताः

वन्दी—

त्रयोदशी तिथिरुक्ता महोग्रा
त्रयोदशद्वीपवती मही च ॥ १८॥

लोमशः—

एतावदुक्त्वा विरराम वन्दी
श्लोकस्यार्धं व्याजहाराष्टवक्रः ॥ १९

अष्टावक्रः—

त्रयोदशाहानि ससार केशी
त्रयोदशादीन्यतिच्छन्दांसि चाहुः ॥ १९॥

लोमशः—

ततो महानुदतिष्ठन्निनादस्
तूष्णीम्भूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानीम्
अष्टावक्रं चाप्युदीर्यन्तमेव ॥ २०॥

तस्मिंस्तथा सङ्कुले वर्तमाने
स्फीते यज्ञे जनकस्याथ जग्मुः ।
अष्टावक्रं पूजयन्तोऽभ्युपेयुर्
विप्रास्सर्वे प्राञ्जलयः प्रतीताः ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]

---

## ॥ नवाधिकशततमोऽध्यायः ॥



जलमज्जितेषु सर्वविप्रेषु समुत्थितेषु अष्टावक्रेण स्वपित्रा कहोलेन मातुलेन च सह स्वाश्रमगमनम् ॥



अष्टावक्रः—

अनेनैव ब्राह्मणाश्शुश्रुवांसो
वादे जित्वा सलिले मज्जिताः किल ।
तानेव धर्मानयमद्य वन्दी
प्राप्नोतु गृह्याशु निमज्जयैनम् ॥ १

वन्दी—

अहं पुत्रो वरुणस्योत राज्ञस्
तत्रास सत्रं द्वादशवार्षिकं वै ।
सत्रेण ते जनक तुल्यकालं
तदर्थं ते प्रहिता मे द्विजाग्र्याः ॥ २

ते तु सर्वे वरुणस्योत राज्ञो
द्रष्टुं गता यज्ञमायान्ति भूयः ।
अष्टावक्रं पूजयेः पूजनीयं
यस्य हेतोर्जनितारं समेष्ये ॥ ३

अष्टावक्रः—

विप्रास्समुद्राम्भसि मज्जिता ये
वाचा जिता मेधया संविदानाः ।
[1]तां मेधया वाचमसौ जहार
यथा वाचमवचिन्वन्ति सन्तः ॥ ४

[2]अग्निर्दहञ्जातवेदा गृहान् वै
विसर्जयँस्तेजसा नाप्यधाक्षीत् ।
बालेषु पुत्रेषु कृपणं वदत्सु
तथा वाचमवचिन्वन्त्यसन्तः ॥ ५

[3]श्लेष्मातकी क्षीणवर्चाऽशृणोषि
उताहो त्वां स्तुतयो मोहयन्ति ।
हस्तीव त्वं जनक वितुद्यमानो
न मामिकां वाचमिमां शृणोषि ॥ ६

जनकः—

शृणोमि वाचं तव सत्यरूपाम्
अमानुषीं दिव्यरूपोऽसि साक्षात् ।
अजैषीर्यद्बन्दिनं त्वं विवादे
निसृष्ट एष क्षतकामोऽस्तु वन्दी ॥ ७

1. ख—अर्धचतुष्टयं नास्ति
2. ग—अर्धद्वयं नास्ति
3. अ-ख—नास्तीदमर्धम्

अष्टावक्रः—

नानेन जीवता कश्चिद् अर्थो मे वन्दिना नृप ।
पिता यद्यस्य वरुणो मज्जयैनं जलाशये ॥ ८

वन्दी—

अहं पुत्रो वरुणस्योत राज्ञो
न मे भयं विद्यते मज्जितस्य ।
इमं मुहूर्तं पितरं द्रक्ष्य[1]तेऽयं
अष्टावक्रश्चिरनष्टं कहोळम् ॥ ९

लोमशः—

ततस्ते पूजिता विप्रा वरुणेन महात्मना ।
उदतिष्ठंस्ततस्सर्वे जनकस्य समीपतः ॥ १०

कहोलः—

इत्यर्थमिच्छन्ति सुतान् जना जननकर्मणा ।
यदहं नाशकं कर्तुं तत्पुत्रः कृतवानिति ॥ ११
उताबलस्य बलवान् उत बालस्य पण्डितः ।
उत वाऽविदुषो विद्वान् पुत्रो जनक जायते ॥ १२

वन्दी—

[2]शितेन ते परशुना स्वयमेवान्तको नृप ।
शिरांस्यपाहरत्वाजौ रिपूणां भद्रमस्तु ते ॥ १३
महदुक्थ्यं गीयते साम चाग्र्यं
सम्यक् सोमः पीयते चात्र सत्रे ।

1. च—से त्वम्
2. ख—अर्धचतुष्टयं नास्ति

शुचीन् भागान् प्रतिजगृहुश्च हृष्टास्
साक्षाद्देवा जनकस्येव यज्ञे ॥ १४

लोमशः—

समुत्थितेष्वथ सर्वेषु राजन्
विप्रेषु तेष्वधिकं सुप्रभेषु ।
अनुज्ञातो जनकेनेह राज्ञा
विवेश तोयं सागरस्यैव वन्दी ॥ १५

अष्टावक्रः पितरं पूजयित्वा
सम्पूजितो ब्राह्मणैस्तैर्यथावत् ।
प्रत्याजगामाश्रममेव हृष्टो
जित्वा वन्दिं सहितो मातुलेन ॥ १६

अत्र कौन्तेय सहितो भ्रातृभिस्त्वं
सुखोषितस्सह विप्रैः प्रतीतः ।
पुण्यान्यन्यानि शुचिकर्मैकबुद्धिर्
मया सार्धं चरितास्याजमीढ ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

## ॥ दशाधिकशततमोऽध्यायः ॥

लोमशेन रैभ्याश्रमं गतं युधिष्ठिरं प्रति यवक्रीतोपाख्यानकथनारम्भः॥ १ ॥ भरद्वाजपुत्रेण यवक्रीतेन स्वपितृमित्रे रैभ्ये तत्पुत्रयोरर्वावसुपरावस्वो-श्चासूयया विनैवोपदेशं वेदाधिगमाय इन्द्रं प्रति तश्चरणम् ॥ २ ॥ इन्द्र-निवारितेनापि यवक्रीतेन बलात्कारेण तस्माद्वरग्रहणम् ॥ ३ ॥ भरद्वाजेन लब्धवरं यवक्रीतं प्रति।गर्वेण रैभ्यपीडाप्रतिषेधाय बालध्युपाख्यानकथ-नम् ॥ ४ ॥

लोमशः—

एषा [1]मधुबिला नाम सा गङ्गैषा प्रकाशते ।
[2]एतत् कर्मबलिं नाम भरतस्याभिषेचनम् ॥ १

अलक्ष्म्या किल [3]संधृत्तो धृत्रहन्ता शचीपतिः ।
आप्लुतस्सर्वपापेभ्यस् स गङ्गायां प्रमुच्यते ॥ २

एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ ।
अदितिर्यत्र पुत्रार्थं तदन्नमपचत् पुरा ॥ ३

एनं पर्वतराजेन्द्रम् आरुह्य पुरुषर्षभ ।
अयशस्यामसह्यां च अलक्ष्मीमपनेष्यसि ॥ ४

एते कनखला राजन्नृषीणां दयिता नगाः ॥ ४॥

---

1. ख—इदमर्धं नास्ति क-ग—मधुवहा नाम समाङ्गासं
   घ—मधुबिला नाम समन्तात् सं
2. क-ख—एतन्मधुबिलं नाम ग-घ—एतत्कर्दमिलं
3. क-ख-ग-घ—संयुक्तो वृत्रं हत्वा

एषा प्रकाशते गङ्गा युधिष्ठिर यशस्विनी ।
सनत्कुमारो भगवान् अत्र सिद्धिमगात् पुरा ॥ ५॥

आजमीढावगाह्यैनां सर्वपापैः प्रमुच्यसे ॥ ६

अपां ह्रदं च पुण्याख्यं भृगुतुन्दं च पर्वतम् ।
तूष्णीं गङ्गां च कौन्तेय सानुजस्समुपस्पृश ॥ ७

आश्रमस्स्थूलशिरसो रमणीयः प्रकाशते ।
अत्र मानं च कौन्तेय क्रोधं चैव विसर्जय ॥ ८

एष रैभ्याश्रमश्श्रीमान् पाण्डवेय प्रकाशते ।
भारद्वाजः कविर्यत्र यवक्रीतो व्यनश्यत ॥ ९

युधिष्ठिरः—

कथं युक्तोऽभवदृषिर् भारद्वाजः प्रतापवान् ।
किमर्थं च यवक्रीत ऋषिपुत्रो व्यनश्यत ॥ १०

एतत् सर्वं यथावृत्तं श्रोतुमिच्छामि लोमश ।
[1]कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ॥ ११

लोमशः—

भारद्वाजश्च रैभ्यश्च सखायौ सम्बभूवतुः ।
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरम् ॥ १२

रैभ्यस्य तु सुतावास्ताम् अर्वावसुपरावसू ।

---

1. ख—इदमर्धं नास्ति

आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ १३

रैभ्यो विद्वान् सहापत्यस् तपस्यविरतोऽभवत् ।
तयोश्चाप्यतुला प्रीतिर् अभवद्भरतर्षभ ॥ १४

यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् ।
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रौ च भारत ॥ १५

पर्यतप्यत तेजस्वी मन्युनाऽभिपरिप्लुतः ।
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ १६

सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ।
जनयामास सन्तापम् इन्द्रस्य सुमहातपाः ॥ १७

तत इन्द्रो यवक्रीतम् उपगम्य युधिष्ठिर ।
अब्रवीत् कस्य हेतोस्त्वम् आस्थितस्तप उत्तमम् ॥ १८

यवक्रीतः—

द्विजाना[1]मनधीता वै वेदास्सुरगणार्चित ।
प्रतिभान्त्विति तस्याहम् इदं परमकं तपः ॥ १९

स्वाध्यायार्थं समारम्भो ममायं पाकशासन ।
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥ २०

कालेन महता वेदाश् शक्या गुरुमुखाद्विभो ।

---

1. व—मनधीयानां वेदास्संप्रतिभान्त्विति
देवदेवेह तप्येऽहं [पाठान्तरम्]

प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ २१

इन्द्रः—

अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि ।
किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ २२

लोमशः—

एवमुक्त्वा गतश्शक्रो यवक्रीरपि भारत ।
भूय एवाकरोद्यत्नं तपस्यामितविक्रमः ॥ २३

घोरेण तपसा राजंस् तप्यमानो महातपाः ।
सन्तापयामास भृशं देवराजमिति श्रुतिः ॥ २४

तं तथा तप्यमानं तु तपस्तीव्रं महाद्युतिः ।
उपेत्य बलभिद्देवो वारयामास वै प्रभुः ॥ २५

इन्द्रः—

अशक्योऽर्थस्समारब्धो नैतद्बुद्धिकृतं तव ।
[1]प्रतिभास्यन्ति वै वेदास् तव चैव पितुश्च ते ॥ २६

यवक्रीतः—

न चैतदेवं क्रियते देवराज समीप्सितम् ।
महता नियमेनाहं तप्स्ये घोरतरं तपः ॥ २७

समिद्धेऽग्नावहमुत्कृत्य चाङ्गं
होष्यामि घोरं मघवंस्तन्निबोध ।

---

1. क—नास्तीदमर्धम्

यद्येतदेवं न करोषि कामं
ममेप्सितं देवराजेह सर्वम् ॥ २८

लोमशः—

निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः ।
प्रतिवारणहेत्वर्थं बुद्ध्या सञ्चिन्त्य बुद्धिमान् ॥ २९

तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य महात्मनः ।
अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः ॥ ३०

[1]यवक्रीतस्य यत्तीर्थम् उचितं शौचकर्मणि ।
भागीरथ्यां तत्र सेतुं वालुकाभिस्सुरेश्वरः ॥ ३१

[2]यदाऽस्य वदतो वाक्यं नैव चक्रे द्विजोत्तमः ।
वालुकाभिस्ततश्शक्रो गङ्गां समभिपूरयन् ॥ ३२

वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्जयत् ॥ ३२॥
[3]स्नातुमभ्यागतं शक्रो यवक्रीतमदर्शयत् ॥ ३३

तं ददर्श यवक्रीतो यत्नवन्तं निबन्धने ।
प्रहसंश्चाब्रवीद्वाक्यम् इदं स मुनिपुङ्गवः ॥ ३४

यवक्रीतः—

किमिदं वर्तते ब्रह्मन् किञ्च ते ह चिकीर्षितम् ।
अतीव हि महान् यत्नः क्रियतेऽयं निरर्थकः ॥ ३५

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति
3. अ—नास्तीदमर्धम्

इन्द्रः—

बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति ।
क्लिश्यते हि जनस्तात तरमाणः पुनःपुनः ॥ ३६

यवक्रीतः—

नायं शक्यस्त्वया बद्धुं महानोघः कथञ्चन ।
[1]अशक्येऽभिनिवर्तस्व शक्यमर्थं समाचर ॥ ३७

इन्द्रः—

यथैव भवता चेदं तपो वेदार्थमुद्यतम् ।
अशक्यं तद्वदस्माभिर् अयं भारस्समुद्यतः ॥ ३८

यवक्रीतः—

यथा तव निरर्थोऽयम् आरम्भस्त्रिदशेश्वर ।
तथा यदि ममापीदं मन्यसे पाकशासन ॥ ३९

क्रियतां यद्भवेच्छक्यं त्वया सुरगणेश्वर ।
वरांश्च मे प्रयच्छान्यान् यैर्विद्वान् भवितास्म्यहम् ॥ ४०

लोमशः—

तस्मै प्रादाद्वरानिन्द्र उक्तवान् यान् महातपाः ।
प्रतिभास्यन्तु ते वेदाः पित्रा सह यथेप्सितम् ॥ ४१

यच्चान्यन्मन्यसे कामं यवक्रीर्गम्यतामिति ।
स लब्धकामः पितरं समेत्येदं वचोऽब्रवीत् ॥* ४२

---

1. क—अर्धचतुष्टयं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यवक्रीतः—

प्रतिभासन्तु ते वेदास् तव जातस्य चोभयोः ।
अति चान्यान् भविष्यावो वरा लब्धास्तथा मया ॥ ४३

भरद्वाजः—

दर्पस्ते भविता तात वराँल्लब्ध्वा यथेप्सितान् ।
स दर्पपूर्णः कृपणः क्षिप्रमेव विनश्यसि ॥ ४४

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ऋषिरासीत् पुरा विप्रो बालधिर्नाम विश्रुतः ॥ ४५

स पुत्रशोकादुद्विग्नस् तपस्तेपे सुदुश्चरम् ।
भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः ॥ ४६

तस्य प्रसादो देवैश्च कृतो न त्वमरैस्समः ।
नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ॥ ४७

बालधिः—

यथेमे पर्वताश्शश्वत् तिष्ठन्ति सुरसत्तमाः ।
[1]तावज्जीवेन्मम सुतो निर्वाणमुत मे मतः ॥ ४८

भारद्वाजः—

तस्य पुत्रस्तदा जज्ञे मेधावी क्रोधनस्सदा ।
स तु लब्धवरो दर्पाद् ऋषींश्चैवावमन्यत ॥ ४९

विकुर्वाणो मुनीनां च चरमाणो महीमिमाम् ।

1. क-ख-ग-घ—अक्षयास्तन्निमित्तं मे सुतस्यायुर्भवेद्ध्रुवम् । [पाठान्तरम्]

आससाद महावीर्यं धनुषाक्षं मनीषिणम् ॥ ५०

तस्यापचक्रे मेधावी तं शशाप स वीर्यवान् ।
भव भस्मेति चोक्तस्स न भस्म समपद्यत ॥ ५१

धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम् ।
[1]निमित्तमस्य महिषैर् भेदयामास पर्वतान् ॥ ५२

स निमित्ते विनष्टे तु ममार सहसा शिशुः ।
तं मृतं पुत्रमादाय विललाप ततः पिता ॥ ५३

लालप्यमानं तं दृष्ट्वा मुनयः पुनरार्तवत् ।
ऊचुर्वेदोक्तया पूर्वं गाथां यां तां निबोध मे ॥ ५४

न दिष्टमर्थमत्येतुम् ईशो मर्त्यः कथञ्चन ।
महिषैर्भेदयामास महर्षिस्स महीधरान् ॥ ५५

एवं लब्ध्वा वरान् बाला दर्पपूर्णास्तपस्विनः ।
क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् ॥ ५६

एष रैभ्यो महावीर्यः पुत्रौ चास्य तथाविधौ ।
तान् यथा पुत्र नाभ्यैषीस् तथा कुर्यास्त्वतन्द्रितः ॥ ५७

स हि क्रुद्धस्समर्थस्त्वां पुत्र पीडयितुं रुषा ।
रैभ्यश्चापि तपस्वी च कोपनश्च महानृषिः ॥ ५८

---

1. ख—मुनिस्तत्कारणं ज्ञात्वा स्वयं महिषरूपधृत् ।
शृङ्गेणाद्रीनचलयत् ततोऽयं भस्मसादभूत् ॥ [अधिकः पाठः]

यवक्रीतः—

[1]एवं करिष्ये मा तापं तात कार्षीः कथञ्चन ।
यथा हि मे भवान् मान्यस् तथा रैभ्यो पिता मम ॥ ५९

लोमशः—

उक्त्वा च पितरं श्लक्ष्णं यवक्रीरकुतोभयः ।
विप्रकुर्वन्नृषीनन्यान् अतुष्यत वधान्मुदा ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[अस्मिन्नध्याये ६० श्लोकाः]

---

## ॥ एकादशाधिकशततमोऽध्यायः ॥

रैभ्याश्रमे तत्स्नुषायाः परावसुभार्याया दर्शनाज्जातकामेन यवक्रीतेन एकान्ते बलात्कारेण तदुपभोगः॥ १ रुदत्या तया निवेदितवृत्तान्तेन रैभ्येण यवक्रीतहननाय जटाभ्यां कृत्यारक्षसोत्सर्जनम् ॥ २ ॥ कृत्यया रूपसंपदा संमोह्य कमण्डलुहरणे राक्षसाभिद्रावितेन यवक्रीतेन स्वपितुरग्निहोत्रगृह-प्रवेशः ॥ ३ ॥ तदाऽन्धेन द्वारकशूद्रेण निवारितस्य यवक्रीतस्य राक्षसेन हननम् ॥ ४ ॥

---

लोमशः—

चङ्क्रम्यमाणस्स तदा[2]यवक्रीरकुतोभयः ।
जगाम माधवे मासि रैभ्याश्रमपदं प्रति ॥ १

---

1. ख—इदमर्धं नास्ति
2. अ-ख—यवक्रीतोऽकुतोभयः

स ददर्शाश्रमे पुण्ये पुष्पितद्रुमभूषिते ।
विचरन्तीं स्नुषां तस्य किन्नरीमिव भारत ॥ २

यवक्रीस्तामुवाचेदम् उपतिष्ठस्व भामिनि ।
निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ॥ ३

सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती ।
तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम ह ॥ ४

तत एकान्तमानीय लज्जयामास भारत ।
आजगाम तदा रैभ्यस् स्वमाश्रममरिन्दम ॥ ५

रुदतीं च स्नुषां दृष्ट्वा भार्यामार्तां परावसोः ।
सान्त्वयन् श्लक्ष्णया वाचा पर्यपृच्छद्युधिष्ठिर ॥ ६

सा तस्मै सर्वमाचष्ट यवक्रीतस्य भाषितम् ।
[1]प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तदाऽऽत्मना ॥ ७

तच्छ्रुत्वा तस्य रैभ्यस्य यवक्रीतस्य चेष्टितम् ।
दहन्निव तदा चेतः क्रोधस्समभवन्महान् ॥ ८

स तदा मन्युनाऽऽविष्टस् तपस्वी भृशकोपनः ।
अवलुप्य जटामेकां जुहावाग्नौ सुसंस्कृते ॥ ९

ततस्समभवन्नारी तस्या रूपेण सम्मिता ।
अवलुप्यापरां चाथ जुहावाग्नौ जटां पुनः ॥ १०

---

1. ख—इदमर्धं नास्ति

ततस्समभवद्रक्षो दीप्तास्यं घोरदर्शनम् ।
अब्रूतां तु तदा रैभ्यं किं कार्यं करवामहे ॥ ११

तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति ।
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया ॥ १२

ततस्सा समुपास्थाय कृत्या सृष्टा महात्मना ।
कमण्डलुं जहारास्य मोहयित्वा च भारत ॥ १३

उच्छिष्टं तु यवक्रीतम् अपकृष्टकमण्डलुम् ।
तत उद्यतशूलोऽसौ राक्षसस्समुपाद्रवत् ॥ १४

तमापतन्तं सम्प्रेक्ष्य शूलहस्तं जिघांसया ।
यवक्रीस्सहसोत्थाय प्राद्रवद्यत्र वै सरः ॥ १५

जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितं पुनः ।
जगाम सरितस्सर्वास् ताश्चाप्यासन् विशोषिताः ॥ १६

स काल्यमानो घोरेण शूलहस्तेन रक्षसा ।
अग्निहोत्रे पितुर्भीतस् सहसा समुपाद्रवत् ॥ १७

स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा ।
निगृहीतो बलाद्द्वारि सोऽतिष्ठत् तत्र पार्थिव ॥ १८

निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ।
ताडयामास शूलेन स भिन्नहृदयोऽपतत् ॥ १९

यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत् ।
अनुज्ञातस्तु रैभ्येण तया नार्या सहावसत् ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[अस्मिन्नध्याये २० श्लोकाः]

---

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

द्वाररक्षकशूद्रेण निवेदितपुत्रमरणेन भरद्वाजेन रैभ्यस्यापि ज्येष्ठसुतेन हननरूपशापदानम् ॥ १ ॥ पुत्रमरणदुःखितेन भरद्वाजेन तद्देहदहनपूर्वकमग्नौ प्रवेशः ॥ २ ॥

---

लोमशः—

भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम् ।
समित्कलापमादाय प्रविवेश स्वमाश्रमम् ॥ १

तं स्म सर्वे पुरा दृष्ट्वा प्रत्युत्तिष्ठन्ति पावकाः ।
न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाऽग्नयः ॥ २

[1]वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः ।
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥ ३

भरद्वाजः—

किं नु मे नाग्नयश्शूद्र प्रतिनन्दन्ति दर्शनम ।

---

1. ख—पुत्रमृत्युकृताशौचं भरद्वाजो न जज्ञिवान् । [अधिकः पाठः]

त्वं चापि न यथापूर्वं कच्चित् क्षेममिहाश्रमे ॥ ४

कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः ।
[1]एतदाचक्ष्व मे शीघ्रं न हि शुद्ध्यति मे मनः ॥ ५

शूद्रः—

रैभ्यं गतो नूनमसौ सुतस्ते मन्दचेतनः ।
तथा हि निहतश्शेते राक्षसेन बलीयसा ॥ ६

[2]प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा ।
अग्न्यगारं प्रति द्वारि मया दोर्भ्यां निवारितः ॥ ७

ततस्स निहतो ह्यत्र जलकामोऽशुचिर्ध्रुवम् ।
[3]सन्ताडितो हि तूर्णं स शूलहस्तेन रक्षसा ॥ ८

लोमशः—

भरद्वाजस्तु शूद्रस्य तच्छ्रुत्वा विप्रियं महत् ।
गतासुं पुत्रमादाय विललाप सुदुःखितः ॥ ९

भरद्वाजः—

ब्राह्मणानां हितार्थाय ननु त्वं तप्तवांस्तपः ।
द्विजानामनधीता वै वेदास्सम्प्रतिभान्त्विति ॥ १०

तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु ।
अनागास्सर्वभूतेषु कर्कशत्वमुपेयिवान् ॥ ११

प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् ।

---

1. क-घ—अर्धद्वयं नास्ति  2. क-ग—नास्तीदमर्धम्
3. क-ग-घ—सम्पातितो हि तूर्णेन ; ख—संभावितो हि तूर्णेन

गतवानेव तं क्षुद्रं कालान्तकयमोपमम् ॥ १२

यस्स जानन् महातेजा वृद्धस्यैकं ममात्मजम् ।
गतवानेव कोपस्य वशं परमदुर्मतिः ॥ १३

पुत्रशोकमनुप्राप्य एष रैभ्यस्य कर्मणा ।
त्यक्ष्यामि त्वां यथा पुत्र प्राणानिष्टतमान् भुवि ॥ १४

यथाऽहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी ।
तथा ज्येष्ठस्सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम् ॥ १५

सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते ।
ये पुत्रशोकमप्राप्य विचरन्ति यथासुखम् ॥ १६

ये तु पुत्रकृताच्छोकाद् भृशं व्याकुलचेतसः ।
[1]शपन्तीष्टान् सखीनार्तास् तेभ्यः पापतरो नु कः ॥ १७

परासुश्च सुतो दृष्टश् शप्तश्चेष्टस्सखा मया ।
ईदृशीमापदं कोऽत्र द्वितीयोऽनुसहिष्यति ॥ १८

लोमशः—

विलप्यैवं बहुविधं भरद्वाजोऽदहत् सुतम् ।
सुसमिद्धं ततः पश्चात् प्रविवेश हुताशनम् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ अस्मिन्नध्याये १९ श्लोकाः ]

---

1. अ—शपन्ति तीक्ष्णशोकेन सखीनपि विमोहिताः । [ पाठान्तरम् ]

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

रैभ्ययाज्येन बृहद्द्युम्नेन सत्रे सहायत्वेन वृतयोरर्वावसुपरावस्वो-स्तदर्थं गमनम् ॥१॥ भार्यादिदृक्षया पुनराश्रमं गतेन परावसुना रात्रौ मृगभ्रमेण कृष्णाजिनसंवीतस्य रैभ्यस्य हननम् ॥२॥ परावसुचोदनया बृहद्द्युम्नेन ब्रह्महत्याग्रस्त इति प्रोत्सार्यमाणेनार्वावसुना तपः प्रसादितसूर्यादिदेवेभ्यो रैभ्यभरद्वाजयवक्रीतोत्थानादिवरग्रहणम् ॥ ३॥ देवैर्यवक्रीतदुःखस्य विनोपदेशं वेदाभ्यासफलत्वकथनपूर्वकं रैभ्यादीनामुज्जीवनम् ॥ ४ ॥

लोमशः—

एतस्मिन्नेव काले तु बृहद्द्युम्नो महीपतिः ।
सत्रमास्ते महाभागो रैभ्ययाज्यः प्रतापवान् ॥ १

तेन रैभ्यस्य वै पुत्रावर्वावसुपरावसू ।
वृतौ सहायौ सत्रार्थे बृहद्द्युम्नेन धीमता ॥ २

तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः ।
आश्रमे त्वभवद्रैभ्यो भार्या चैव परावसोः ॥ ३

अथावलोककोऽगच्छद् गृहानेकः परावसुः ।
कृष्णाजिनेन संवीतं ददर्श पितरं वने ॥ ४

जघन्यरात्रे निद्रान्धस् सावशेषे तमस्यपि ।
चरन्तं गहनेऽरण्ये मेने स पितरं मृगम् ॥ ५

मृगं तु मन्यमानेन पिता चैतेन हिंसितः ।

अकामयानेन तदा शरीरत्राणमिच्छता ॥ ६

स तस्य प्रेतकार्याणि कृत्वा सर्वाणि भारत ।
पुनरागम्य तत् सत्रम् अब्रवीद्भ्रातरं वचः ॥ ७

परावसुः—

इदं कर्म न शक्तस्त्वं वोढुमेकः कथञ्चन ।
मया विहिंसितस्तातो मन्यमानेन वै मृगम् ॥ ८

सोऽस्मदर्थे व्रतं साधु चर त्वं ब्रह्मघातिनाम् ।
समर्थो ह्यहमेकाकी कर्म कर्तुमिदं मुने ॥ ९

अर्वावसुः—

करोतु वै भवान् सत्रं बृहद्द्युम्नस्य धीमतः ।
ब्रह्महत्यां चरिष्येऽहं त्वदर्थं नियतेन्द्रियः ॥ १०

लोमशः—

स तस्य ब्रह्महत्यायाः पारं गत्वा युधिष्ठिर ।
अर्वावसुस्तदा सत्रम् आजगाम पुनर्मुनिः ॥ ११

ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम् ।
बृहद्द्युम्नमुवाचेदं वचनं परिषद्गतम् ॥ १२

परावसुः—

एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति ।
ब्रह्महा प्रेक्षितेनापि पीडयेत् त्वां न संशयः ॥ १३

लोमशः—

प्रेष्यैरुत्सार्यमाणस्तु राजन्नर्वावसुस्तदा ।

न मया ब्रह्महत्येयं कृतेत्याह पुनःपुनः ॥　　१४

उच्यमानोऽसकृत् प्रेष्यैर् ब्रह्महा इति भारत ।

नैव स्म प्रतिजानामि ब्रह्महत्यां स्वयं कृताम् ॥　　१५

मम भ्रात्रा कृतमिदं मया तु परिरक्षितम् ॥　　१५॥

[1]स तथा प्रवदन् क्रोधात् तैश्च प्रेष्यैः प्रभाषितः ।

तूष्णीं जगाम विप्रर्षिर् वनमेव महातपाः ॥　　१६॥

उग्रं तपस्समास्थाय दिवाकरमथाश्रितः ।

रहस्यमेव कृतवान् सूर्यस्य द्विजसत्तमः ॥　　१७॥

मूर्तिमांस्तं ददर्शाथ स्वयमग्रभुगव्ययः ॥　　१८

प्रीतास्तस्याभवन् देवाः कर्मणाऽर्वावसोर्नृप ।

तं ते प्रवरयामासुर् निरस्तश्च परावसुः ॥　　१९

ततो देवा वरं तस्मै ददुरग्निपुरोगमाः ।

स चापि वरयामास पितुरुत्थानमात्मनः ॥　　२०

अनागस्त्वं ततो भ्रातुः पितुश्चास्मरणं वधे ।

भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः ॥　　२१

ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर ।

अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान् ॥　　२२

यवक्रीतः—

समधीतं मया ब्रह्म व्रतानि चरितानि च ॥　　२२॥

---

1. अ-घ—अर्धपञ्चकं नास्ति

कथं नु रैभ्यश्शक्तो माम् अधीयानं तपस्विनम् ।
तथा युक्तेन विधिना निहन्तुममरोत्तमाः ॥ २३॥

देवाः—

मैवं कृथा यवक्रीत यथा वदसि वै मुने ।
विना गुरुमधीता हि सुखाद्वेदास्त्वया मुने ॥ २४॥

अनेन तु गुरून् दुःखात् तोषयित्वा सुकर्मणा ।
कालेन महता क्लेशाद् ब्रह्माधिगतमुत्तमम् ॥ २५॥

लोमशः—

यवक्रीतमथोक्त्वैवं देवास्साग्निपुरोगमाः ।
सञ्जीवयित्वा तान् सर्वान् पुनर्जग्मुस्त्रिविष्टपम् ॥ २६॥

[1]ततो वै स यवक्रीतो ब्रह्मचर्यं चचार ह ।
अष्टादश च वर्षाणि त्रिंशतं च युधिष्ठिर ॥ २७॥

आश्रमस्तस्य पुण्योऽयं सदा पुष्पफलद्रुमः ।
अत्रोष्य राजशार्दूल सर्वपापैः प्रमोक्ष्यसे ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

[ अस्मिन्नध्याये २८॥ श्लोकाः ]

---

1. अ-व—अर्धद्वयं नास्ति

## ॥ चतुर्दशाधिकशततमोऽध्यायः ॥

लोमशचोदनया युधिष्ठिरेण कैलासादिगिरिप्रवेशः ॥

लोमशः—

उशीरबीजं मैनाकं गिरिं श्वेतं च भारत ।
समतीतोऽसि कौन्तेय कालशैलं च पर्वतम् ॥ १

[1]एषा गङ्गा सप्तविधा राजसे भरतर्षभ ॥
स्थानं विरजसं रम्यं यत्राग्निर्नित्यमिध्यते ॥ २

एतद्वै मानुषेणाद्य न शक्यं द्रष्टु[2]मच्युत ।
समाधिं कुरुताव्यग्रास् तीर्थान्येतानि द्रक्ष्यथ ॥ ३

श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम् ।
यत्र माणिचरो यक्षः कुबेरश्चैव यक्षराट् ॥ ४

अष्टाशीतिसहस्राणि गन्धर्वाः स्त्रीविहारिणः ।
तथा किम्पुरुषा राजन् यक्षाश्चैव चतुर्गुणाः ॥ ५

अनेकरूपसंस्थाना नानाप्रहरणाश्च ते ।
यक्षेन्द्रा मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ६

तेषामृद्धिरतीवाग्र्या गतौ वायुसमाश्च ते ।
स्थानात् प्रच्यावयेयुर्ये देवराजमपि ध्रुवम् ॥ ७

---

1. ख—अर्धपञ्चकं नास्ति 2. अ-ख—मुच्यते; क-ग—मप्युत

तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः ।
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ॥ ८

कुबेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः ।
तैस्समेष्याम कौन्तेय यत्तो विक्रमणे भव ॥ ९

कैलासः पर्वतो राजन् षड्योजनशतोच्छ्रितः ।
यत्र देवास्समायान्ति [1]विशाला यत्र भारत ॥ १०

असङ्ख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः ।
नागास्सुपर्णा गन्धर्वाः कुबेरसदनं प्रति ॥ ११

तान् विगाहस्व पार्थाद्य तपसा नियमेन च ।
रक्ष्यमाणो महाराज भीमसेनबलेन च ॥ १२

स्वस्ति ते वरुणो राजा यमश्च समितिञ्जयः ।
गङ्गा च यमुना चैव पर्वताश्च दिशन्तु ते ॥ १३

इन्द्रस्य जाम्बूनदपर्वताद्वै
श्रृणोमि घोषं तव देवि गङ्गे ।
गोपाययैनं सुभगे रिपुभ्यस्
सर्वाजमीढापचितं नरेन्द्रम् ॥ १४

[2]व्रज स्वधर्मं प्रविविक्षतोऽस्य
शैलानिमाञ्छैलसुते नृपस्य ।

---

1. अयं पादोऽनन्तरश्च न स्तः
2. क-ख-ग—भरस्व धर्मं पृथिवीक्षितोऽस्य : घ—भज

शिवप्रदा सर्वसरित्प्रधाने
सभ्रातृकस्येह युधिष्ठिरस्य ॥ १५

युधिष्ठिरः—

अपूर्वोऽयं सम्भ्रमो लोमशस्य
कृष्णां च सर्वे रक्षत मा प्रमादः ।
देशो ह्ययं दुर्गतमो मतो मे
तस्मात् परं शौचमिहाचरध्वम् ॥ १६

वैशम्पायनः—

ततोऽब्रवीद्भीममुदारवीर्यं
कृष्णां यत्तः पालय भीमसेन ।
शून्येऽर्जुनेऽसन्निहिते च तात
त्वमेव कृष्णां भजसेऽसुखेषु ॥ १७

ततो महात्मा यमजौ समेत्य
मूर्धन्युपाघ्राय विमृज्य गात्रे ।
उवाच [1]तान् बाष्पकलं स राजा
मा भैष्ट चागच्छत चाप्रमत्ताः ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[अस्मिन्नध्याये १८ श्लोकाः]

---

1. अ-क-ख-घ—तौ

## ॥ पञ्चदशाधिकशततमोऽध्यायः ॥

भीमेन दुर्गमे गमनाक्षमतया युधिष्ठिरनिवारितानां द्रौपद्यादीनां वहनाङ्गीकारः ॥ १ ॥ पथि कुलिन्दाधिपतिना सुबाहुना पूजितैर्युधिष्ठिरादिभिस्तस्मिन् भृत्यवर्गस्थापनपूर्वकमर्जुनदिदृक्षया गन्धमादनं प्रति प्रस्थानम् ॥ २ ॥

युधिष्ठिरः—

अन्तर्हितानि भूतानि रक्षांसि बलवन्ति च ।
अग्निना तपसा चैव शक्यं गन्तुं वृकोदर ॥ १

[1]संनिवर्तय कौन्तेय क्षुत्पिपासे बलाश्रयात् ।
ततो बलं च दाक्ष्यं च संश्रयस्व कुरूद्वह ॥ २

ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं प्रति ।
बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ॥ ३

[2]अथवा सहदेवेन धौम्येन च सहाभि भो ।
सूतैः पौरोगवैश्चैव सर्वैश्च परिचारकैः ॥ ४

रथैरश्वैश्च ये चान्ये विप्राः क्लेशासहाः पथि ।
सर्वैः परिवृतो वीर निवर्तस्वायतेक्षण ॥ ५

त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः ।
अहं च नकुलश्चैव लोमशश्च महातपाः ॥ ६

---

1. ख—इदमर्धं नास्ति
2. अ—सहदेवेन कौन्तेय कृष्णया च नरोत्तम । [पाठान्तरम्]

ममागमनमाकाङ्क्षन् गङ्गाद्वारे समाहितः ।
वस त्वं द्रौपदीं रक्षन् यावदागमनं मम ॥　　७

भीमः—

राजपुत्री श्रमेणार्ता दुःखार्ता चैव भारत ।
व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ॥　　८

तव चाप्यरतिस्तीव्रा वर्तते तमपश्यतः ।
किं पुनस्सहदेवं च मां च कृष्णां च भारत ॥　　९

रथाः कामं निवर्तन्तां सर्वे च परिचारकाः ।
[1]सूताः पौरोगवाश्चान्ये मन्यते यत्र नो भवान् ॥　　१०

न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् ।
शैलेऽस्मिन् राक्षसाकीर्णे दुर्गेषु विषमेषु च ॥　　११

[2]इयं चापि महाभागा राजपुत्री यतव्रता ।
त्वामृते पुरुषव्याघ्र नोत्सहेत निवर्तितुम् ॥　　१२

तथैव सहदेवोऽयं सततं त्वामनुव्रतः ।
न जातुचिन्निवर्तेत मतज्ञो ह्यहमद्य वै ॥　　१३

अपि चात्र महाराज धनञ्जयदिदृक्षया ।
सर्वे लालसभूताश्च तस्माद्यास्यामहे सह ॥　　१४

यद्यशक्यो भवेद् गन्तुं शैलोऽयं बहुकन्दरः ।

---

1. ख—इदमर्धं नास्ति　　2. ख—अर्धसप्तकं नास्ति

पद्भिरेव गमिष्यामो मा राजन् विमना भव ॥ १५

[1]अहं वहिष्ये पाञ्चालीं यत्रयत्र न शक्ष्यति ।
इति मे वर्तते बुद्धिर् मा राजन् विमना भव ॥ १६

सुकुमारौ महाशूरौ माद्रीनन्दकरावुभौ ।
दुर्गे सन्तारयिष्यामि यद्यशक्तौ भविष्यतः ॥ १७

युधिष्ठिरः—

एवं ते भाषमाणस्य बलं भीमाभिवर्धताम् ।
[2]यस्त्वमुत्सहसे वोढुं द्रौपदीं विपिनेऽध्वनि ॥ १८

यमजौ चापि भद्रं ते नैतदन्यत्र विद्यते ।
बलं च ते यशश्चैव धर्मः कीर्तिश्च वर्धताम् ॥ १९

[3]यस्त्वमुत्सहसे वोढुं भ्रातरौ सह कृष्णया ।
मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥ २०

वैशम्पायनः—

ततः कृष्णाऽब्रवीद्वाक्यं प्रहसन्ती मनोरमा ॥ २०॥

द्रौपदी—

गमिष्यामि न सन्तापः कार्यो मां प्रति भारत ॥ २१

लोमशः—

तपसा शक्यते गन्तुं पर्वतो गन्धमादनः ।
तपसा चैव कौन्तेय सर्वे योक्ष्यामहे वयम् ॥ २२

---

1. ख—अहं रक्ष्यामि पाञ्चालीं मा राजन् विमना भव । मध्ये अर्धं नास्ति
2. क-ग-घ—अर्धद्वयं नास्ति 3. ख—इदमर्धं नास्ति

नकुलस्सहदेवश्च भीमसेनश्च पाण्डव ।
अहं च त्वं च कौन्तेय द्रक्ष्यामश्श्वेतवाहनम् ॥ २३

वैशम्पायनः—

एवं सम्भाषमाणास्ते सुबाहोर्विषयं महत् ।
ददृशुर्मुदिता राजन् प्रभूतगजवाजिमत् ॥ २४

तं किरातगणाकीर्णं कुणिन्दशतसङ्कुलम् ।
[1]हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् ॥ २५

सुबाहुश्चापि तान् दृष्ट्वा पूजया प्रत्यगृह्णत ।
विषयान्ते कुणिन्दानाम् ईश्वरः प्रीतिपूर्वकम् ॥ २६

तत्र ते पूजितास्तेन सर्व एव सुखोषिताः ।
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति ॥ २७

इन्द्रसेनमुखांश्चैव भृत्यान् पौरोगवांस्तथा ।
सूदांश्च पारिबर्हांश्च द्रौपद्यास्सर्व एव हि ॥ २८

राज्ञः कुणिन्दाधिपतेः परिदाय महारथाः ।
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः ॥ २९

ते शनैश्चागमन् सर्वे कृष्णया सह पाण्डवाः ।
तस्मिन् देशे सुसंहृष्टा द्रष्टुकामा धनञ्जयम् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[अस्मिन्नध्याये ३० श्लोकाः]

---

1. ख-ग-घ—इदमर्धं नास्ति

## ॥ षोडशाधिकशततमोऽध्यायः ॥

धनञ्जयादर्शनदुःखितेन युधिष्ठिरेण भीमं प्रति धनञ्जयप्रशंसनपूर्वकं तद्दर्शनाय गन्धमादनप्रवेशनिश्चयः ॥

युधिष्ठिरः—

भीमसेन यमौ चापि पाञ्चाली च निबोधत ।
नास्ति भूतस्य नाशो वै पश्यतास्मान् वनेचरान् ॥ १

दुर्बलाः क्लेशितास्स्मेति यद्ब्रवीथेतरेतरम् ।
अशक्येऽपि व्रजामेति धनञ्जयदिदृक्षया ॥ २

तन्मे दहति गात्राणि तूलराशिमिवानलः ।
यच्च वीरं न पश्यामि धनञ्जयमुपान्तिके ॥ ३

तस्यादर्शनतप्तं मां सानुजं वनमास्थितम् ।
[1-2]याज्ञसेन्याः परामर्शस् स च भीम दहत्युत ॥ ४

नकुलात् पूर्वजं पार्थं न पश्याम्यमितौजसम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ५

[3]तीर्थानि च चरिष्यामि वनानि च सरांसि च ।
चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ॥ ६

पञ्चवर्षाण्यहं वीर सत्यसन्धं धनञ्जयम् ।

---

1. ख—प्रदहत्येव शोकाग्निर् न शान्तिर्हृदयस्य मे । [अधिकः पाठः]
2. ख—अर्धद्वयं नास्ति 3. अ-ख—अर्धचतुष्टयं नास्ति

यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ॥ ७
[1]तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम् ।
न पश्यामि महाबाहुं तेन तप्ये वृकोदर ॥ ८

कृतास्त्रं निपुणं युद्धेऽप्रतिमानं धनुष्मताम् ।
न पश्यामि नरश्रेष्ठं तेन तप्ये वृकोदर ॥ ९

चरन्तमरिसङ्घेषु क्रुद्धं कालमिवानघम् ।
प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनञ्जयम् ॥ १०

यस्य शक्रादनवमो वीर्येण च बलेन च ।
[2]यमयोः पूर्वजः पार्थः श्वेताश्वोऽमितविक्रमः ॥ ११

[3]नारायणसमो युद्धे सत्यसन्धो दृढव्रतः ।
तं ममापश्यतो भीम न शान्तिर्हृदयस्य वै ॥ १२

[4]दुःखेन महताऽऽविष्टः चिन्तयामि दिवानिशम् ।
[5]अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ १३

सततं च क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा ।
ऋजुरार्तप्रपन्नस्य शर्मदाताऽभयस्य च ॥ १४

स तु जिह्मप्रवृत्तस्य माययाऽभिजिघांसतः ।
अपि वज्रधरस्यापि भवेत् कालविषोपमः ॥ १५

---

1. अ—अर्धचतुष्टयं नास्ति
2. ख—इदमर्धं नास्ति
3. अ—अर्धद्वयं नास्ति
4. ख—इदमर्धद्वयं नास्ति
5. क-घ—नास्तीदमर्धम्

[1]सुरैरपि प्रपन्नस्स्यात् सोऽनृशंसः प्रतापवान् ।
[2]सदा जिष्णुरदीनात्मा महात्मा पाकशासनिः ॥ १६

सर्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्दिता ।
आहर्ता सर्वरत्नानां सर्वेषां नस्सुखावहः ॥ १७

रत्नानि यस्य वीर्येण दिव्यान्यासन् पुरा मम ।
[3]बहूनि बहुजातानि यानि प्राप्तस्सुयोधनः ॥ १८

[4]यस्य बाहुबलाद्वीर सभा चासीत् पुरा मम ।
सर्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव ॥ १९

वासुदेवसमं वीर्ये कार्तवीर्यसमं युधि ।
अजेयमजितं युद्धे तं न पश्यामि फल्गुनम् ॥ २०

सङ्कर्षणं महावीर्यं त्वां च भीमापराजितम् ।
अनुयातस्स्ववीर्येण वासुदेवं च शत्रुहा ॥ २१

तस्य बाहुबले तुल्यः प्रभावे च पुरन्दरः ।
जवे वायुर्मुखे सोमः क्रोधे मृत्युस्सनातनः ॥ २२

ते वयं तं नरव्याघ्रं सर्वे वीरं दिदृक्षवः ।

---

1. क-ग—अरेरपि प्रपन्नस्य ; ख—इदमादि अर्धचतुष्टयं नास्ति ;
घ—सुरैरपि प्रपन्नस्य
2. क-ग-घ—दाताऽभयस्य बीभत्सुर् अदीनात्मा महाबलः ।

[ पाठान्तरम् ]

3. अ—अर्धसप्तकं नास्ति
4. ख—अर्धद्वयं नास्ति

प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम् ॥ २३

विशाला बदरी यत्र नरनारायणाश्रमः ।
तं सदाऽध्युषितं यक्षैर् द्रक्ष्यामो गिरिमुत्तमम् ॥ २४

कुबेरनलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
पद्भिरेव गमिष्यामस् तप्यमाना महत्तपः ॥ २५

नातप्ततपसा वीर शक्यो गन्तुं वृकोदर ।
न नृशंसेन लुब्धेन नाप्रशान्तेन भारत ॥ २६

तत्र सर्वे गमिष्यामो भीमार्जुनपदैषिणः ।
सायुधा बद्धनिस्त्रिंशास् सह विप्रैर्महाव्रतैः ॥ २७

मक्षिकान् मशकान् दंशान् व्याघ्रान् सिंहान् सरीसृपान् ।
प्राप्नोत्यनियतः पार्थ नियतस्तान्न पश्यति ॥ २८

ते वयं नियतात्मानः पर्वतं गन्धमादनम् ।
प्रवेक्ष्यामो यताहारा धनञ्जयदिदृक्षया ॥ २९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

[अस्मिन्नध्याये २९ श्लोकाः]

## ॥ सप्तदशाधिकशततमोऽध्यायः ॥

गन्धमादनं प्रस्थितेषु पाण्डवेषु मध्येमार्गं महावृष्टेः प्रादुर्भावः ॥ १ ॥ तदा पादपाद्यन्तरितैस्तैर्वृष्ट्युपरमे पुनः प्रस्थानम् ॥ २ ॥

---

वैशम्पायनः—

ते वीरास्सज्जधन्वानस् तूणीवन्तस्समार्गणाः ।
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ १

परिगृह्य द्विजश्रेष्ठान् ज्येष्ठास्सर्वधनुष्मताम् ।
पाञ्चालीसहिता राजन् प्रययुर्गन्धमादनम् ॥ २

सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्धनि ॥ ३

[1]नित्यपुष्पफलान् रम्यान् देवर्षिगणसेवितान् ।
आत्मन्यात्मानमाधाय वीरा मूलफलाशनाः ॥ ४

चेरुरुच्चावचाकारान् देशान् विषमसङ्कटान् ।
[2]पश्यन्तो मृगजातानि बहूनि विविधानि च ॥ ५

ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम् ।
विविशुस्ते महात्मानः किन्नराचरितं गिरिम् ॥ ६

प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।

---

1. ख—इदमर्धं नास्ति 2. ख—इदमर्धं नास्ति

चण्डवातं महद्वर्षं प्रादुरासीद्दिशां पते ॥ ७

[1]ततो रेणुस्समुद्भूतस् सर्वत्र चलितो महान् ।
पृथिवीं चान्तरिक्षं च द्यां चैव तमसाऽवृणोत् ॥ ८

न च प्रज्ञायते किञ्चिद् आवृते व्योम्नि रेणुना ।
न चापि शेकुस्तत् कर्तुम् अन्योन्यस्याभिभाषणम् ॥ ९

न चान्योन्यमपश्यन्त तमसाऽऽहतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ १०

द्रुमाणां वातरुग्णानां पततां भूतले भृशम् ।
अन्येषां च महीजानां शब्दस्समभवन्महान् ॥ ११

द्यौस्स्वित् पतति किं भूमिर् दीर्यते पर्वतो नु किम् ।
इति ते मेनिरे सर्वे पवनेन विमोहिताः ॥ १२

ते यथाऽनन्तरान् वृक्षान् वल्मीकान् विषमानपि ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे ॥ १३

ततः कार्मुकमुद्यम्य भीमसेनो महाबलः ।
कृष्णामादाय सङ्गत्या तस्थावास्थाय पादपम् ॥ १४
धर्मराजश्च धौम्यश्च निलिल्याते महावने ॥ १४॥

अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते ।
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ॥ १५॥

---

1. ख—इदमर्धं नास्ति

वृक्षानासाद्य सन्त्रस्तास् तत्र तत्र निलिल्यिरे ॥ १६

मन्दीभूते तु पवने तस्मिन् रजसि शाम्यति ।
महद्भिः पृषतैः पूर्णं वर्षमभ्याजगाम ह ॥ १७

ततोऽश्मसहिता धारास् संघ्नण्वन्त्यस्समन्ततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ १८

तत्र सागरगा आपः कीर्यमाणास्समन्ततः ।
प्रादुरासन् सकलुषाः फेनवत्यो विशां पते ॥ १९

[1]वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुताः ।
परिसस्रुर्महानद्यः प्रकर्षन्त्यो महाद्रुमान् ॥ २०

तस्मिन्नुपरते शब्दे वाते च समतां गते ।
व्यपयाते च पानीये प्रादुर्भूते दिवाकरे ॥ २१

[2]सम्प्रहृष्टाश्च ते सर्वे समाजग्मुश्च भारत ।
प्रतस्थुश्च पुनर्वीराः पर्वतं गन्धमादनम् ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

[अस्मिन्नध्याये २२ श्लोकाः]

---

1. ख—अर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति

## ॥ अष्टादशाधिकशततमोऽध्यायः ॥

गन्धमादनप्रयाणे गमनाक्षमतयाऽधः पतनेन मूर्च्छिताया द्रौपद्याः पाण्डवैः सलिलसेचनादिना श्रमापनोदनम् ॥ १ ॥ पाञ्चाल्या दुश्चराध्वसञ्चरणे चिन्तयमाने युधिष्ठिरं प्रति भीमेन स्वेन घटोत्कचेन वा तस्या वहनोक्तिः ॥ २ ॥

वैशम्पायनः—

ततः प्रयातमात्रेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ १

श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली सम्मुमोह यशस्विनी ॥ २

सा मुह्यमाना मोहेन बाहुभ्यामसितेक्षणा ।
वृत्ताभ्यामनुरूपाभ्याम् ऊरू समवलम्बत ॥ ३

सा लम्बमाना सहितावूरू करिकरोपमौ ।
[1]पपात सहसा भूमौ वेपन्ती कदली यथा ॥ ४

तां पतन्तीं वरारोहां भज्यमानां लतामिव ।
नकुलस्समभिद्रुत्य परिजग्राह वीर्यवान् ॥ ५

नकुलः—

राजन् पाञ्चालराजस्य सुतेयमसितेक्षणा ।
श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ॥ ६

---

1. ब—अर्धपञ्चकं नास्ति

अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी ।
आश्वासय महाराज तामिमां श्रमकर्शिताम् ॥ ७

वैशम्पायनः—

राजा तु वचनात्तस्य भृशं दुःखसमन्वितः ।
भीमश्च सहदेवश्च सहसा समुपाद्रवन् ॥ ८

तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशाम् ।
अङ्कमानीय धर्मात्मा पर्यदेवयदातुरः ॥ ९

युधिष्ठिरः—

कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
[1]शेते निपतिता भूमौ सुखार्हा वरवर्णिनी ॥ १०

सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाश् श्यामतां समुपागतम् ॥ ११

किमिदं द्यूतकामेन मया अकृतबुद्धिना ॥
आदाय कृष्णां चरता वने मृगगणाकुले ॥ १२

सुखं प्राप्स्यसि पाञ्चालि पाण्डवान् प्राप्य वै पतीन् ।
इति द्रुपदराजेन पित्रा दत्ताऽऽयतेक्षणा ॥ १३

[2]तत् सर्वं समवाप्यैवं श्रमशोकविकर्शिता ।
शेते निपतिता भूमौ मम पापस्य कर्मणा ॥ १४

1. क-ग—अर्धचतुष्टयं नास्ति
2. ख—इदमर्धं नास्ति

वैशम्पायनः—

तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।
धौम्यप्रभृतयस्सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥　　१५

ते समाश्वासयामासुर् आशीर्भिश्चाप्यपूजयन् ।
रक्षोघ्नांश्च तथा मन्त्राञ् जेपुश्चक्रुश्च ताः क्रियाः ॥　　१६

पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः ।
स्पृश्यमाना करैश्शीतैः पाण्डवैश्च मुहुर्मुहुः ॥　　१७

सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतश्शनैश्शनैः ॥　　१८

परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे ।
तदा विश्रामयामासुर् लब्धसंज्ञां तपस्विनीम् ॥　　१९

तस्या यमौ रक्ततलौ पादौ परपुरञ्जयौ ।
कराभ्यां किणयुक्ताभ्यां शनकैस्संववाहतुः ॥　　२०

पर्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः ।
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥　　२१

युधिष्ठिरः—

बहवः पर्वता भीम विषमा हि सुदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥　　२२

भीमः—

त्वां राजन् राजपुत्रीं च यमौ च पुरुषर्षभौ ।

स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ २३

अथवा यो मया जातो विहगो मद्भुलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥

भीमसेनस्मरणमात्रसन्निहितेन घटोत्कचेन दुर्गमे पथि द्रौपद्या वहनम् ॥ १ ॥ तदनुचरै राक्षसैः पाण्डवानां विप्राणां च वहनम् ॥ २ ॥ सर्वैर्नरनारायणाश्रममेत्य तत्र सुखेन निवासः ॥ ३ ॥

---

युधिष्ठिरः—

धर्मज्ञो बलवाञ् शूरस् सौम्यो राक्षसपुङ्गवः ।
भक्तोऽस्मानौरसः पुत्रो नेतुमर्हति मातरम् ॥ १

तव भीम सुतेनाहं नीतो भीमपराक्रमः ।
अक्षतस्सह पाञ्चाल्या गच्छेयं गन्धमादनम् ॥ २

वैशम्पायनः—

भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
चिन्तयामास बलवान् महाबलपराक्रमम् ॥ ३

[1]घटोत्कचश्च धर्मात्मा स्मृतमात्रः पितुस्तदा ।
कृताञ्जलिरुपातिष्ठद् अभिवाद्याथ पाण्डवान् ॥ ४
उवाच भीमसेनं स पितरं सत्यविक्रमः ॥ ४॥

घटोत्कचः—

आज्ञापय महाबाहो सर्वं कर्तास्म्यसंशयम् ॥ ५

वैशम्पायनः—

तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ।
चिन्तया समनुप्राप्तम् इत्युवाच वृकोदरः ॥ ६

भीमसेनः—

हैडिम्बेय परिश्रान्ता तव माताऽपराजिता ।
त्वं च कामगमस्तात बलवान् वह तां खग ॥ ७
स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा ।
गच्छ नीचिकया गत्या यथा चैनां न पीडयेः ॥ ८

घटोत्कचः—

धर्मराजं च धौम्यं च राजपुत्रीं यमौ तथा ।
एकोऽप्यहमलं वोढुं किमुताद्य सहायवान् ॥ ९
[2]मन्दंमन्दं गमिष्यामि वहन् द्रुपदनन्दिनीम् ॥ ९॥

वैशम्पायनः—

एवमुक्त्वा ततः कृष्णाम् उवाह स घटोत्कचः ।

---

1. अ-घ—षड्र्धानि न सन्ति    2. अ-क-ग-घ—नास्तीदमर्धम्

पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ॥ १०॥

लोमशस्सिद्धमार्गेण जगामानुपमद्युतिः ।
स्वेनैवात्मप्रभावेण द्वितीय इव भास्करः ॥ ११॥

ब्राह्मणांश्चापि तान् सर्वान् समुपादाय राक्षसाः ।
नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः ॥ १२॥

एवं सुरमणीयानि वनान्युपवनानि च ।
आलोकयन्तस्ते जग्मुर् विशालां बदरीमनु ॥ १३॥

ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाबलैः ।
उह्यमाना ययुश्शीघ्रं महदध्वानमल्पवत् ॥ १४॥

देशान् म्लेच्छगणाकीर्णान् [1]नानारत्नाकरायुतान् ।
[2]ददृशुर्गिरिपादांश्च नानाधातुसमाचितान् ॥ १५॥

आसेवितान् किंपुरुषैर् गन्धर्वैश्च समन्ततः ।
विद्याधरैराचरितान् ऋक्षवानरकिन्नरैः ॥ १६॥

भ्रमरैश्चापि हरिणैश् चमरै रुरुभिस्तथा ।
[3]वराहैस्सृमरैश्चापि पृषतैश्च समाचितान् ॥ १७॥

नानाविधैर्मृगैश्चापि उपेतान् सौम्यदर्शनैः ।

---

1. ग—चारणैश्च निषेवितान्—मध्ये अर्धसप्तकं नास्ति
2. अ—नास्तीदमर्धम्
3. ख—एतदर्धमारभ्यार्धपञ्चकं नास्ति

नदीशतसमाकीर्णांश् चारणैश्च निषेवितान् ॥　　१८॥

सदामदैश्च विहगैः पादपैरावृतांस्तथा ।
ते व्यतीत्य बहून् देशान् उत्तरांश्च कुरूनपि ॥　　१९॥

ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ॥　　२०

तस्याभ्याशे तु ददृशुर् नरनारायणाश्रमम् ।
उपेतं पादपैर्दिव्यैस् सदा पुष्पफलोपगैः ॥　　२१

ददृशुस्तां च बदरीं वृत्तस्कन्धां मनोरमाम् ।
रम्यां स्निग्धदलच्छायां श्रिया परमया युताम् ॥　　२२

[1]पत्रैस्स्निग्धैरविरलैर् उपेतां बहुभिश्शुभैः ।
विशालशाखां विस्तीर्णाम् अतिद्युतिसमन्विताम् ॥　　२३

फलैरुपचितैर्दिव्यैर् आचितां स्वादुभिर्भृशम् ।
मधुस्रवैस्सदा दिव्यैर् महर्षिगणसेविताम् ॥　　२४

[2]मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम् ।
अदंशमशके देशे बहुमूलफलोदके ॥　　२५

नलशाद्वलसञ्छन्ने देवगन्धर्वसेविते ।
सुभूमिभागविशदे स्वभावविहिते शुभे ॥　　२६

जातां मृदुशुभस्पर्शे देशेऽपहतकण्टके ।
तामुपेत्य महात्मानस् सह तैर्ब्राह्मणर्षिभिः ॥　　२७

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति

अवतेरुस्ततस्सर्वे रक्षस्स्कन्धगताऽशनैः ॥ २७॥

ततस्तमाश्रमं पुण्यं नरनारायणार्चितम् ।
ददृशुः पाण्डवा राजन् सहिता द्विजपुङ्गवैः ॥ २८॥

तमसा रहितं पुण्यं नापि स्पृष्टं रवेः करैः ।
क्षुत्तृट्शीतोष्णशोकैश्च वर्जितं शोकनाशनम् ॥ २९॥

महर्षिगणसम्बाधं ब्राह्म्या लक्ष्म्या समावृतम् ।
दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः ॥ ३०॥

बलिहोमार्चितं दिव्यं सुसम्मृष्टानुलेपनम् ।
दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ ३१॥

विमलैश्चाग्निशरणैस् स्रुग्भाण्डैराचितं शुभैः ।
महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम् ॥ ३२॥

शरण्यं सर्वभूतानां ब्रह्मघोषविनादितम् ।
[1]दिव्यमाश्रयणीयं तम् आश्रमं श्रमनाशनम् ॥ ३३॥

श्रिया युक्तमनिर्देश्यं देववर्योपसेवितम् ।
फलमूलाशनैर्दान्तैश् चारुकृष्णाजिनाम्बरैः ॥ ३४॥

सूर्यवैश्वानरनिभैस् तपसा भावितात्मभिः ।
ब्रह्मर्षिभिस्तपस्सिद्धैर् यतिभिर्नियतेन्द्रियैः ॥ ३५॥

ब्रह्मभूतैर्महाभागैर् उपेतं ब्रह्मवादिभिः ॥ ३६

1. ख—इदमर्धं नास्ति

सोऽभ्यगच्छन्महातेजास् तानृषीन्नियतश्शुचिः ।
भ्रातृभिस्सहितो धीमान् धर्मपुत्रो युधिष्ठिरः ॥　३७

दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरम् ।
अन्वगच्छन्त सुप्रीता दिव्या देवमहर्षयः ॥　३८

आशीर्वादान् प्रयुञ्जन्तस् स्वाध्यायनियता भृशम् ।
प्रीतास्ते तस्य सत्कारं विधिना पावकोपमाः ॥　३९

उपजह्रुस्सुसलिलं पुष्पमूलफलं शुचि ॥　३९॥

स तैः प्रीत्याऽथ सत्कारम् उपनीतं महात्मभिः ।
प्रयतः प्रतिजग्राह धर्मराजो युधिष्ठिरः ॥　४०॥

तं शक्रसदनप्रख्यं दिव्यगन्धं मनोहरम् ।
प्रीतस्स्वर्गोपमं पुण्यं पाण्डवस्सह कृष्णया ॥　४१॥

[1]विवेश शोभया युक्तं भ्रातृभिश्च महात्मभिः ।
ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सदाऽर्चितः ॥　४२॥

तत्रापश्यत् स धर्मात्मा देवदेवर्षिपूजितम् ।
नरनारायणस्थानं भागीरथ्योपशोभितम् ॥　४३॥

तस्मिन् मधुस्रवफलां ब्रह्मर्षिगणभाविताम् ।
बदरीं तामुपाश्रित्य पाण्डवो भ्रातृभिस्सह ॥　४४॥

---

1. ख—इदमर्धद्वयं नास्ति

मुदा युक्ता महात्मानो रेमिरे तत्रतत्र ते ।
आलोकयन्तो मैनाकं नानाद्विजगणायुतम् ॥ ४५॥

हिरण्यशिखरं चैव मध्ये बिन्दुसरश्शिवम् ।
भागीरथीं सुतीर्थां च शीतामलजलां शिवाम् ॥ ४६॥

मणिप्रवालप्रस्तारां पादपैरुपशोभिताम् ॥
दिव्यपुष्पसमाकीर्णां मनसः प्रीतिवर्धनीम् । ४७॥

वीक्षमाणा महात्मानो विजह्रुस्तत्र पाण्डवाः ॥ ४८

तस्मिन् देवर्षिचरिते देशे परमदुर्गमे ।
भागीरथीजले पुण्ये तर्पयांचक्रिरे पितॄन् ॥ ४९

देवानृषींश्च कौन्तेयाः परमं शौचमास्थिताः ।
तत्र ते तर्पयन्तश्च जपन्तश्च कुरूद्वहाः ॥ ५०

ब्राह्मणैस्सहिताः प्रीत्या न्यवसन् पाण्डुनन्दनाः ॥ ५०॥

कृष्णया तत्र पश्यन्तः क्रीडितान्यमरप्रभाः ।
विचित्राणि नरव्याघ्रा रेमिरे तत्र पाण्डवाः ॥ ५१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[ अस्मिन्नध्याये ५१॥ श्लोकाः ]

---

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

कदाचन पाञ्चाल्या भीमसंनिधाने वायुनानीताद्भुतसौगन्धिकपुष्पदर्शनम् ॥ १ ॥ तया तादृशबहुपुष्पानयनं प्रार्थितेन भीमेन तदर्थगमनम् ॥ २ ॥ भीमस्य मध्येमार्गं स्वमार्गनिरोधकेन हनूमता सह संवादः ॥ ३ ॥

वैशम्पायनः—

तत्र ते पुरुषव्याघ्राः परं शौचं समास्थिताः ।
षड्रात्रमवसन् धीरा धनञ्जयदिदृक्षया ॥ १

तस्मिन् विहरमाणाश्च रममाणाश्च पाण्डवाः ।
मनोज्ञे काननवरे सर्वभूतमनोरमे ॥ २

[1]पादपैः पुष्पविकचैः फलभारावनामितैः ।
शोभितं सर्वतो रम्यं पुंस्कोकिलविराजितम् ॥ ३

स्निग्धपत्रैरविरलैश् शीतच्छायैर्मनोरमैः ॥ ३॥

सरांसि च विचित्राणि प्रसन्नसलिलानि च ।
कमलैस्सोत्पलैस्तत्र भ्राजमानानि सर्वशः ॥ ४॥

पश्यन्तश्चारुरूपाणि रेमिरे तत्र पाण्डवाः ॥ ५

पुण्यगन्धस्सुखस्पर्शो ववौ तत्र समीरणः ।
ह्लादयन् पाण्डवान् सर्वान् सकृष्णान् सद्विजर्षभान् ॥ ६

1. क-ख-ग—अर्धत्रयं नास्ति

ततः पूर्वोत्तरे वायुः प्लवमानो यदृच्छया ।
सहस्रपत्रमर्काभं दिव्यं [1]गन्धमुपावहत् ॥ ७

तदपश्यत पाञ्चाली दिव्यगन्धं मनोरमम् ।
अनिलेनाहृतं भूमौ पतितं जलजं शुचि ॥ ८

तच्छुभा शुभमासाद्य सौगन्धिकमनुत्तमम् ।
अतीव मुदिता राजन् भीमसेनमथाब्रवीत् ॥ ९

द्रौपदी—
पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम् ।
गन्धसंस्थानसम्पन्नं मनसो मम नन्दनम् ॥ १०

इदं च धर्मराजाय प्रदास्यामि परंतप ।
[2]गृह्यापराणि पुष्पाणि बहूनि पुरुषर्षभ ॥ ११

हरेरिदं मे कामाय काम्यकं पुनराश्रमम् ॥ ११॥

यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर ।
[3]तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमम् ॥ १२॥

वैशम्पायनः—
एवमुक्त्वा तु पाञ्चाली भीमसेनमनिन्दिता ।
जगाम धर्मराजाय पुष्पमादाय तत्तदा ॥ १३॥

अभिप्रायं तु विज्ञाय महिष्याः पुरुषर्षभः ।

---

1. क-ख-ग—पुष्पमुदाहरत्; घ—पद्ममुदावहत्
2. क-ख-ग—नास्तीदमर्धम् 3. अ—नास्तीदमर्धम्

प्रियायाः प्रियकामार्थं भीमो भीमपराक्रमः ॥　　१४॥

वातं तमेवाभिमुखो यतस्तत् पुष्पमागतम् ।
आजिहीर्षुर्जगामाशु स पुष्पाण्यपराण्यपि ॥　　१५॥

रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान् ।
मृगराडिव सङ्क्रुद्धः प्रभिन्न इव कुञ्जरः ॥　　१६॥

द्रौपद्याः प्रियमन्विच्छन् स बाहुबलमाश्रितः ।
व्यपेतभयसम्मोहश्शैलमभ्यपतद्बली ॥　　१७॥

लतागुल्मतृणच्छन्नम् इन्द्रनीलशिलातलम् ।
गिरिं चचारारिहरः किन्नराचरितं शुभम् ॥　　१८॥

[1]नानावर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः ।
सर्वभूषणसम्पूर्णं भूमेर्भुजमिवोच्छ्रितम् ॥　　१९॥

सर्वर्तुरमणीयेषु गन्धमादनसानुषु ।
[2]सक्तचक्षुरभिप्रायान् हृदयेनानुचिन्तयन् ॥　　२०॥

पुंस्कोकिलनिनादेषु षट्पदाभिरुतेषु च ।
बद्धश्रोत्रमनश्चक्षुर् जगामामितविक्रमः ॥　　२१॥

जिघ्रमाणो महातेजास् सर्वर्तुकुसुमोद्भवम् ।
गन्धमुद्दाममुद्दामो वने मत्त इव द्विपः ॥　　२२॥

पितुस्संस्पर्शशीतेन गन्धमादनवायुना ।

---

1. ख—इदमर्धं नास्ति　　2. ख—इदमर्धं नास्ति

ह्रियमाणश्रमः पित्रा सम्प्रहृष्टतनूरुहः ॥ २३॥

स यक्षगन्धर्वसुरब्रह्मर्षिगणसेवितम् ।
विलोलयामास तदा पुष्पहेतोररिन्दमः ॥ २४॥

[1]विषमच्छेदरहितैर् अनुलिप्तमिवाङ्गुलैः ।
विमलैर्धातुविच्छेदैः काञ्चनाञ्जनराजतैः ॥ २५॥

सपक्षमिव नृत्यन्तं [2]पर्यासक्तैः पयोधरैः ।
मुक्तासारैरिव चितं च्युतैः प्रस्रवणोदकैः ॥ २६॥

अभिरामनदीकुञ्जनिर्झरोदककन्दरम् ।
अप्सरोनूपुररवैः प्रनृत्तवरबर्हिणम् ॥ २७॥

दिग्वारणविषाणाग्रघृष्टोपलशिलातलम् ।
स्रस्तांशुकमिवाक्षोभ्यैर् निम्नगानिस्सृतैर्जलैः ॥ २८॥

सशष्पकबलैस्स्वस्थैर् अदूरपरिवर्तिभिः ।
श्वापदैश्चापि हरिणैः कौतूहलनिरीक्षितः ॥ २९॥

चालयन्नूरुवेगेन लताजालान्यनेकशः ।
आक्रीडमानः कौन्तेयश् श्रीमान् वायुसुतो ययौ ॥ ३०॥

[3]प्रियामनोरथं कर्तुम् उद्यतश्चारुलोचनः ।
प्रांशुः कनक[4]साराभस् सिंहसंहननो युवा ॥ ३१॥

---

1. ख—इदमर्धं नास्ति
2. क-ख-ग-घ—पार्श्वसक्तैः
3. ख—इदमर्धं नास्ति
4. क-ख-ग-घ—तालाभः

मत्तवारणविक्रान्तो मत्तवारणवेगवान् ।
मत्तवारणताम्राक्षो मत्तवारणवारणः ॥ ३२॥

प्रियपार्श्वोपविष्टाभिर् व्यावृत्ताभिर्विचेष्टितैः ।
यक्षगन्धर्वयोषाभिर् अदृश्याभिर्निरीक्षितः ॥ ३३॥

नवावतारं रूपस्य विक्रीणन्निव पाण्डवः ।
चचार रमणीयेषु गन्धमादनसानुषु ॥ ३४॥

संस्मरन् विविधान् क्लेशान् दुर्योधनकृतान् बहून् ।
द्रौपद्या वनवासिन्याः प्रियं कर्तुं समुद्यतः ॥ ३५॥

सोऽचिन्तयत्तथा पार्थो मयि त्विह विलम्बति ।
पुष्पहेतोः कथं त्वार्यः करिष्यति युधिष्ठिरः ॥ ३६॥

स्नेहान्नरवरो नूनम् अविश्वासाद्वनस्य च ।
नकुलं सहदेवं च न मोक्ष्यति नराधिपः ॥ ३७॥

कथं नु कुसुमावाप्तिस् स्याच्छीघ्रमिति चिन्तयन् ।
प्रतस्थे नरशार्दूलः पक्षिराडिव वेगितः ॥ ३८॥

कम्पयन् पृथिवीं पद्भ्यां निर्घात इव पर्वसु ।
त्रासयन् गजयूथानि वातरंहा वृकोदरः ॥ ३९॥

सिंहव्याघ्रवराहांश्च मर्दयानो महाबलः ।
उन्मूलयन् महावृक्षान् पोथयंश्चोरसा बली ॥ ४०॥

लतावल्लीश्च वेगेन विकर्षन् पाण्डुनन्दनः ।

उपर्युपरि शैलाग्रम् आरुरुक्षुरिव द्विपः ॥ ४१॥
[1]जलावलम्बोऽतिबलं सविद्युदिव तोयदः ।
व्यनदत् स महानादं भीमसेनो महाबलः ॥ ४२॥
तेन शब्देन महता भीमस्य प्रतिबोधिताः ।
गुहां सन्तत्यजुर्व्याघ्रा निलिल्युर्बिलवासिनः ॥ ४३॥
समुत्पेतुः खगास्त्रस्ता मृगयूथानि दुद्रुवुः ।
ऋक्षाश्चोत्ससृजुर्वृक्षान् [2]निपेतुर्हरयो गुहाम् ॥ ४४॥
[3]व्यजृम्भन्त महासिंहा महिषाश्च वनेचराः ॥ ४५
तेन वित्रासिता नागाः करेणुपरिवारिताः ।
तद्वनं सम्परित्यज्य जग्मुरन्यन्महावनम् ॥ ४६
[4]वराहमृगसिंहाश्च महिषाश्च व्यलोकयन् ।
तथा गोमायुसङ्घाश्च प्रणेदुः पृषतैस्सह ॥ ४७
रथाङ्गनामनत्यूहा हंसाः कारण्डवैस्सह ।
शुकाः पारावताः क्रौञ्चा विसंज्ञा भेजिरे दिशः ॥ ४८
तथाऽन्ये दर्पिता नागा महिषाश्च बहाबलाः ।
सिंहव्याघ्राश्च सङ्क्रुद्धा भीममभ्यद्रवन् द्रुतम् ॥ ४९

1. ख—इदमर्धं नास्ति
2. ख—अयं पादोऽनन्तरश्च न स्तः
3. ग—व्यनदत्सुमहानादं भीमसेनो महाबलः । [अधिकः पाठः]
4. ख—इमदर्धं नास्ति

व्यादितास्या महारौद्रा नदन्तो भैरवान् रवान् ॥ ४९॥
ततो वायुसुतो भीमस् स्वबाहुबलमाश्रितः ।
गजेनाघ्नन् गजं भीमस् सिंहं सिंहेन मर्दयन् ॥ ५०॥
तलप्रहारैरन्यांश्च व्यहनत् पाण्डवो बली ॥ ५१

ते हन्यमाना भीमेन सिंहव्याघ्रतरक्षवः ।
सर्वे विसुस्रुवुस्तूर्णं भीमसेनभयार्दिताः ॥ ५२
शकृन्मूत्राणि मुञ्चन्तो भयविभ्रान्तमानसाः ॥ ५२॥
प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतश्श्रीमाञ् शब्देनापूरयन् दिशः ॥ ५३॥
अथापश्यन्महाबाहुर् गन्धमादनसानुषु ।
सुरम्यं कदलीषण्डं बहुयोजनविस्तृतम् ॥ ५४॥
तमभ्यगच्छद्वेगेन क्षोभयिष्यन् महाबलः ।
गजो मदोत्कट इव प्रभञ्जन् विविधान् द्रुमान् ॥ ५५॥
उत्पाट्य कदली[1]षण्डान् बहुतालसमुच्छ्रितान् ।
चिक्षेप तरसा [2]वीरस् समन्ताल्लीलया बली ॥ ५६॥
महान्तमकरोत्तत्र कुरूणामृषभो बली ।
[3]विमर्दन् सुमहातेजा नृसिंह इव दर्पितः ॥ ५७॥

---

1. क-ख-ग-घ—स्कन्धान्
2. क-ख-ग-घ—भीमस् समन्ताद् बलवद्बली
3. ख—अर्धपञ्चकं नास्ति

ततस्तान्यरुजंस्तत्र बहूनि च बृहन्ति च ।
रुरुवारणयूथानि महिषांश्च वनाश्रयान् ॥ ५८॥

प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतश्श्रीमान् नादेनापूरयन् दिशः ॥ ५९॥

तेन शब्देन चोग्रेण [1]भीमसेनरवेण च ।
वनान्तरगतास्सर्वे वित्रेसुर्मृगपक्षिणः ॥ ६०॥

तस्मिन्नथ प्रवृत्ते तु संक्षोभे मृगपक्षिणाम् ।
जलार्द्रपक्षा विहगास् समुत्पेतुस्सहस्रशः ॥ ६१॥

तान् सोदकान् पक्षिगणान् निरीक्ष्य भरतर्षभः ।
तानेवानुसरन् रम्यं ददर्श सुमहत् सरः ॥ ६२॥

काञ्चनैः कदलीषण्डैर् मन्दमारुतकम्पितैः ।
वीज्यमानमिवाक्षोभ्यं तीरात्तीरविसर्पिभिः ॥ ६३॥

तत्सरोऽथावतीर्यैव प्रभूतकमलोत्पलम् ।
महागज इवोद्दामश् चिक्रीड बलवद्बली ॥ ६४॥

[2]वितीर्य तस्मिन् रुचिरम् उत्ततारामितद्युतिः ।
क्षोभयन् सलिलं भीमः प्रभिन्न इव वारणः ॥ ६५॥

[3]ततो जगाहे वेगेन तद्वनं बहुपादपम् ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः
2. ख—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति

दध्मौ च शङ्खं स्वनवत् सर्वप्राणेन पाण्डवः ॥ ६६॥
तस्य शङ्खस्य शब्देन भीमसेनरवेण च ।
बाहुशब्देन चोग्रेण नर्दन्तीव गिरेर्गुहाः ॥ ६७॥
तं वज्रनिष्पेषरवम् आस्फालितरवं भृशम् ।
श्रुत्वा शिलागुहासुप्तैस् सिंहैर्मुक्तो महास्वरः ॥ ६८॥
सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत ।
मुक्तो विरावस्सुमहान् पर्वतो येन पूरितः ॥ ६९॥
तं तु नादं ततश्श्रुत्वा सुप्तो वानरपुङ्गवः ।
व्यजृम्भत महाकायो हनूमान्नाम नामतः ॥ ७०॥
कदलीषण्डमध्यस्थो निद्रावशगतस्तदा ।
तेन शब्देन महता व्यबुध्यत महाकपिः ॥ ७१॥
जृम्भमाणस्सुविपुलं शक्रध्वजमिवोच्छ्रितम् ।
आस्फोटयत लाङ्गूलम् इन्द्राशनिसमस्वनम् ॥ ७२॥
तस्य लाङ्गूलनिनदं पर्वतस्य गुहामुखैः ।
[1]निमित्तीकृत्य गौर्नादम् उत्ससर्ज समन्ततः ॥ ७३॥
स लाङ्गूलरवस्तस्य मत्तवारणनिस्वनम् ।
अन्तर्धाय विचित्रेषु ससार गिरिसानुषु ॥ ७४॥
स भीमसेनस्तच्छ्रुत्वा सम्प्रहृष्टतनूरुहः ।
शब्दप्रभवमन्विच्छंश् चचार कदलीवनम् ॥ ७५॥

---

1. अ—हुङ्कारमिव कौन्तेयो; घ—उद्गारमिव गौर्नर्दन्नु

[1]लाङ्गूलास्फोटशब्दाच्च चलितस्स महागिरिः ।
विघूर्णमानस्सहसा समन्ताच्च व्यशीर्यत ॥ ७६॥

कदलीवनमध्यस्थम् अथ पीने शिलातले ।
स ददर्श महाबाहुर् वानराधिपतिं स्थितम् ॥ ७७॥

विद्युत्सङ्घातदुष्प्रेक्षं विद्युत्सङ्घातपिङ्गलम् ।
[2]विद्युत्सङ्घातसदृशं विद्युत्सङ्घातचञ्चलम् ॥ ७८॥

बाहुस्वस्तिकविन्यस्तपीनवृत्तशिरोधरम् ।
स्कन्धभूयिष्ठकायत्वात् तनुमध्यकटीतटम् ॥ ७९॥

[3]किञ्चिच्चाभुग्नशीर्षेण दीर्घरोमाञ्चितेन च ।
लाङ्गूलेनोर्ध्वगतिना ध्वजेनेव विराजितम् ॥ ८०॥

रक्तोष्ठं ताम्रजिह्वास्यं रक्तकर्णं चलद्भ्रुवम् ।
[4]वदनं वृत्तदंष्ट्राग्रं रश्मिवन्तमिवोडुपम् ॥ ८१॥

वदनाभ्यन्तरगतैश् शुक्लहासैरलङ्कृतम् ।
केसरोत्करसम्मिश्रम् अशोकानामिवोत्करम् ॥ ८२॥

हिरण्मयीनां मध्यस्थं कदलीनां महाद्युतिम् ।
दीप्यमानं स्ववपुषा अर्चिष्मन्तमिवानलम् ॥ ८३॥

निरीक्षन्तमिव त्रस्तं लोचनैर्मधुपिङ्गलैः ॥ ८४

---

1. अ-घ—अर्धद्वयं नास्ति
2. ख-ग—इदमर्धं नास्ति
3. ख—इदमर्धं नास्ति
4. घ—नास्तीदमर्धम्

[1]तं वानरवरं धीमान् अतिकायं महाद्युतिम् ।
स्थितं पन्थानमावृत्य पादं हैमगिरेरिव ॥ ८५

अथोपसृत्य तरसा भीमो भीमपराक्रमः ।
सिंहनादं समकरोद् [2]बाधयिष्यन् महागिरिम् ॥ ८६

तेन शब्देन भीमस्य वित्रेसुर्मृगपक्षिणः ॥ ८६॥

हनूमांश्च महासत्त्व ईषदुन्मील्य लोचने ।
अवैक्षदथ सावज्ञं लोचनैर्मधुपिङ्गलैः ॥ ८७॥

ततः पवनजश्श्रीमान् अन्तिकस्थं महौजसम् ।
स्मितेनाभाष्य कौन्तेयं वानरो नरमब्रवीत् ॥ ८८॥

हनूमान्—

किमर्थं सरुजस्तेऽहं सुखसुप्तः प्रबोधितः ।
ननु नाम त्वया कार्या दया भूतेषु जानता ॥ ८९॥

वयं धर्मं न जानीमस् तिर्यग्योनिं समाश्रिताः ।
मानुषा बुद्धिसम्पन्ना दयां कुर्वन्ति जन्तुषु ॥ ९०॥

क्रूरेषु कर्मसु कथं देहवाक्चित्तदूषिषु ।
धर्मघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ९१॥

न धर्मं त्वं तु जानीषे वृद्धा नोपासितास्त्वया ।

---

1. क-ग—अर्धाष्टकं नास्ति
2. ख-घ—बोधयिष्यन् कपिं तदा

अल्पबुद्धितया वन्यान् उत्सादयसि यन्मृगान् ॥ ९२॥

ब्रूहि कस्त्वं किमर्थं त्वं वनमेतदुपागतः ।
वर्जितं मानुषैर्भावैस् तथैव पुरुषैरपि ॥ ९३॥

क च त्वयाऽद्य गन्तव्यं ब्रवीषि पुरुषर्षभ ।
अतः परमगम्योऽयं पर्वतस्सुदुरारुहः ॥ ९४॥

विना सिद्धगतिं वीर गतिरत्र न विद्यते ।
कारुण्यात् सौहृदाच्चापि वारये त्वां महाबल ॥ ९५॥

[1]नातः परं त्वया शक्यं गन्तुमाश्वसिहि प्रभो ।
स्वागतं सर्वथैवेह तवाद्य मनुजर्षभ ॥ ९६॥

इमान्यमृतकल्पानि मूलानि च फलानि च ।
भक्षयित्वा निवर्तस्व ग्राह्यं यदि वचो मम ॥ ९७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
[ अस्मिन्नध्याये ९७॥ श्लोकाः ]

---

1. अ-घ—अर्धचतुष्टयं नास्ति

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

भीमेन स्वमार्गादपसरणं चोदितेन हनूमता तं प्रति अपसरणे स्वस्या-शक्तिकथनपूर्वकं स्ववालोद्धरणेन गमनचोदना ॥१॥ प्रयतनेऽपि पुच्छचालनेऽप्यसमर्थेन भीमेन तं प्रति तत्प्रभवादिप्रश्नः ॥ २॥ हनूमता स्वप्रभवादि-कथनपूर्वकं रामकथाकथनारम्भः ॥ ३ ॥

वैशम्पायनः—

एतच्छ्रुत्वा वचस्तस्य वानरेन्द्रस्य धीमतः ।
भीमसेनस्तदा वीरः प्रोवाचामितविक्रमः ॥ १

भीमसेनः—

को भवान् किं निमित्तं वा वानरं वपुराश्रितः ।
ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वाऽनुपृच्छति ॥ २

कौरवस्सोमवंशीयः कुन्त्या गर्भेण धारितः ।
पाण्डवो वायुतनयो भीमसेन इति श्रुतः ॥ ३

वैशम्पायनः—

स वाक्यं भीमसेनस्य स्मितेन परिगृह्य तत् ।
हनूमान् वायुतनयो वायुपुत्रमभाषत ॥ ४

हनूमान्—

वानरोऽहं न ते मार्गं प्रदास्यामि यथेप्सितम् ।
साधु गच्छ निवर्तस्व मा त्वं प्राप्स्यसि वैशसम् ॥ ५

भीमसेनः—

[1]वैशसं वाऽस्तु यद्वाऽन्यन्न त्वां पृच्छामि वानर ।
प्रयच्छ मार्गमुत्तिष्ठ मा मत्तः प्राप्स्यसे व्यथाम् ॥ ६

हनूमान्—

नास्ति शक्तिर्ममोत्थातुं जरया [2]कर्शितस्य वै ।
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ७

भीमसेनः—

निर्गुणः परमात्मा च देहं ते व्याप्य तिष्ठते ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ८

यद्यागमैर्न विन्देयं तमहं भूतभावनम् ।
क्रमेयं [3]ज्ञानविज्ञेयं हनूमानिव सागरम् ॥ ९

हनूमान्—

क एष हनुमान्नाम सागरो येन लङ्घितः ।
पृच्छामि त्वां सतां श्रेष्ठ कथ्यतां यदि शक्यते ॥ १०

भीमसेनः—

भ्राता मम गुणैश्श्लाघ्यो बुद्धिसत्त्वबलान्वितः ।
रामायणेऽतिविख्यातश्शूरो वानरपुङ्गवः ॥ ११

रामपत्नीकृते येन शतयोजनमायतः ।
सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः ॥ १२

---

1. घ—अर्धचतुष्टयं नास्ति 2. क-ख-ग—क्लेशितोऽस्म्यहम्
3. क-ख-ग-घ—त्वां गिरिं चैव

स मे भ्राता महावीर्यस् तुल्योऽहं तस्य तेजसा ।
बले पराक्रमे युद्धे शक्तोऽहं तव निग्रहे ॥　　१३

[1]इमं देशमनुप्राप्तः कारणेनास्मि केनचित् ।
उत्तिष्ठ देहि मे मार्गं पश्य वा मेऽद्य पौरुषम् ॥　　१४

मच्छासनमकुर्वाणम् अहं नेष्ये यमक्षयम् ॥　　१४॥

वैशम्पायनः—

विज्ञाय तं बलोन्मत्तं बाहुवीर्येण [2]पाण्डवम् ।
हृदयेनापहास्यैनं हनूमानिदमब्रवीत् ॥　　१५॥

हनूमान्—

प्रसीद नास्ति मे शक्तिर् उत्थातुं जरया हि वै ।
ममानुकम्पया ह्येतत् पुच्छमुत्सार्य गम्यताम् ॥　　१६॥

वैशम्पायनः—

एवमुक्तस्स बलवान् भीमो भीमपराक्रमः ।
सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना ॥　　१७॥

न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥　　१८

उच्चिक्षेप पुनर्दोर्भ्याम् इन्द्रायुधमिवोद्यतम् ।
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥　　१९

उच्चिक्षिप्सुर्विवृत्तास्यस् संहतभ्रुकुटीमुखः ।
खिन्नगात्रोऽभवद्भीमो न चोद्धर्तुं शशाक ह ॥　　२०

1. घ—नास्तीदमर्धम्　　2. क-ख-ग—गर्वितम्

यत्नवानपि च क्षिप्रं लाङ्गूलोद्धरणोद्यतः ।
कपेः पार्श्वगतो भीमस् तस्थौ व्रीडादधोमुखः ॥ २१
प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ २१॥

भीमसेनः—

प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम ॥ २२
सिद्धो वा यदि वा देवो यक्षो गन्धर्व एव वा ।
पृष्टस्सन् को मया ब्रूहि कस्त्वं वानररूपधृत् ॥ २३

हनूमान्—

यत्ते मम परिज्ञाने कौतूहलमरिन्दम ।
तत् सर्वमखिलेन त्वं शृणु पाण्डवनन्दन ॥ २४
अहं केसरिणः क्षेत्रे वायुना जगदायुषा ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥ २५
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।
सर्ववानरराजानौ सर्ववानरयूथपाः ॥ २६
उपतस्थुर्महावीर्या मम चामित्रकर्शन ।
सुग्रीवेणाभवत् प्रीतिर् अनिलस्याग्निना यथा ॥ २७
निकृतस्स ततो भ्रात्रा कस्मिंश्चित् कारणान्तरे ।
ऋश्यमूके मया सार्धं सुग्रीवो न्यवसच्चिरम् ॥ २८
अथ दाशरथिर्वीरो रामो नाम महाबलः ।

विष्णुर्मानुषरूपेण चचार वसुधामिमाम् ॥　　२९

स पितुः प्रियमन्विच्छन् सहभार्यस्सहानुजः ।
सधनुर्धन्विनां श्रेष्ठो दण्डकारण्यमाश्रितः ॥　　३०

तस्य भार्या जनस्थानाच्छलेनापहृता [1]वनात् ।
राक्षसेन्द्रेण बलिना रावणेन दुरात्मना ॥　　३१

सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा ।
वञ्चयित्वा नरश्रेष्ठं मारीचेन तदाऽनघ ॥　　३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
[ अस्मिन्नध्याये ३२ श्लोकाः ]

---

## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

हनूमता भीमं प्रति समग्ररामकथाकथनम् ॥

---

हनूमान्—

हृतदारस्सह भ्रात्रा पत्नीं मार्गन् स राघवः ।
दृष्टवान् शैलशिखरे सुग्रीवं वानरर्षभम् ॥　　१

तेन तस्याभवत् सख्यं [2]राघवस्य महात्मनः ।

---

1. ख-ग—बलात्　　2. घ—सुग्रीवेण ; ख-ग—सुग्रीवस्य

स हत्वा वालिनं राज्ये सुग्रीवं प्रत्यपादयत् ॥ २

स राज्यं प्राप्य सुग्रीवस् सीतायाः परिमार्गणे ।
वानरान् प्रेषयामास शतशोऽथ सहस्रशः ॥ ३

ततो वानरकोटीभिस् सहितोऽहं नरर्षभ ।
सीतां मार्गन् महाबाहो प्रस्थितो दक्षिणां दिशम् ॥ ४

तत्र प्रवृत्तिस्सीताया गृध्रेणैव महात्मना ।
सम्पातिना समाख्याता रावणस्य निवेशने ॥ ५

[1]ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः ।
सम्पातिगृध्राधिगतप्रवृत्तिः पाण्डुनन्दन ॥ ६

शतयोजनविस्तारम् अर्णवं सहसा प्लुतः ।
अहं स्ववीर्यादुत्तीर्य सागरं वरुणालयम् ॥ ७

सुतां जनकराजस्य सीतां सुरसुतोपमाम् ।
दृष्टवान् पाण्डवश्रेष्ठ रावणस्य निवेशने ॥ ८

समेत्य तामहं देवीं वैदेहीं राघवप्रियाम् ।
दग्ध्वा लङ्कामशेषेण साट्टप्राकारतोरणाम् ॥ ९

प्रत्यागतः पुनश्चापि नाम तत्र प्रकाश्य वै ।
मद्वाक्यं चावधार्याशु रामो राजीवलोचनः ॥ १०

अबद्धपूर्वमन्यैस्स बद्ध्वा सेतुं महोदधौ ।

---

1. अ—अर्धद्वयं नास्ति

वृतो वानरकोटीभिस् समुत्तीर्य महार्णवम् ॥ ११
रणे तु राक्षसगणं रावणं लोकरावणम् ।
निशाचरेन्द्रं हत्वा तु सभ्रातृसुतबान्धवम् ॥ १२
राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभीषणम् ।
धार्मिकं भक्तिमन्तं च भक्तानुगतवत्सलः ॥ १३
प्रत्याहृत्य ततस्सीतां नष्टां वेद[1]श्रुतीमिव ।
तयैव सहितस्साध्व्या पत्न्या रामो महायशाः ॥ १४
गत्वा ततो वै त्वरितस् स्वां पुरीं रघुनन्दनः ।
अध्यवात्सीत्ततोऽयोध्याम् अयोध्यां द्विषतां गणैः ॥ १५
ततः प्रतिष्ठितो राज्ये श्रेष्ठो नृपतिसत्तमः ।
वरं मया याचितोऽसौ रामो राजीवलोचनः ॥ १६
यावद्रामकथेयं ते भवेल्लोकेषु शत्रुहन् ।
तावज्जीवेयमित्येवं तथाऽस्त्विति च सोऽब्रवीत् ॥ १७
सीताप्रसादाच्च सदा मामिहस्थमरिन्दम ।
उपतिष्ठन्ति दिव्या वै भोगा भीम यथेप्सिताः ॥ १८
दशवर्षसहस्राणि दशवर्षशतानि च ।
राज्यं कारितवान् रामस् ततस्स त्रिदिवं गतः ॥ १९
तदिहाप्सरसस्तात गन्धर्वाश्च तथाऽनघ ।

---

1. क-ख-ग—श्रुतिं यथा

तस्य रामस्य चरितं गायन्त्यो रमयन्ति माम् ॥ २०

अयं च मार्गो मर्त्यानाम् अगम्यः पुरुषर्षभ ।
ततोऽहं रुद्धवान् मार्गं तवेमं दुर्गमं नरैः ॥ २१

त्वामनेन पथा यान्तं यक्षो वा राक्षसोऽपि वा ।
धर्षयेद्वा शपेद्वाऽपि मा कश्चिदिति कौरव ॥ २२

दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ।
यदर्थमागतश्च त्वम् अत एव सरश्च तत् ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

भीमेन जलधिलङ्घनकालिकपृथुरूपप्रदर्शनं प्रार्थितेन हनूमता तं प्रति एतत्कालिकैस्तात्कालिकरूपस्य दुर्निरीक्षताकथनपूर्वकं कृतादियुगधर्मप्रतिपादनम् ॥

---

वैशम्पायनः—

एवमुक्तो महाबाहुर् भीमसेनः प्रतापवान् ।
प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ॥ १

उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् ॥ १॥

भीमसेनः—

[1]मत्तो धन्यतरो नास्ति यदार्यं दृष्टवानहम् ।
अनुग्रहो मे सुमहान् प्रीतिश्च तव दर्शनात् ॥ २॥
एतत्तु कृतमिमिच्छामि त्वयैवाद्य प्रियं मम ॥ ३
यत्ते तदासीत् प्लवतस् सागरं मकरालयम् ।
रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुम् ॥ ४
[2]एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः ॥ ४॥

वैशम्पायनः—

एवमुक्तस्स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ५

हनूमान्—

न तच्छक्यं त्वया द्रष्टुं रूपमन्येन वा पुनः ।
कालावस्था तदाऽप्यन्या वर्तते सा न साम्प्रतम् ॥ ६
तेन तद्दुष्करं द्रष्टुं मम रूपं नरोत्तम ॥ ६॥
अन्यः कृतयुगे कालस् त्रेतायां द्वापरे परः ।
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ७॥
भूमिर्नद्यो नगाश्शैलास् सिद्धा देवर्षयस्तथा ।
कालं समनुवर्तन्ते यथा भावा युगेयुगे ॥ ८॥
[3]कालंकालं समासाद्य नराणां नरपुङ्गव ।

---

1. घ—अर्धपञ्चकं नास्ति    2. अ-घ—नास्तीदमर्धम्
3. क-ग—नास्तीदमर्धम्

बलवत्सुप्रभावा हि प्रहीयन्त्युद्भवन्ति च ॥ ९॥

तदलं [1]तव तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्तेऽहं कालो हि दुरतिक्रमः ॥ १०॥

भीमसेनः—

युगसङ्ख्यां समाचक्ष्व आचारांश्च युगेयुगे ।
धर्मकामार्थभावांश्च वर्ष्मवीर्ये भवाभवौ ॥ ११॥

हनूमान्—

कृतं नाम युगं श्रेष्ठं यत्र धर्मस्सनातनः ।
[2]कृतमेव न कर्तव्यं तस्मिन् काले युगोत्तमे ॥ १२॥

न तत्र धर्मास्सीदन्ति न क्षीयन्ते च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ १३॥

देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
नासन् कृतयुगे तात तदा न क्रयविक्रयाः ॥ १४॥

न सामऋग्यजुर्वर्णाः क्रिया नासीच्च मानसी ।
अभिध्याय फलं तत्र धर्मस्संन्यास एव च ॥ १५॥

न तस्मिन् युगसंसर्गे व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं [3]नातपो नापि पैशुनम् ॥ १६॥

न विग्रहः कुतस्तन्द्री न द्वेषो नापि वैकृतम् ।

---

1. अ—तं महद्रूपं
2. ख—इदमर्धं नास्ति
3. क-ख-ग-घ—न दर्पो

न भयं न च सन्तापो न चेर्ष्या न च मत्सरः ॥ १७॥
ततः परमकं ब्रह्म सा गतिर्योगिनां परा ।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥ १८॥
ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन् स्वधर्मनिरताः प्रजाः ॥ १९॥
समाश्रमं समाचारं समज्ञानमती बलम् ।
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥ २०॥
एकवेदसमायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः ॥ २१॥
चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ।
अकामफलसंयोगात् प्राप्नुवन्ति परां गतिम् ॥ २२॥
आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ।
कृते युगे चतुष्पादश् चातुर्वर्ण्यस्य शाश्वतः ॥ २३॥
एतत् कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ॥ २४
त्रेतामपि निबोध त्वं यस्मिन् सत्रं प्रवर्तते ।
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ॥ २५
[1]सत्यप्रयुक्ताश्च नराः क्रियाधर्मपरायणाः ।
ततो यज्ञाः प्रवर्तन्ते धर्माश्च विविधाः क्रियाः ॥ २६

---

1. क-ग—अर्धचतुष्टयं नास्ति

त्रेतायां भावसंयुक्ताः क्रियादानफलोदयाः ।
प्रचरन्ति ततो धर्मास् ततो दानपरायणाः ॥ २७

स्वधर्मस्थाः क्रियावन्तो जनास्त्रेतायुगेऽभवन् ॥ २७॥

द्वापरे च युगे धर्मो द्विभागो न प्रवर्तते ।
विष्णुः पीतत्वमायाति चतुर्धा वेद एव च ॥ २८॥

ततोऽन्ये च चतुर्वेदास् त्रि[1]विधा द्वापरे तथा ।
द्विवेदाश्चैकवेदाश्च पूज्या वृद्धास्तथा परे ॥ २९॥

एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया ।
[2]तपोदानप्रवृत्ता च राजसी भवति प्रजा ॥ ३०॥

एकवेदस्य चाज्ञानाद् वेदास्ते बहवस्स्मृताः ।
सत्यस्य चेह विभ्रंशात् सत्ये कश्चिदवस्थितः ॥ ३१॥

सत्यात् प्रच्यवमानानां व्याधयो बहवोऽभवन् ।
कामाश्चोपद्रवाश्चैव तथा दैवतकारिताः ॥ ३२॥

तैरर्द्यमानास्सुभृशं तपस्तप्यन्ति मानवाः ।
कामकामास्स्वर्गकामा यज्ञांस्तन्वन्ति चापरे ॥ ३३॥

एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ।
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ॥ ३४॥

तामसं युगमासाद्य कृष्णो भवति केशवः ॥ ३५

1. क-ख-ग-घ—वेदाश्चापरे तथा 2. ख—इदमर्धं नास्ति

वेदाचाराः प्रशाम्यन्ति धर्मो यज्ञाः क्रियास्तथा ।
ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा ॥ ३६
[1]उपद्रवाश्च वर्धन्ते आधयो व्याधयस्तथा ॥ ३६॥

युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः ।
[2]धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ॥ ३७॥

लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः ।
युगक्षये कृता धर्माः प्रार्थनानि च कुर्वते ॥ ३८॥

एतत् कलियुगं नाम चिरादद्य प्रवर्तते ।
युगानुवर्तनं त्वेतत् कुर्वन्ति चिरजीविनः ॥ ३९॥

यच्च ते मत्परिज्ञाने कौतूहलमरिन्दम ।
अनर्थकेषु को भावः पुरुषस्य विजानतः ॥ ४०॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
युगसङ्ख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम् ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः]

---

1. क—नास्तीदमर्धम्
2. अ—नास्तीदमर्धम्;
घ—धर्मेषु वर्तमानेषु लोको व्यावर्तते पुनः ।　　[ अधिकः पाठः ]

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

हनूमता भीमाय समुद्रतरणकालिकपृथुतरनिजरूपप्रदर्शनपूर्वकं चतुर्वर्णधर्मनिरूपणम् ॥

भीमसेनः—

पूर्वरूपमदृष्ट्वा ते न यास्यामि कथञ्चन ।
यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना ॥ १

वैशम्पायनः—

एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवङ्गमः ।
तद्रूपं दर्शयामास यद्वै सागरलङ्घने ॥ २

[1]भ्रातुः प्रियमभीप्सन् वै चकार सुमहद्वपुः ।
तद्रूपं यत् पुरा तस्य बभूवोदधिलङ्घने ॥ ३

देहस्तस्य ततोऽतीव वर्धयामास विस्तरैः ।
तद्रूपं कदलीषण्डं छादयन्नमितद्युतिः ॥ ४

गिरेश्चोच्छ्रयमासाद्य तस्थौ तत्र स वानरः ।
समुच्छ्रितमहाकायो द्वितीय इव पर्वतः ॥ ५

ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भ्रुकुटीकृतलोचनः ।
दीर्घं लाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः ॥ ६

1. ग—अर्धद्वयं नास्ति

तद्रूपं महद्दालक्ष्य भ्रातुः कौरवनन्दनः ।
विसिष्मिये तदा भीमो जहृषे च पुनःपुनः ॥ ७

तमर्कमिव तेजोभिस् सौवर्णमिव पर्वतम् ।
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत् ॥ ८

आबभाषे च हनूमान् भीमसेनं स्मयन्निव ।
एतावदिह शक्तस्त्वं रूपं द्रष्टुं ममानघ ॥ ९

हनूमान्—

वर्धेयं चाप्यतो भूयो यावन्मे मनसेप्सितम् ।
भीम शत्रुषु चात्यर्थं वर्धते मूर्तिरोजसा ॥ १०

वैशम्पायनः—

तदद्भुतं महारौद्रं विन्ध्यमन्दरसन्निभम् ।
दृष्ट्वा हनूमतो वर्ष्म सम्भ्रान्तः पवनात्मजः ॥ ११

प्रत्युवाच ततो भीमस् सम्प्रहृष्टतनूरुहः ।
कृताञ्जलिरदीनात्मा हनूमन्तमुपस्थितः ॥ १२

भीमसेनः—

दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो ।
संहरस्व महावीर्य स्वयमात्मानमात्मना ॥ १३

न हि शक्तोऽस्मि त्वां द्रष्टुं दिवाकरमिवोदितम् ।
अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् ॥ १४

विस्मयश्चैव मे वीर सुमहान् मनसोऽद्य वै ।

यद्रामस्त्वयि पार्श्वस्थे रावणं स्वयमभ्ययात् ॥ १५

त्वमेव शक्तस्तां लङ्कां सयोधां सहरावणाम् ।
स्वबाहुबलमाश्रित्य विनाशयितुमोजसा ॥ १६

न हि ते किञ्चिदप्राप्यं मारुतात्मज विद्यते ।
न चैव तव पर्याप्तो रावणस्सगणो युधि ॥ १७

वैशम्पायनः—

एवमुक्तस्तु भीमेन हनूमान् प्लवगेश्वरः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा ॥ १८

हनूमान्—

एवमेतन्महाबाहो यथा वदसि भारत ।
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः ॥ १९

मया तु निहते तस्मिन् रावणे लोकरावणे ।
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ॥ २०

तेन वीरेण हत्वा तु सगणं राक्षसाधमम् ।
आनीता स्वपुरं सीता कीर्तिश्च स्थापिता नृषु ॥ २१

तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः ।
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः ॥ २२

एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते ।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः ॥ २३

न च ते तरसा कार्यः कुसुमापचयस्स्वयम् ।
दैवतानि हि मान्यानि पुरुषेण विशेषतः ॥ २४

बलिहोमनमस्कारैर् मन्त्रैश्च भरतर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत ॥ २५

मा तात साहसं कार्षीस् स्वधर्ममनुपालय ।
[1]स्वधर्मस्थापनं धर्मं बुध्यस्वागमयस्व च ॥ २६

न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥ २७

अधर्मो ह्यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ।
विज्ञातव्यो विभागेन यत्र मुह्यन्त्यबुद्धयः ॥ २८

आचारसम्भवो धर्मो धर्माद्वेदास्समुत्थिताः ।
वेदाद्यज्ञास्समुत्पन्ना यज्ञाद्देवाः प्रतिष्ठिताः ॥ २९

वेदाचारविधानोक्तैर् यज्ञैर्धार्यन्ति देवताः ।
[2]बृहस्पत्युशनोक्तैश्च नयैर्धार्यन्ति मानवाः ॥ ३०

बल्याकरवणिज्याभिः कृष्यर्थैर्योनिपोषणैः ।
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ॥ ३१

दण्डनीतिस्त्रयी वार्तास् तिस्रो विद्या विजानताम् ।
ताभिस्सम्यक्प्रवृत्ताभिर् लोकयात्रा विधीयते ॥ ३२

1. ख—इदमर्धं नास्ति
2. ख—इदमर्धं नास्ति

सा चेद्धर्मक्रिया न स्यात् त्रयीधर्ममृते भुवि ।
दण्डनीतिं विना चापि निर्मर्यादमिदं भवेत् ॥ ३३

वार्ताधर्मेऽप्यवर्तन्त्यो विनश्येयुरिमाः प्रजाः ।
[1]सुप्रवृत्तैस्त्रिभिर्ह्येतैर् धर्मैस्सूयन्ति वै प्रजाः ॥ ३४

द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णतः ।
यज्ञाध्ययनदानानि त्रयस्साधारणास्स्मृताः ॥ ३५

याजनाध्यापने चोभे ब्राह्मणानां प्रतिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ॥ ३६

शुश्रूषा च द्विजातीनां शूद्राणां धर्म उच्यते ।
भैक्षहोमव्रतैर्धर्मो यथैव गुरुवासिनाम् ॥ ३७

क्षत्रधर्मोऽत्र कौन्तेय तव धर्माभिरक्षणम् ।
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ॥ ३८

वृद्धैस्सम्मन्त्र्य सद्भिश्च बुद्धिमद्भिश्श्रुतान्वितैः ।
आस्थितश्शाधि दण्डेन व्यसनी परिभूयते ॥ ३९

निग्रहप्रग्रहैस्सम्यग् यदा नेता प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥ ४०

[2]तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च ।
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ॥ ४१

---

1. ख—अर्धद्वयं नास्ति 2. ख–४१—५०—दशश्लोका न सन्ति

राज्ञामुपायश्चारश्च बुद्धिर्मन्त्रः पराक्रमः ।
निग्रहप्रग्रहौ चापि दाक्ष्यं वै कार्यसाधकम् ॥ ४२

साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्याणि समासव्यासयोगतः ॥ ४३

मन्त्रमूला नयास्सर्वे चाराश्च भरतर्षभ ।
सुमन्त्रितनयैस्सद्भिस् तद्विधैस्सह मन्त्रयेत् ॥ ४४

[1]स्त्रिया लुब्धेन मूर्खेण बालेन लघुनाऽपि वा ।
न मन्त्रयीत गुह्यानि येषु चा स्पन्दलक्षणम् ॥ ४५

मन्त्रयेत् सह विद्वद्भिश् शक्तैः कर्माणि कारयेत् ।
स्निग्धैश्च नीतिविन्यासैर् मूर्खान् सर्वत्र वर्जयेत् ॥ ४६

धार्मिकान् धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान् क्रूरेषु कर्मसु ॥ ४७

स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवौ ।
बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम् ॥ ४८

बुद्ध्या सुप्रतिपन्नेषु कुर्यात् साधुपरिग्रहम् ।
निग्रहं चाप्यनिष्टेषु निर्मर्यादेषु कारयेत् ॥ ४९

निग्रहे प्रग्रहे सम्यग् यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥ ५०

---

1. क—अर्धचतुष्टयं नास्ति

[1]एष तेऽभिहितः पार्थ घोरो धर्मो दुरन्वयः ।
तं स्वधर्मविभागेन विनयस्थोऽनुपालय ॥ ५१

तपोधर्मदमेज्याभिर् विप्रा यान्ति तु वै दिवम् ।
क्षत्रिया हि यथा स्वर्गं भुवि बन्धनपालनैः ॥ ५२

दानातिथ्यक्रियाधर्मैर् यान्ति वैश्याश्च सद्गतिम् ।
द्विजशुश्रूषया शूद्रा लभन्ते गतिमुत्तमाम् ॥ ५३

[2]सम्यक्प्रणीय दण्डं हि कामक्रोधविवर्जिताः ।
अलुब्धा मदहीनाश्च सतां यन्ति सलोकताम् ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
[अस्मिन्नध्याये ५४ श्लोकाः]

---

## ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

उपसंहृतपृथुरूपेण हनूमता सपरिष्वङ्गवरदानं विसृष्टेन भीमेन गन्धमादने सौगन्धिकसरोदर्शनम् ॥

---

वैशम्पायनः—

ततस्संहृत्य विपुलं तद्वपुः कामवर्धितम् ।
भीमसेनं पुनर्दोर्भ्यां पर्यष्वजत वानरः ॥ १

---

1. ख—एवं ते विहितः पार्थ विनयस्थोऽनुपालय । मध्ये अर्धं नास्ति
ग—एवं ते विहितः+त्ययः ।

2. ख—अर्धद्वयं नास्ति

परिष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत ।
श्रमो नाशमुपागच्छत् सर्वं चासीत् प्रदक्षिणम् ॥ २

ततः पुनरथोवाच पर्यश्रुनयनो हरिः ।
भीममासाद्य सौहार्दाद् बाष्पगद्गदया गिरा ॥ ३

हनूमान्—

गच्छ वीर स्वमावासं स्मर्तव्योऽस्मि कथान्तरे ।
इहस्थश्च कुरुश्रेष्ठ न निवेद्योऽस्मि कस्यचित् ॥ ४

धनदस्यालयाच्चापि विसृष्टानां महाबल ।
एष काल इहायातुं देवगन्धर्वयोषिताम् ॥ ५

ममापि सफलं चक्षुस् स्मारितश्चास्मि राघवम् ।
मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह ॥ ६

तदस्मद्दर्शनं वीर कौन्तेयामोघमस्तु ते ।
भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत ॥ ७

यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयम् ।
धार्तराष्ट्रा निहन्तव्या यावदेतत् करोम्यहम् ॥ ८

[1]शिलया नगरं वा तन्मर्दितव्यं मया यदि ।
यावदद्य करोम्येतत् कामं तव महाबल ॥ ९

---

1. ख—नास्तीदमर्धम्

वैशम्पायनः—

भीमसेनस्तु तद्वाक्यं श्रुत्वा तस्य महात्मनः ।
प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना ॥ १०

भीमसेनः—

कृतमेव त्वया सर्वं मम वानरपुङ्गव ।
स्वस्ति तेऽस्तु महाबाहो कामये त्वां प्रसीद मे ॥ ११

सनाथाः पाण्डवास्सर्वे त्वया नाथेन वीर्यवन् ।
तवैव तेजसा सर्वान् हनिष्यामो वयं परान् ॥ १२

वैशम्पायनः—

एवमुक्तस्तु हनुमान् भीमसेनमभाषत ।
भ्रातृत्वात् सौहृदाच्चापि करिष्यामि तव प्रियम् ॥ १३

चमूं विगाह्य शत्रूणां शरशक्तिसमाकुलाम् ।
यदा सिंहरवं वीर करिष्यसि महाबल ॥ १४

तदाऽहं बृंहयिष्यामि स्वरेणैव परन्तप ।
यं श्रुत्वैव भविष्यन्ति व्यसवस्तेऽरयो रणे ॥ १५

विजयस्य ध्वजस्थस्सन् नादान्मोक्ष्यामि दारुणान् ।
शत्रूणां ते प्राणहरान् इत्युक्त्वाऽन्तरधीयत ॥ १६

गते तस्मिन् हरिवरे भीमोऽपि बलिनां वरः ।
तेन मार्गेण विपुलं व्यचरद्गन्धमादनम् ॥ १७

अनुस्मरन् वपुस्तस्य श्रियं चाप्रतिमां भुवि ।
माहात्म्यमनुभावं च स्मरन् दाशरथेर्ययौ ॥ १८

स तानि रमणीयानि वनान्युपवनानि च ।
विलोलयामास तदा सौगन्धिकवनेप्सया ॥ १९

फुल्लपद्मविचित्राणि पुष्पितानि वनानि च ।
नानाविहगजुष्टानि पश्यति स्म समन्ततः ॥ २०

मत्तवारणयूथानि पङ्कक्लिन्नानि भारत ।
वर्षतामिव मेघानां बृन्दानि ददृशे तदा ॥ २१

हरिणैश्चपलापाङ्गैर् हरिणीसहितैर्वने ।
सशष्पकवलैश्श्रीमान् पथि दृष्टो द्रुतं ययौ ॥ २२

महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम् ।
व्यपेतभीर्गिरिं शौर्याद् भीमसेनो व्यगाहत ॥ २३

[1]कुसुमानतशाखैश्च ताम्रपल्लवकोमलैः ।
याच्यमान इवारण्ये द्रुमैर्मारुतकम्पितैः ॥ २४

कृतपद्माञ्जलिपुटा मत्तषट्पदसेविताः ।
[2]प्रियतीर्था महामार्गे पद्मिनीस्सोऽतिचक्रमे ॥ २५

सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमो भीमपराक्रमः ॥ २६

1. ख—अर्धद्वयं नास्ति　　2. क-ख-ग-घ—प्रियतीर्थमना

विनिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने ।
काञ्चनैर्विपुलैः पद्मैर् ददर्श विपुलां नदीम् ॥ २७

मत्तकारण्डवयुतां चक्रवाकोपशोभिताम् ।
रचितामिव तस्याद्रेर् मालां विपुलपङ्कजाम् ॥ २८

तस्यां नद्यां महासत्त्वस् सौगन्धिकवनं महत् ।
अपश्यत् प्रीतिजननं बालार्कसदृशद्युति ॥ २९

तद्दृष्ट्वा लब्धुकामस्स मनसा पाण्डुनन्दनः ।
वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

## ॥ षड्विंशत्यधिकशततमोऽध्यायः ॥

सौगन्धिकसरोविविक्षुं भीमं प्रति तद्रक्षिभिः क्रोधवशनामकै राक्षसैस्तच्चिकीर्षितप्रश्नः ॥

---

वैशम्पायनः—

स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
कैलासशिखरे रम्ये ददर्श शुभकानने ॥ १

कुबेरभवनाभ्याशे जातां पर्वतनिर्झरे ।
सुरम्यां विपुलच्छायां नानाद्रुमलतायुताम् ॥ २
हरिताम्बुजसञ्छन्नां दिव्यां कनकपुष्कराम् ।
पवित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ॥ ३
तत्रामृतसमं शीतं लघु कुन्तीसुतश्शुभम् ।
ददर्श विमलं तोयं शिवं बहु च पाण्डवः ॥ ४
तां तु पुष्करिणीं रम्यां दिव्यसौगन्धिकावृताम् ।
जातरूपमयैः पद्मैश् छन्नां परमगन्धिभिः ॥ ५
वैडूर्यवरनालैश्च बहुचित्रैर्मनोरमैः ।
हंसकारण्डवोद्धूतैस् सृजद्भिरमलं रजः ॥ ६
आक्रीडं यक्षराजस्य कुबेरस्य महात्मनः ।
गन्धर्वैरप्सरोभिश्च देवैश्च परिवारिताम् ॥ ७
सेवितामृषिभिर्दिव्यां यक्षैः किंपुरुषैस्तथा ।
राक्षसैः किंनरैश्चैव गुप्तां वैश्रवणेन च ॥ ८
तां च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः ।
बभूव परमप्रीतो दिव्यं प्रेक्ष्य सरो महत् ॥ ९
तच्च क्रोधवशा नाम राक्षसा राजशासनात् ।
रक्षन्ति शतसाहस्राश् चित्रायुधपरिच्छदाः ॥ १०
ते तु दृष्ट्वैव कौन्तेयम् अजिनैः परिवारितम् ।
रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम् ॥ ११

सायुधं बद्धनिस्त्रिंशम् अशङ्कितमरिंदमम् ।
पुष्करेप्सुमथायान्तम् अन्योन्यमभिचुक्रुशुः ॥ १२

अयं स पुरुषव्याघ्रस् सायुधोऽजिनसंवृतः ।
यच्चिकीर्षुरनुप्राप्तस् तत् कार्यं प्रष्टुमर्हथ ॥ १३

ततस्सर्वे महाबाहुं समासाद्य वृकोदरम् ।
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि ॥ १४

मुनिवेषधरश्चासि चीरवासाश्च लक्ष्यसे ।
यदर्थमभिसम्प्राप्तस् तदाचक्ष्व महाद्युते ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥

भीमेन सौगन्धिकसरोरक्षकान् प्रति स्वचिकीर्षितकथनपूर्वकं सौगन्धिकाहरणे प्रवर्तनम् ॥ १ ॥ तथा सप्रतिषेधं स्वजिघांसूनां तेषां गदया ताडनम् ॥ २ ॥ भीमगदाप्रहारमशक्नुवद्भिस्तैर्भीमवृत्तं निवेदितेन कुबेरेण तदनुमोदनम् ॥ ३ ॥

---

भीमसेनः—

पाण्डवो भीमसेनोऽहं धर्मपुत्रादनन्तरः ।
विशालां बदरीं [1]प्राप्तो भ्रातृभिस्सह राक्षसाः ॥ १

---

1. क-ख-ग-घ—प्राप्तं मां निबोधत

अपश्यत् तत्र पाञ्चाली सौगन्धिकमनुत्तमम् ।
अतीव लोभादेतानि सा बहूनि परीप्सति ॥ २

तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रियेप्सितम् ।
पुष्पहारमनुप्राप्तं निबोधत निशाचराः ॥ ३

राक्षसाः—

आक्रीडोऽयं कुबेरस्य दयितः पुरुषर्षभ ।
नेह शक्यं मनुष्येण विहर्तुं मर्त्य[1]धर्मिणा ॥ ४

देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर ।
आमन्त्र्य यक्षप्रवरं पिबन्ति च हरन्ति च ॥ ५

गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ।
यक्षाधिपस्यानुमते कुबेरस्य महात्मनः ॥ ६

अन्यायेनेह यः कश्चिद् अवमत्य धनेश्वरम् ।
विहर्तुमिच्छेद्दुर्वृत्तस् स विनश्येदसंशयम् ॥ ७

तमनादृत्य पद्मानि जिहीर्षसि बलादिह ।
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ८

भीमसेनः—

राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके ।
दृष्ट्वाऽपि च महाराजं नाहं याचितुमुत्सहे ॥ ९

---

2. क-ख-ग—धर्मणा

न हि याचन्ति राजानो धर्म एष सनातनः ।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथञ्चन ॥ १०

इयं च नलिनी रम्या जाता पर्वतनिर्झरे ।
नेयं भवनमासाद्य कुबेरस्य महात्मनः ॥ ११

तुल्या हि सर्वभूतानाम् इयं वैश्रवणस्य च ।
एवं गतेषु द्रव्येषु कः कं याचितुमर्हति ॥ १२

वैशम्पायनः—

इत्युक्त्वा राक्षसान् सर्वान् भीमसेनो व्यगाहत ।
तां तु पुष्करिणीं वीरः प्रभिन्न इव कुञ्जरः ॥ १३

ततस्स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान् ।
मा मैवमिति सक्रोधैर् भर्त्सयद्भिस्समन्ततः ॥ १४

कदर्थीकृत्य तु स तान् राक्षसान् भीमविक्रमः ।
व्यगाहत महातेजास् ते तं सर्वे न्यवारयन् ॥ १५

गृह्णीत बध्नीत निकृन्ततैनं
पचाम खादाम च भीमसेनम् ।
क्रुद्धा ब्रुवन्तोऽभिययुर्द्रुतं ते
शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ १६

ततस्स गुर्वीं यमदण्डकल्पां
महागदां काञ्चनपट्टबद्धाम् ।

प्रगृह्य तानभ्यपतत्तरस्वी
 ततोऽब्रवीत्तिष्ठत तिष्ठतेति ॥ १७
ते तं तथा तोमरपट्टसाद्यैर्
 व्याविद्धशस्त्रैस्सहसा निपेतुः ।
जिघांसवः क्रोधवशास्सुभीमा
 भीमं समन्तात् परिवव्रुरुग्राः ॥ १८
वातेन कुन्त्यां बलवान् सुजातश्
 शूरस्तरस्वी द्विषतां निहन्ता ।
सत्ये च धर्मे च रतस्सदैव
 पराक्रमे शत्रुभिरप्रधृष्यः ॥ १९
तेषां स मार्गान् विविधान् महात्मा
 निहत्य शस्त्राणि च शात्रवाणाम् ।
यथा प्रवीरान्निजघान वीरः
 परश्शतान् पुष्करिणीसमीपे ॥ २०
ते तस्य वीर्यं च बलं च दृष्ट्वा
 विद्याबलं बाहुबलं तथैव ।
अशक्नुवन्तस्सहितुं समर्था
 हतप्रवीरास्सहसा निवृत्ताः ॥ २१
विदीर्यमाणास्तत एव तूर्णम्
 आकाशमास्थाय विमूढसंज्ञाः ।

कैलासशृङ्गाण्यभिदुद्रुवुस्ते
भीमार्दिताः क्रोधवशाः प्रभग्नाः ॥ २२

स शक्रवद्दानवदैत्यसङ्घान्
विक्रम्य जित्वा च रणेऽरिसङ्घान् ।
विगाह्य तां पुष्करिणीं जितारिः
कामं स जग्राह ततोऽम्बुजानि ॥ २३

[1]ततस्स पीत्वाऽमृतकल्पमम्भो
भूयो बभूवोत्तमवीर्यतेजाः ।
उत्पाट्य जग्राह ततोऽम्बुजानि
सौगन्धिकान्युत्तमगन्धवन्ति ॥ २४

ततस्तु ते क्रोधवशास्समेत्य
धनेश्वरं भीमबलप्रणुन्नाः ।
भीमस्य वीर्यं च बलं च सङ्ख्ये
यथावदाचख्युरतीव दीनाः ॥ २५

तेषां वचस्तत्तु निशाम्य देवः
प्रहस्य रक्षांसि ततोऽभ्युवाच ॥ २५॥

कुबेरः—

गृह्णातु भीमो जलजानि कामं
कृष्णानिमित्तं विदितं ममैतत् ॥ २६

---

1. घ—अर्धद्वयं नास्ति

वैशम्पायनः—

ततोऽभ्यनुज्ञाय धनेश्वरं ते
जग्मुः कुरूणां प्रवरं विशोकाः ।
भीमं च तस्यां ददृशुर्नलिन्यां
यथोपजोषं विहरन्तमेकम् ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
[ अस्मिन्नध्याये २७ श्लोकाः ]

## ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

दुर्निमित्तप्रदर्शिना भीमसेनानवलोकिना च युधिष्ठिरेण द्रौपदींप्रति भीमाभिगतदेशप्रश्नः ॥ १ ॥ द्रौपद्या भीमचिकीर्षितं निवेदितेन युधिष्ठिरेण घटोत्कचसाहाय्येन भीमसमीपगमनम् ॥ २ ॥ कुबेरबहुमानितैस्तैरर्जुनदिदृक्षया तत्रैव सुखेन विहरणम् ॥ ३ ॥

वैशम्पायनः—

ततस्तानि महार्हाणि दिव्यानि भरतर्षभ ।
बहूनि बहुरूपाणि विरजांसि समाददे ॥ १

ततो वायुर्महाञ्शीघ्रो नीचैश्शर्करकर्षणः ।
प्रादुरासीत् खरस्पर्शस् सङ्ग्राममभि[1]चोदयन् ॥ २

1. क-ख-ग-घ—रोचयन्

पपात महती चोल्का सनिर्घाता महाप्रभा ।
निष्प्रभश्चाभवत् सूर्यश् छन्नरश्मिस्तमोवृतः ॥ ३

निर्घाताश्चाभवन् भीमा [1]भीमे विक्रममास्थिते ।
चचाल पृथिवी चापि पांसुवर्षं पपात ह ॥ ४

सलोहिता दिशश्चासन् खरवाचो मृगद्विजाः ।
तमोवृतमभूत् सर्वं न प्राज्ञायत किञ्चन ॥ ५

तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः ।
उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति ॥ ६

सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्मदाः ।
यथा रूपाणि पश्यामि सुव्यक्तो नः पराक्रमः ॥ ७

एवमुक्त्वा ततो राजा वीक्षांचक्रे समन्ततः ।
अपश्यमानो भीमं च धर्मराजो युधिष्ठिरः ॥ ८

तत्र कृष्णां यमौ चापि समीपस्थानरिन्दमः ।
पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे ॥ ९

युधिष्ठिरः—

कच्चिन्न भीमः पाञ्चालि किञ्च कृत्यं चिकीर्षति ।
कृतवानपि वा वीरस् साहसं साहसप्रियः ॥ १०

इमे ह्यकस्मादुत्पाता महासमरशंसिनः ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

दर्शयन्तो भयं तीव्रं प्रादुर्भूतास्समन्ततः ॥ १ १

वैशम्पायनः—

तं तथावादिनं कृष्णा प्रत्युवाच यशस्विनी ।
[1]प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी ॥ १ २

द्रौपदी—

यत्तत् सौगन्धिकं राजन्नाहृतं मातरिश्वना ।
तन्मया भीमसेनस्य प्रीतयाऽद्योपपादितम् ॥ १ ३

अपि चोक्तो मया वीरो यदि पश्येर्बहून्यपि ।
तानि सर्वाणि चादाय शीघ्रमागम्यतामिति ॥ १ ४

स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः ।
प्रागुदीचीं दिशं राजंस् तान्याहर्तुमितो गतः ॥ १ ५

वैशम्पायनः—

उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत् ॥ १ ५॥

युधिष्ठिरः—

गच्छाम सहितास्तूर्णं येन यातो वृकोदरः ॥ १ ६

वहन्तु राक्षसा मुख्यान् यथाश्रान्तान् यथाकृशान् ।
त्वमप्यमरसङ्काश वह कृष्णां घटोत्कच ॥ १ ७

व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः ।
चिरं च तस्य कालोऽयं स च वायुसमो जवे ॥ १ ८

---

1. ख—इदमर्धं नास्ति

तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने ।
उत्पतेदपि चाकाशं निपतेच्च यथेच्छकम् ॥ १९

तमन्वियाम भवतां प्रकाशाद्रजनीचराः ।
पुराऽसौ नापराध्नोति सिद्धानां ब्रह्मवादिनाम् ॥ २०

वैशम्पायनः—

तथेत्युक्त्वा तु ते सर्वे हैडिम्बप्रमुखास्तदा ।
उद्देशज्ञाः कुबेरस्य नलिन्याः पुरुषर्षभ ॥ २१

आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः ।
लोमशेनैव सहिताः प्रययुः प्रीतमानसाः ॥ २२

ते गत्वा सहितास्सर्वे ददृशुस्तत्र कानने ।
प्रफुल्लपङ्कजवतीं नलिनीं सुमनोहराम् ॥ २३

तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ।
ददृशुर्निहतांश्चैव यक्षांश्च विपुलेक्षणान् ॥ २४

उद्यम्याथ गदां दोर्भ्यां नदीतीरे व्यवस्थितम् ।
प्रजासङ्क्षेपसमये दण्डपाणिमिवान्तकम् ॥ २५

तं दृष्ट्वा धर्मराजस्तु परिष्वज्याथ भारत ।
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ॥ २६

साहसं बत भद्रं ते देवानामपि चाप्रियम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ २७

[1]अनुशास्येति कौन्तेयं पद्मानि प्रतिगृह्य च ।
तस्यामेव नलिन्यां ते विजह्रुरमरोपमाः ॥ २८

एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः ।
प्रादुरासन् महाकायास् तस्योद्यानस्य रक्षिणः ॥ २९

ते दृष्ट्वा धर्मराजं च देवर्षिं चैव लोमशम् ।
नकुलं सहदेवं च तथाऽन्यान् ब्राह्मणर्षभान् ॥ ३०

विनयेन नताश्चैव प्रणिपत्य च भारत ।
सान्त्विता धर्मराजेन प्रसेदुः क्षणदाचराः ॥ ३१

विदिताश्च कुबेरस्य ततस्ते नरपुङ्गवाः ।
ऊषुर्नातिचिरं कालं रममाणा महारथाः ॥ ३२

प्रतीक्षमाणा बीभत्सुं गन्धमादनसानुषु ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ ३३ ॥ तीर्थयात्रापर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

---

1. ख—इदमर्धं नास्ति

## ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

गन्धमादनादुत्तरं देशं जिगमिषुणा युधिष्ठिरेण आकाशवाणीश्रवणात्ततः प्रतिनिवृत्य अनुचरैस्सह नरनारायणाश्रमं प्रति पुनरागमनम् ॥

वैशम्पायनः—

तस्मिन्निवसमानोऽथ धर्मराजो युधिष्ठिरः ।
आमन्त्र्य सहितान् भ्रातॄन् इत्युवाच सह द्विजैः ॥ १

युधिष्ठिरः—

दृष्टानि तीर्थान्यस्माभिः पुण्यानि च शिवानि च ।
मनसो ह्लादनीयानि वनानि च पृथक्पृथक् ॥ २

देवैस्सर्वाणि तीर्थानि मुनिभिश्च महात्मभिः ।
यथाक्रममशेषेण द्विजैस्सम्पूजितानि च ॥ ३

[1]ऋषीणां धर्मचरितं तपोधर्मविचेष्टितम् ।
यथाक्रमं विशेषेण लोमशेन प्रभाषितम् ॥ ४

तेषु रम्येषु तीर्थेषु सरित्सु च सरस्सु च ।
[2]इरा सरस्वती सिन्धुर् यमुना नर्मदा तथा ॥ ५

तासां ह्रदेषु पुण्येषु उपस्पृश्य द्विजैश्शुभैः ।
[3]हिमवान् पर्वतश्चैव नानाद्विजगणायुतः ॥ ६

1. ख—इदमर्धद्वयं नास्ति 2. ख—इदमर्धं नास्ति
3. क-ग-घ—हिमवत्पार्श्वतश्चैव द्विजसङ्घायुतान् ह्रदान्। [पाठान्तरम्]
ख—इदमर्धमेव नास्ति

विशाला बदरी दृष्टा नरनारायणाश्रमे ।
यथाक्रमविशेषेण सर्वाण्यायतनानि च ॥ ७

दर्शितानि द्विजेन्द्रेण लोमशेन महात्मना ॥ ७॥

इमं वैश्रवणावासं दुर्गमं गन्धमादनम् ।
कथं भीम गमिष्यामो मतिरत्र विधीयताम् ॥ ८॥

वैशम्पायनः—

एवं ब्रुवति राजेन्द्रे वागुवाचाशरीरिणी ॥ ९

अशरीरिणी—

अशक्यो दुर्गमो गन्तुं पर्वतो गन्धमादनः ।
अनेनैव पथा राजन् प्रतिगच्छ यथागतम् ॥ १०

नरनारायणस्थानं बदरीत्यभिविश्रुतम् ।
बहुपुष्पफलं रम्यम् आश्रमं वृषपर्वणः ॥ ११

तस्माद्गच्छाद्य कौन्तेय सिद्धचारणसेवितम् ॥ ११॥

अतिक्रम्य च तत् पार्थ आर्ष्टिषेणाश्रमं व्रज ।
ततो द्रक्ष्यासि कौन्तेय निवासं धनदस्य तम् ॥ १२॥

वैशम्पायनः—

एतस्मिन्नन्तरे वायुर् दिव्यगन्धवहश्शुभः ।
मनःप्रह्लादनश्शीतः पुष्पवर्षं ववर्ष वै ॥ १३॥

तच्छ्रुत्वा दिव्यमाकाशाद् विस्मयस्समपद्यत ।

ऋषीणां ब्राह्मणानां च पार्थिवानां विशेषतः ॥ १४॥

श्रुत्वा तु महदाश्चर्यं द्विजो धौम्योऽभ्यभाषत ॥ १५

धौम्यः—

न शक्यमुत्तरं गन्तुं प्रतिगच्छाम भारत ॥ १५॥

वैशम्पायनः—

ततो युधिष्ठिरो राजा विस्मयोत्फुल्ललोचनः ।

भीमसेनादिभिस्सर्वैर् भ्रातृभिः परिवारितः ॥ १६॥

पाञ्चाल्या ब्राह्मणैश्चैव न्यवसत् सुसुखं तदा ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

॥ ३३ ॥ तीर्थयात्रापर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

[ अस्मिन्नध्याये १७ श्लोकाः ]

॥ तीर्थयात्रापर्व समाप्तम् ॥

---

## ॥ त्रिंशदधिकशततमोऽध्यायः ॥

(अथ जटासुरवधपर्व)

विप्रवेषेण पाण्डवनिकटचिरवासिना जटासुरेण भीमासन्निधाने द्रौपदीसहितान् युधिष्ठिरादीनपहृत्य पलायनम् ॥१॥ मध्येमार्गं यदृच्छा-समागतेन भीमेन तस्य मारणम् ॥ २ ॥

वैशम्पायनः—

ततस्तान् परिविश्वस्तान् वसतस्तत्र पाण्डवान् ।
गतेषु तेषु रक्षस्सु भीमसेनात्मजेऽपि च ॥ १

रहितान् भीमसेनेन कदाचित्तान्यदृच्छया ।
जहार धर्मराजं वै यमौ कृष्णां च राक्षसः ॥ २

ब्राह्मणो मन्त्रकुशलस् सर्वास्त्रेष्वस्त्रवित्तमः ।
इति ब्रुवन् पाण्डवेयान् पर्युपास्ते स्म नित्यदा ॥ ३

परीप्समानः पार्थानां कलापांश्च धनूंषि च ।
अन्तरं सम्परिप्रेप्सुर् नाम्ना ख्यातो जटासुरः ॥ ४

स भीमसेने निष्क्रान्ते मृगयार्थमरिन्दम ।
अन्यद्रूपं समास्थाय विकृतं भैरवं महत् ॥ ५

गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च ।

प्रातिष्ठत सुदुष्टात्मा त्रीन् गृहीत्वा च पाण्डवान् ॥ ६

सहदेवस्तु यत्नेन ततोऽपक्रम्य पाण्डवः ।
आक्रन्दद्भीमसेनं वै येन यातो वृकोदरः ॥ ७

तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः ॥ ७॥

युधिष्ठिरः—

धर्मस्ते हीयते मूढ न चैनं समवेक्षसे ॥ ८

[1]येऽन्ये केचिन्मनुष्येषु तिर्यग्योनिगतास्सदा ।
गन्धर्वोरगरक्षांसि वयांसि पशवस्तथा ॥ ९

मनुष्यानुपजीवन्ति ततस्त्वमपि जीवसि ॥ ९॥

समृद्धस्यास्य लोकस्य लोको युष्माकमृध्यते ।
शोचन्तमन्विमं लोकम् अनुशोचन्ति देवताः ॥ १०॥

पूज्यमानाश्च वर्धन्ते हव्यकव्यैर्यथाविधि ॥ ११

वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस ।
राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतस्सुखम् ॥ १२

न च राजाऽवमन्तव्यो रक्षसा जात्वनागसि ।
अण्वप्यपकारश्च नास्त्यस्माकं नराशन ॥ १३

योद्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ।
येषां चान्नानि भुञ्जीत यत्र च स्यात् प्रतिश्रयः ॥ १४

1. ख—पङ्क्तयः न सन्ति

[1]स त्वं प्रतिश्रयेऽस्माकं पूज्यमानस्सुखोषितः ।
भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्माञ्जिहीर्षसि ॥ १५

[2]एवमेव वृथाचारो वृथा वृद्धो वृथामतिः ।
वृथा मरणमर्हस्त्वं वृथाऽद्य न भविष्यसि ॥ १६

अथ चेद् दुष्टबुद्धिस्त्वं सर्वैर्धर्मैर्विवर्जितः ।
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर ॥ १७

अथ चेत्त्वमविज्ञाय इदं कर्म करिष्यसि ।
अधर्मं चाप्यकीर्तिं च लोके प्राप्स्यसि केवलम् ॥ १८

एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम् ।
विषमेतत् समालोड्य कुम्भेन प्राशितं त्वया ॥ १९

वैशम्पायनः—

ततो युधिष्ठिरस्तस्य भारकस्समपद्यत ।
स तु भाराभिभूतत्वान्न तथा शीघ्रगोऽभवत् ॥ २०

अथाब्रवीत् स नकुलं द्रौपदीं च युधिष्ठिरः ॥ २०॥

युधिष्ठिरः—

मा भैष्ट राक्षसो मूढो गतिरस्य मया हृता ॥ २१
नातिदूरे महाबाहुर् भविता पवनात्मजः ।

---

1. ख—इदमर्धं नास्ति
2. ख—अर्धद्वयं नास्ति

अस्मिन् मुहूर्ते सम्प्राप्ते न भविष्यति राक्षसः ॥ २२

वैशम्पायनः—

सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतसम् ।
उवाच वचनं राजन् कुन्तीपुत्रं युधिष्ठिरम् ॥ २३

सहदेवः—

राजन् किंनाम तत् कृत्यं क्षत्रियस्य ततोऽधिकम् ।
यद्युद्धेऽभिमुखः प्राणांस् त्यजेच्छत्रून् जयेत वा ॥ २४

एष वाऽस्मान् वयं वैनं युध्यमानाः परंतप ।
सूदयेम महाबाहो देशः कालो ह्ययं नृप ॥ २५

[1]क्षत्रधर्मस्य सम्प्राप्तस् तूर्णं स च हनिष्यते ।
जयन्तः पात्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥ २६

राक्षसे जीवमाने तु रविरस्तमियाद्यदि ।
नाहं ब्रूयां पुनर्जातु क्षत्रियोऽस्मीति भारत ॥ २७

भो भो राक्षस तिष्ठस्व सहदेवोऽस्मि पाण्डवः ।
हत्वा वा मां नयस्वैतान् हतो वा स्वप्स्यसीह वै ॥ २८

वैशम्पायनः—

तथैव तस्मिन् ब्रुवति भीमसेनो यदृच्छया ।

1. ख—इदमर्धं नास्ति

प्रादृश्यत महाबाहुस् सवज्र इव वासवः ॥ २९

सोऽपश्यद्भ्रातरौ तत्र द्रौपदीं च यशस्विनीम् ।

क्षितिस्थं सहदेवं च क्षिपन्तं राक्षसं तदा ॥ ३०

मार्गाच्च राक्षसं मूढं कालोपहतचेतसम् ।

[1]भ्रमन्तं तत्रतत्रैव दैवेन परिमोहितम् ॥ ३१

हृतान् सन्दृश्य तान् भ्रातॄन् द्रौपदीं च महाबलः ।

क्रोधमाहारयद्भीमो राक्षसं चेदमब्रवीत् ॥ ३२

भीमसेनः—

विज्ञातोऽसि मया पूर्वं चेष्टन् शस्त्रपरीक्षणे ।

आस्था तु त्वयि मे नास्ति यतोऽसि न हतस्तदा ॥ ३३

ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ।

प्रिये च रम[2]माणं त्वां न चैवाप्रियकारिणम् ॥ ३४

ब्रह्मरूपेण पिहितं नैव हन्यामनागसम् ।

राक्षसं मन्यमानोऽपि यो हन्यान्नरकं व्रजेत् ॥ ३५

अपक्वस्य च कालेन वधस्तव न विद्यते ॥ ३५॥

1. ख—इदमर्धं नास्ति

2. ख—माणत्वान्नैव हन्यामनागसम्—मध्ये अर्धं नास्ति

[1]कालपक्व इदानीं त्वं यथा ते मतिरीदृशी ।
दत्ता कृष्णापहरणे कालेनाद्भुतकर्मणा ॥ ३६॥
स त्वं कालं समासाद्य तथा तु न भविष्यसि ॥ ३७
बडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव सूत्रस्थः कथमद्य गमिष्यसि ॥ ३८
[2]यतोऽसि प्रस्थितो देशं मनः पूर्वं गतं च ते ।
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः ॥ ३९

वैशम्पायनः—

एवमुक्तस्तु भीमेन राक्षसः कालचोदितः ।
भीत उत्सृज्य तान् सर्वान् युद्धाय समुपस्थितः ॥ ४०
अब्रवीच्च पुनर्भीमं रोषात् प्रस्फुरिताधरः ॥ ४०॥

जटासुरः—

न मे मूढा दिशः पाप त्वदर्थं मे विलम्बनम् ॥ ४१
श्रुता मे राक्षसा ये ये त्वया विनिहता रणे ।
तेषामद्य करिष्यामि तवास्त्रेणोदकक्रियाम् ॥ ४२

---

1. क-ख-ग-घ—नूनमद्य तु संपक्वो
2. ख—इदमर्धं नास्ति

वैशम्पायनः—

एवमुक्तस्तदा भीमस् सृक्किणी परिलेलिहन् ।
स्मयमान इव क्रोधात् साक्षात् कालान्तकोपमः ॥ ४३

ब्रुवन् वै तिष्ठतिष्ठेति क्रोधसंरक्तलोचनः ।
बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसम् ॥ ४४

राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितम् ।
अभिदुद्राव सङ्क्रुद्धो बलो वज्रधरं यथा ॥ ४५

[1]भीमसेनोऽप्यवष्टब्धो नियुद्धायाभवत् स्थितः ।
राक्षसोऽपि च विस्रब्धो बाहुयुद्धमकाङ्क्षत ॥ ४६

वर्तमाने तथा राजन् बाहुयुद्धे सुदारुणे ।
माद्रीपुत्रावभिक्रुद्धावुभावप्यभ्यधावताम् ॥ ४७

न्यवारयत्तौ प्रहसन् कुन्तीपुत्रो वृकोदरः ।
शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ॥ ४८

आत्मना भ्रातृभिश्चाहं धर्मेण सुकृतेन च ।
इष्टेन च शपे राजन् सूदयिष्यामि राक्षसम् ॥ ४९

इत्येवमुक्त्वा तौ वीरौ स्पर्धमानौ परस्परम् ।
बाहुभिस्समसज्जेताम् उभौ रक्षोवृकोदरौ ॥ ५०

1. क-ग—अर्धचतुष्टयं नास्ति

तयोरासीत् सम्प्रहारः क्रुद्धयोर्भीमरक्षसोः ।
अमृष्यमाणयोस्सङ्ख्ये शक्रशम्बरयोरिव ॥ ५१

तौ वीरौ समभिक्रुद्धावन्योन्यं पर्यधावताम् ।
जीमूताविव घर्मान्ते विनदन्तौ महाबलौ ॥ ५२

बभञ्जतुर्महावृक्षान् ऊरुभि[1]र्बलिनां वरौ ।
अन्योन्येनाभिसंरब्धौ परस्परजयैषिणौ ॥ ५३

तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ ५४

आविध्याविध्य तौ वृक्षान् मुहूर्तमितरेतरम् ।
ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ॥ ५५

[2]तस्मिन् देशे यदा वृक्षास् सर्व एव निपातिताः ।
पूगीकृताश्च शतशः परस्परवधेप्सया ॥ ५६

ततश्शिलास्समादाय मुहूर्तमिव भारत ।
महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ॥ ५७

उग्राभिरुग्ररूपाभिर् बृहतीभिः परस्परम् ।
वज्रैरिव महावेगैर् आजघ्नतुरमर्षणौ ॥ ५८

---

1. क-ख-ग-घ—बलिनावुभौ
2. ख—अर्धद्वयं नास्ति

[1–2]अभिहत्य च भूयस्तावन्योन्यं बलदर्पितौ ।
भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ॥ ५९

मुष्टिभिश्च महाघातैर् अन्योन्यमभिपेततुः ।
तयोश्चटचटाशब्दो बभूव सुमहात्मनोः ॥ ६०

ततस्संहृत्य मुष्टिं तु पञ्चशीर्षमिवोरगम् ।
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ॥ ६१

ततश्श्रान्तं तु तद्रक्षो भीमसेनभुजाहतम् ।
सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्तत ॥ ६२

तत एनं महाबाहुर् बाहुभ्याममरोपमः ।
समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ॥ ६३

ततस्सम्पीड्य बलवद् भुजाभ्यां क्रोधमूर्च्छितः ।
तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः ॥ ६४

अरत्निना चाभिहत्य शिरः कायादपहरत् ।
सन्दष्टौष्ठं विवृत्ताक्षं फलं वृक्षादिव च्युतम् ॥ ६५

जटासुरस्य शीर्षं तु भीमसेनबलोद्धृतम् ।
पपात रुधिरादिग्धं संदष्टदशनच्छदम् ॥ ६६

---

3. ख—इदमर्धं नास्ति

4. ग-ब—अर्धत्रयं नास्ति

तं निहत्य महेष्वासो युधिष्ठिरमुपागमत् ।
स्तूयमानो द्विजाग्र्यैस्तु मरुद्भिरिव वासवः ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आरण्यपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥ .

॥ ३४ ॥ जटासुरवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ अस्मिन्नध्याये ६७ श्लोकाः ]

॥ जटासुरवधपर्व समाप्तम् ॥

---

अतः परं यक्षयुद्धपर्व भविष्यति तस्यायमाद्यः श्लोकः—

वैशम्पायनः—

निहते राक्षसे तस्मिन् पुनर्नारायणाश्रमम् ।
अभ्येत्य राजा कौन्तेयो निवासमकरोत् प्रभुः ॥

इति

Printed by V. Ramaswamy Sastrulu & Sons,
at the 'Vavilla'. Press, Madras.—1933.

॥ श्रीः ॥

# महाभारतारण्यपर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ६ | १८ | हस | हंस |
| ६२ | ६ | सङ्कु | सङ्कृ |
| ७२ | ९ | द्रुवेगेन | द्रुगेन |
| ७७ | ९ | गृह्णियिा | गृह्णीया |
| ८५ | १६ | यथावर्षं | यथा वर्षं |
| ९३ | ४ | सोपयामि | सोऽपयामि |
| ९६ | १५ | सात्वत | सात्त्वत |
| ११७ | ३ | विग्धार्तराष्ट्रं | धिग्धार्तराष्ट्रं |
| १२३ | १९ | भागीरथी सालवनेषु | भागीरथीसालवनेषु |
| १८९ | १० | दिव्यास्त्र | दिव्यास्त्र |
| १९० | ८ | १ | । |
| १९६ | १६ | प्रतिष्ठते | प्रतिष्ठिते |
| २१८ | १३ | नियोगद्ब्रह्म | नियोगाद्ब्रह्म |
| २२५ | १३ | पिश्चाङ्के | पितुश्चाङ्के |
| २२७ | ३ | भूतेल | भूतले |
| २३० | ६ | प्रष्णा | प्रेम्णा |
| २३७ | २० | लज्ञा | लज्जा |
| २४५ | ३ | ऽश्रीघ्र | ऽशीघ्र |
| २५६ | १७ | परिवेपकात् | परिवेपकान् |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| २५६ | १७ | १६१ | २६१ |
| २८२ | १ | नरोत्तम् | नरोत्तमम् |
| २९६ | १८ | भूणौ | भूषणौ |
| ३१४ | ४ | त्यक्तांश्रिया | त्यक्तां श्रिया |
| ३१६ | १२ | समाश्वासिहि | समाश्वसिहि |
| ३३६ | ११ | तस्या | तस्यां |
| ३५२ | १० | सम्भाविनीयं | सम्भावनीयं |
| ३६५ | १२ | स्वगृहा | स्वगृहा |
| ३९८ | ४ | मर्हति | मर्हसि |
| | Footnote | मर्हसि | अ-क-ख—मर्हति |
| ३९९ | १० | चार्घ | चार्घ्य |
| ४३४ | ४ | स्ततपसो | तपसो |
| ४५६ | १५ | गोसहस | गोसहस्र |
| ४६१ | १० | स्त्रिभुवनं | स्त्रिभुवनं |
| ४६८ | १ | एाभ | एभि |
| ५०३ | १० | स्त्वयम् | त्वयम् |
| ५७१ | १५ | चकोरम् | चकोरः |
| ५७३ | ७ | सुसंयताचापि | सुसंयता चापि |
| ५७५ | २० | ईश्यते | दृश्यते |
| ५८३ | ४ | सँर्वाल्लो | सर्वाँल्लो |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ६२१ | २ | वयो घृद्धं | वयोवृद्धं |
| ६७९ | ३ | तश्चरणम् | तपश्चरणम् |
| ६८८ | ६ | रैम्यस्य | रैभ्यस्य |
| ६९४ | १० | संत्र | सत्रं |
| ६०९ | ६ | नचान्ठयोन्य | नचान्योन्य |
| ७३० | ११ | रक्तोष्टं | रक्तोष्ठं |